# शुक्लयजुर्वेदसंहिता

## वाजसनेयिमाध्यन्दिनशाखीया ।

श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण
श्रीमन्महीधराचार्यविरचित-
वेददीपेन च सहिता ।
( विविधपरिशिष्ट—मन्त्रकोश सहिता च । )
तस्याः
३१—४० अध्यायात्मकं चतुर्थं खण्डम् ।
पण्डितश्रीरामसकलमिश्रशर्मणा संशोधितम् ।

---

# VÂJASANEYI-SAMHITÂ,

of the
WHITE YAJURVEDA,
With the Commentaries of
Uvvata and Mahîdhara,
( With Appendices & Mantra-Kosha )
PART IV,
Containing Thirtyone to Forty Chapters.
Edited by
PANDIT RAM SAKALA MISRA.

*Published and Sold by H. D. Gupta & Sons,*
PROPRIETORS,
THE CHOWKHAMBA SANSKRIT BOOK DEPOT.
BENARES CITY:
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilasa Press,*
*Benares.*

---

1915.

## एकत्रिंशोऽध्यायः ।

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिꣳ सर्वतः स्पृत्वात्यतिष्ठद् दशाङ्गुलम् ॥ १ ॥

ॐ (१) परमात्मज्ञानानन्दादिगुणाध्यात्मनि प्रभूतः पु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । अतः परं पुरुषमेधकाः पशवः । तत्र श्रुतिः ब्रह्मणे ब्राह्मणमित्यादिकाः पुरुषदेवताविधायिनी आ अध्यायपरिसमाप्तेः तत्र नरिष्ठायै भीमलमित्यादिकानि परमात्मविज्ञानानन्दादिगुणाध्यात्मभूतः पुरुषमेधो यज्ञः प्रजापतिर्लोककालाग्न्यादिवपुः पुरुषोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारिणः शरीरो वा अस्यात्मा भवतीति श्रुतिः सहस्रशीर्षा पुरुष इत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्तेन ब्रह्मणे ब्राह्मणमित्याद्यवयवभूतपुरुषद्वारेणावयवी स्तूयते इदानीं स्तुत्यर्थवचनद्वारेण द्रढयितुमाह अथ यस्मात्पुरुषमेधो नाम त इ वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मापुरुषस्तस्य यदेषु लोकेष्वन्नं तदस्यान्नं मेधस्तद्यदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन् मेध्यान् पुरुषानालभते तस्माद्वेव पुरुषमेधः । अथ विनियोगः सुनियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येतेन षोडशर्चेन षोडशकलं वा इदꣳसर्वꣳसर्वं पुरुषमेधः सर्वस्यास्यै सर्वस्यावरुध्यै इति इदानीमर्थं निवृणोति । इत्थमसीत्थमसीत्युपस्तौत्येवैनमेतन्महयत्येवेति एतद्गुणगुण्यभिधानस्तुतिरित्यर्थः पूर्वव्याख्यायामपरितोषाद् व्याख्यान्तरमाह । अथो यथैनमेतदाह स्वरूपानुवाद इत्यर्थः । इदानीं योजना योऽयं सहस्रशीर्षा पुरुषः सहस्रशब्दो बहुनामसंख्यावचने हि गृह्यमाणे सहस्राक्ष इत्यत्र द्वे सहस्रे स्याताम् । शीर्षं छन्दसीति शीर्षन्नादेशः पूरुषः पुरयिता विज्ञानघनानन्दः सर्वगतः सर्वशक्तिः अनादिर्निधनः परमः शिरोग्रहणं सर्वावयवोपलक्षणार्थं सहस्राक्षग्रहणं सर्वविज्ञा-

रुपमेधो यज्ञः प्रजापतिः लोककालाग्न्यादिवपुः पुरुषोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारिणम् शरीरं यज्ञो वा अस्यात्मा भवतीति श्रुतिः । सहस्रशीर्षा पुरुष इत्यनुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्त्येन ब्रह्मणे ब्राह्मणमित्याद्यवयवभूतपुरुषद्वारेणावयवी स्तूयते । इदानीं स्तुत्यर्थं निर्वचनद्वारेण द्रढयितुमाह । अथ यस्मात्पुरुषमेधो नामेमे वै लोकाः पूरयमेव पुरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात्पुरुषः । तस्य यदेषु लोकेष्वन्नं तदस्यान्नं मेधस्तदस्यैतदन्नं मेधस्तस्मात्पुरुषमेधः । पुरुषसूक्तस्य नारायण ऋषिः पुरुषो देवतानुष्टुप्छन्दः अन्त्या त्रिष्टुप् मोक्षे विनियोगः अस्य भाष्यं शौनको नाम ऋषिरकारीत् । प्रथमं विच्छेदः क्रियाकारकसंबन्धः समासः प्रमेयार्थव्याख्येति सर्वमेतज्जनकाय मोक्षार्थं कथयामासेति सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् सः भूमिम् सर्वतः स्पृत्वा अति अतिष्ठत् दशाङ्गुलम् । सः पुरुषः नारायणाख्यः सर्वतः भुवनकोशस्य भूमिं स्पृत्वा व्याप्य दशाङ्गुलम् अत्य-

---

नेन्द्रियोपलक्षणार्थम् सहस्रपात् संख्यासुपूर्वस्येत्यन्तलोपः । अत्रापि पादग्रहणं कर्मेन्द्रियोपलक्षकं सोऽयं भूमिम् आधारोपलक्षको भूमिशब्दः त्रिलोकं सर्वतः तिर्यगूर्ध्वमधश्च स्पृत्वा स्पृणोतिर्व्याप्तिकर्मा । व्याप्य भूमिशब्दं केचित् पञ्चानां भूतानामुपलक्षकं वर्णयन्ति दशाङ्गुलम् अत्यतिष्ठत् अतिक्रम्य स्थितः नाभेरारभ्य दशाङ्गुलं चातिक्रम्य ब्रह्मणः सद्म शाश्वतम् उक्तं च कतम आत्मेत्युपक्रम्य योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति अथ कस्मान्नाभितः आरभ्य नियम्यते तत्र हि सर्वानामा इति विज्ञानात्मनो हृदयावस्थानं कर्मफलोपभोगार्थमन्तर्यामिनः स्थितिर्नियन्तृत्वेन उक्तं च द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन् योऽभिचाकशीतीति ॥ १ ॥

तिष्ठत् । दश च तानि अङ्गुलानि दशाङ्गुलानीन्द्रियाणि । केचिदन्यथा रोचयन्ति दशाङ्गुलप्रमाणं हृदयावस्थानम् । अपरे तु नासिकाग्रन्दशाङ्गुलमिति किम्भूतोऽसौ सहस्रशीर्षा । अनेकपर्यायः सहस्रशब्दः अनेकानि शिरांसि यस्य स सहस्रशीर्षा पुरुषः । सहस्राक्षः । सहस्राण्यक्षीणि नेत्राणि यस्यासौ सहस्राक्षः सहस्रपात् पादानामङ्गानां सहस्राणि यस्य स सहस्रपात् । एतद्गुणः पुरुषः तद् व्याप्य अतिक्रम्य स्थित इति ॥ १ ॥

रमाकान्तं गिरं नत्वा हेरम्बं शिवमम्बिकाम् ।
एकत्रिंशेऽधुनाध्याये वेददीपो वितन्यते ॥

कात्या० ( २१, १, ११ ) नियुक्तान् ब्रह्माभिष्टौति होतृवदनुवाकेन सहस्रशीर्षेति । अस्यार्थः । नियुक्तान् ब्राह्मणमित्यादिपशून् सहस्रशीर्षेत्यनुवाकेन षोडशर्चेन ब्रह्मा स्तौति होतृवदिति त्रिः प्रथमाम् त्रिरुत्तमामित्याद्युक्तप्रकारेणेत्यर्थः । का० ( २१, १, १७=१८ ) त्रैधातव्यन्ते समारोह्यात्मन्यग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्यवेयाद् ग्रामे वाविवत्सन्नरण्योः त्रैधातवी उदवसानीयेष्टिः तदन्ते अयं ते योनिरित्यग्नी आत्मनि समारोह्य तदुष्माणमास्ये प्रवेश्याद्भ्यः सम्भृत इति षडृचेनानुवाकेन सूर्यमुपस्थाय पश्चादपश्यन् वनं गत्वा ग्रामं नागच्छेत् वानप्रस्थो भवेदित्यर्थः । यद्वा ग्रामे वस्तुमिच्छन् अरण्योरग्नी समारोप्यार्कोपस्थानानन्तरं ग्रामे गत्वा यज्ञान् कुर्यादिति सूत्रार्थः । अथ मन्त्रार्थः । नारायणपुरुषदृष्टा जगद्बीजपुरुषदेवत्याः षोडश ऋचः पञ्चदशानुष्टुभः षोडशी त्रिष्टुप् । ब्रह्मणे ब्राह्मणमित्याद्याः पुरुषमेधरूपस्य परमात्मनोऽवयवाः पूर्वाध्यायान्ते प्रोक्तास्तेषामवयवी पुरुषोऽत्र स्तूयते । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः पुरुषान्न परं किञ्चिदित्यादिश्रुतिषु प्रसिद्धः सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्योऽस्ति । कीदृशः सहस्रशीर्षा सहस्रशब्दो बहुत्ववाची । संख्यावाचकत्वे सहस्राक्ष इति विरोधः स्यात् नेत्रं सहस्रद्वयेन भाव्यम् । ततः

सहस्रमसंख्यानि शीर्षाणि शिरांसि यस्य सः शीर्षश्छन्दसीति ( पा० ६, १, ६० ) शिरःशब्दस्य शीर्षन्नादेशः शिरोग्रहणं सर्वावयवोपलक्षणम् । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तस्यैवेति सहस्रशीर्षत्वम् एवमग्रेऽपि । सहस्राक्षः सहस्रमक्षीणि यस्य सः अक्षिग्रहणं सर्वज्ञानेन्द्रियोपलक्षकम् । सहस्रपात् सहस्रं पादा यस्य संख्यासुपूर्वस्येति ( पा० ५, ४, १४० ) पादस्यान्त्यलोपः पादग्रहणं कर्मेन्द्रियोपलक्षणम् । सः पुरुषो भूमिं ब्रह्माण्डलोकरूपां सर्वतः तिर्यक् ऊर्ध्वमधश्च स्पृत्वा व्याप्य स्पर्णोतिर्व्याप्तिकर्मा यद्वा भूमिशब्दो भूतोपलक्षकः पञ्च भूतानि व्याप्य दशाङ्गुलपरिमितं देशमध्यतिष्ठत् अतिक्रम्यावस्थितः । दशाङ्गुलमित्युपलक्षणम् ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः यद्वा नाभेः सकाशाद्दशाङ्गुलमातिक्रम्य हृदि स्थितः नाभित इति कुतो लभ्यते कतम आत्मेत्युपक्रम्य सोऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिरिति श्रुतेः विज्ञानात्मनो हृदयवस्थानं कर्मफलोपभोगाय अन्तर्यामिणो नियन्तृत्वेन तदुक्तम् ( मुण्ड० ३, १, १ ) द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति इति ॥ स पुरुषोऽत्र देवता । तथा च श्रुतिः ( १३, ६, २, १ ) इमे वै लोकाः पूरयमेव पूरुषो योऽयं पवते सोऽस्यां पुरि शेते तस्मात् पुरुष इति ॥ १ ॥

पुरु॑ष ए॒वेदꣳ सर्वं॒ यद्भू॒तं यच्च॒ भाव्य॑म् । उ॒ता-

मृ॑त॒त्वस्येशा॑नो॒ यदन्ने॑नाति॒रोह॑ति ॥ २ ॥

(१) पुरुष एव । इदम् सर्वम् यत् भूतम् यत् च

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । पुरुष एव यत् वर्त्तमानकालसम्बद्धं स्थावरं जङ्गमं तत् पुरुष एवेत्यवधार्यते । यत् भूतमुत्पन्नम् अतिक्रान्तं यच्च भाव्यं भविष्यत् । तत्सर्वं पुरुष एव तदुक्तं सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति । तर्हि परिणामीत्याशङ्क्याह उतामृतत्व-

भाव्यम् । उत अमृतत्त्वस्य ईशानः यत् अन्नेन अतिरोहति । स एव पुरुषः पूर्वपर्यायविशेषित एवशब्दो नान्यः । इदं वर्तमानकं सर्वं यच्च भूतमतीतम् यच्च भाव्यम्भविष्यत् तस्य कालत्रयस्य ईशानः । न केवलङ्कालत्रयस्य ईशानः । उत अमृतत्वस्यापि मोक्षस्यापि । उतशब्दोऽपिशब्दार्थे कस्मात्कारणात् । यत् अन्नेन अमृतेन अतिरोहति अतिरोधं करोति । सर्वस्येश्वर इति ॥ २ ॥

यत् इदं वर्त्तमानं जगत् तत्सर्वं पुरुष एव यत् भूतमतीतं जगत् यच्च भाव्यं भविष्यं जगत् तदपि पुरुष एव यथास्मिन् कल्पे वर्त्तमानाः प्राणिदेहाः सर्वेऽपि विराट्पुरुषस्यावयवाः तथैवातीतागामिनोरपि कल्पयोर्द्रष्टव्यमिति भावः । उतापि च अमृतत्वस्य देवत्वस्य ईशानः स्वामी स पुरुषः यत् यस्मात् अन्नेन प्राणिनां भोग्येनान्नेन फलेन निमित्तभूतेनातिरोहति स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात् पुरुष एव । प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः । यद्वा सर्वं पुरुषश्चेत्तर्हि परिणामीत्याशङ्क्याह अमृतत्वस्यामरणधर्मस्येशानः मुक्तेरीशः यो हि मोक्षेश्वरो नासौ म्रियत इत्यर्थः किञ्च यत् जीवजातमन्नेनातिरोहति उत्पद्यते सर्वस्य चेशानः । ब्रह्मादिस्तम्बपर्य्यन्तो भूतग्राम उक्तः तस्यान्नेनैव स्थितेः इतः प्रदानाद्धि देवा उपजीवन्तीति श्रुतेः ॥ २ ॥

एतावा॑नस्य महि॒मातो॒ ज्याया॑ँश्च॒ पूरु॑षः । पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ त्रि॒पाद॑स्या॒मृतं॑ दि॒वि ॥ ३ ॥

स्येति । अपि च अमृतत्वस्य अमरणधर्मस्य ईशानः ईश्वरः मुक्तेरीशो मोक्षद इत्यर्थः । यो हि मोक्षेश्वरो नासौ स्वयं म्रियत इति भावः । यदन्नेनातिरोहति । यच्च अन्नेन अतिरोहति प्ररोहति उत्पत्तिं स्थितिं च प्राप्नोति । तस्य सर्वस्य स एवेश्वर इत्यर्थः । ब्रह्मादिस्तम्बपर्यन्तो भूतग्राम इह गृह्यते । तस्य ह्यन्नतः स्थितिः । इतः प्रदानाद्धि देवा उपजीवन्तीति श्रुतिः ॥ २ ॥

(१)एतावानस्य । एतावान् अस्य महिमा अतः ज्यायांश्च पुरुषः । पादः अस्य विश्वाभूतानि त्रिपात् अस्य अमृतन्दिवि । अस्य पुरुषस्य पूर्वोक्तविशेषणविशेषितस्य एतावान् महिमा । एतदेव महत्त्वमस्य अतः कारणात् ज्यायांश्च पुरुषः महानित्यर्थः । कस्मान्महत्त्वमायातम् यस्मात्पादः एकोंऽशः अस्य पुरुषस्य । विश्वा भूतानि विश्वानि चतुर्दशभुवनसमूहे यानि चतुर्द्धा भूतानि तान्येकोंऽशः । त्रिपात्पुनः त्रयांऽशाः अस्य पुरुषस्य अमृतम् ऋग्यजुः सामलक्षणम् आदित्यलक्षणं वा दिवि द्योतते इति ॥३॥

अतीतानागतवर्त्तमानकालसम्बद्धं जगद्यावदस्ति एतावान् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषो विभूतिः न तु वास्तवं स्वरूपम वास्तवपुरुषस्तु अतः अस्मान् महिम्नो जगज्जालात् ज्यायान् च अतिशयेनाधिकः । एतदुभयं स्पष्टीक्रियते अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्त्तीनि प्राणिजातानि पा-

---

(१)अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । एतावानस्य । यदिदमतीतानागतवर्तमानकालसम्बद्धं प्राणिजातम् एतावानस्य पुरुषस्य महिमा विभूतिः प्रभावः एश्वर्यं शक्तिः इति पर्यायाः । दीपस्य प्रभेव अतो महिम्नो जगज्जालात्पुरुषः ज्यायान् महत्तरः । एवं सामान्यत उक्त्वा विशेषतो दर्शयति । विश्वानि भूतानि अतीतानागतवर्तमानभाञ्जि अस्य पादः । अस्य पुरुषस्य त्रिपात् । अमृतं दिवि द्योतते ऋग्यजुःसामभिः त्रिपात् । यद्वा अउम इत्योङ्कारमात्रात्रयं व्याहृतयस्तिस्रः गायत्र्यः पादास्त्रयो वा अस्येति त्रिपात् । आदित्यः । यदुक्तम् ।

आद्यं यदक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता ।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदविदिति ॥

यद्वा यद् योगिभिरात्मत्वेन ध्येयं तदेतद्ब्रह्मापूर्वमननपरमनन्तरमबाह्यमयमात्मा ब्रह्मविज्ञानमानन्दं ब्रह्मेत्येवमादिभिः शब्दैः प्रतिपादितं तत्त्रिपादित्युक्तम् । ये तु गुणाः सत्यसङ्कल्पादयस्ते दिवीत्युक्तम् ॥ ३ ॥

दश्चतुर्थांशः अस्य पुरुषस्यावशिष्टं त्रिपात् स्वरूपम् अमृतं विनाश-रहितम् तत् दिवि द्योतनात्मके स्वप्रकाशे स्वरूपेऽवतिष्ठत इति शेषः । यद्यपि सत्यं ज्ञानमनन्तं ब्रह्मेत्याम्नातस्य परब्रह्मणः इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यम् तथापि जगदिदं ब्रह्मरूपापेक्षयाल्पमिति विवक्षितत्वात् पादत्वोपन्यासः ॥ ३ ॥

त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥

(१)त्रिपादूर्ध्वः । त्रिपात् ऊर्ध्वः उत् ऐत् पुरुषः पादः अस्य इह अभवत् पुनः । ततः विष्वङ् वि अक्रामत् साशनानशने अभि । यस्मादयं पुरुषः त्रिपात् त्र्यंशभूतः ऊर्ध्वः उपरिष्टात् उदैत् देदीप्यमानस्तिष्ठति । अस्य च पुरुषस्य पादः एकोंऽशः इह त्रैलोक्ये बीजभूतश्चतुर्षु भूतेषु अभूत् । ततः तस्मात्कारणात् विष्वङ् भुवनकोशं व्यक्रामत् उत्पन्नमित्यर्थः तस्मादेव पुरुषात् । साशनानशने अभि साशनं स्वर्गम् अनशनं मोक्षम् सर्वं जगत्स्वर्गं प्रति मोक्षम्प्रति च तस्मादेवोत्पन्नमित्यर्थः ॥ ४ ॥

योऽयं त्रिपात् पुरुषः संसारस्पर्शरहितब्रह्मरूपः अयमूर्ध्वः उदैत् अस्मादज्ञानकार्य्यात् संसाराद्बहिर्भूतोऽत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान् । तस्यास्य पादो लेशो जगद्रूपः इह मायायां पुनः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । त्रिपादूर्ध्वः । इदानीं परमात्मनो निश्वासप्रश्वासभूतावुपसंहारसर्गावुच्येते । त्रयः सर्गस्थितिप्रलयक्षणः । पादा यस्य त्रिपात् पुरुषः ऊर्ध्व उदैत् । उदगच्छत् संहारकाले इति शेषः स्थूलानि सूक्ष्मेषु प्रविलाप्य सूक्ष्माणि सूक्ष्मतरेषु एवमात्मा प्रतिष्ठितो भवति ततः अस्य पुरुषस्य पादः पुनः इह अभवत् सर्गकाले इति शेषः । पुनर्ग्रहणमावृत्तीनामानन्त्यं गमयति । ततः पादात् विष्वङ् बहुरूपः साशनानशने प्राणिजाते अभिसन्मुखं व्यक्रामत् विविधं क्रान्तवान् ॥ ४ ॥

अभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति । सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तम् ( भग० १०, ४२ ) विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति । ततो मायायामागत्यानन्तरं विष्वङ् विषु सर्वत्राञ्चतीति विष्वङ् देवतिर्य्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान् किं कृत्वा साशनानशने अभि अभिलक्ष्य अशनेन सह वर्त्तमानं साशनम् अशनादिव्यवहारोपेतं चेतनप्राणिजातम् अनशनं तद्रहितमचेतनं गिरिनद्यादिकम् ते अभिलक्ष्य स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥

**ततो॑ वि॒राड॑जायत वि॒राजो॒ अधि॒ पूरु॑षः । स जा॒तो अत्य॑रिच्यत प॒श्चाद् भूमि॒मथो॑ पु॒रः ॥ ५ ॥**

(१)ततो विराट् । ततः विराट् अजायत विराजः अधिपूरुषः । स जातः अतिअरिच्यत पश्चात् भूमिम् अथो पुरः । तस्मादेव पुरुषात् विश्वोत्पत्तिः । तत्र पूर्वं विराट् अजायत विराजः अधिपूरुषः प्रधानन्तेजः । स क्षेत्रज्ञः ब्रह्मा सृष्टिकृत् जातः सन् अतिरिच्यते सोऽभितः । पश्चात् अस्मात् क्षेत्रज्ञात् ब्रह्मणः भूमिः पृथिव्यादौ जाता उत्पन्ना इति अथोऽनन्तरम् । पुरः शरीराणि पुराणि चतुर्विधानि भूतानि अजायन्त । पुरादीनि तेनैवोत्पादितानि एवमेकोंऽशः तेनैव सर्वं विश्वमुत्पादितामिति ॥ ५ ॥

( १ )'अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । ततो विराट् । सृष्टिक्रमपरेयं कण्डिका तत इति हिरण्यगर्भनिर्देशः । तस्माद्धिरण्यगर्भात् विराजः सकाशात् पुरुषो मनुरजायत । स च मनुर्जातः सन् भूमिं पश्चात् अत्यरिच्यत भूमेः सकाशादतिरिक्तो भूतः । भूमिशब्दः पञ्चभूतोपलक्षणः । हिरण्यगर्भोऽप्येकाकी विराडप्येकाकी मनुरप्येकाकी । तस्यापत्यानि बहून्येतदभिप्रायमेतत् । अथो पुरः अथो अत्र भविष्यत्कालभाविभ्यो वंशेभ्यः अत्यरिच्यतेत्यनुषङ्गः ॥ ५ ॥

विष्वङ् व्यक्रामदिति यदुक्तम् तदेवं प्रपञ्चयते । ततः तस्मादादिपुरुषात् विराट् ब्रह्माण्डदेहोऽजायत जातः विविधं राजन्ते वस्तून्यत्रेति विराट् । विराजः अधि विराडदेहस्योपरि तमेव देहमधिकरणं कृत्वा पुरुषः तद्देहाभिमानी एक एव पुमानजायत सर्ववेदान्तवेद्यः परमात्मा स्वमायया विराडदेहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवदित्यर्थः । एतच्चाथर्वणोत्तरतापनीये ( नृसिंहताप० २, ९ ) स्पष्टमुक्तम । स वा एष भूतानीन्द्रियाणि विराज देवताः कोशांश्च सृष्ट्वात्र प्रविष्ट इव विहरतीति । किञ्च स जातो विराट्पुरुषोऽत्यरिच्यत अतिरिक्तो देवतिर्य्यङ्मनुष्यादिरूपोऽभूत् पश्चाद्देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः । अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः ससर्ज पूर्य्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ॥ ५ ॥

**तस्माद्य॒ज्ञात् स॑र्व॒हुत॒: सम्भृ॑तं पृषदा॒ज्यम् ।**
**प॒शूँस्ताँश्च॑क्रे वाय॒व्या॒नार॒ण्या ग्रा॒म्याश्च॒ ये ॥ ६ ॥**

(१) तस्माद्यज्ञात् । तस्मात् यज्ञात् सर्वहुतः संभृतम् पृषदाज्यम् पशून्ताश्चक्रे वायव्यान् आरण्याः च ये । यथा अग्निष्टोमाख्यात् तस्माद्यज्ञात्सर्वहुतः । संभृतं पृषदाज्यम् तेन वायव्यान् पशून् आरण्या ग्राम्याश्च ये तान् कृतवन्तः ।

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अत्र बहून्यपत्यानि व्याख्यातव्यानि विद्यन्ते ग्रन्थविस्तरात्तु नोच्यन्ते तस्माद् यज्ञात् इदानीं देशकालकर्तृसाधनफलप्रपञ्चोऽस्यैव यज्ञस्य सर्गादावुच्यते तस्मात्पुरुषमेधाख्याद्यज्ञात् सर्वहुतः सर्वमस्मिन् हूयते इति सर्वहुत् यज्ञस्तथाभूतं हि तस्य हविः संभूतं पृषदा तस्मात्पुरुषमेधाख्यात् यज्ञात् संभूतम् उद्धृतं पृषदाज्यं यदुद्धृतं पशून् चक्रे वायव्यान् तान् पशून् चक्रे कृतवान् तान् कान् ये आरण्या ग्राम्याश्च यतस्ते पृषदाज्या उत्पन्ना अतस्तेभ्यः क्षीरादि भवति ॥ ६ ॥

एवमात्मयज्ञात् । सर्वहुतात्पूरितात् उत्पन्नेन योगिनः सर्वान् पशून् सर्वाणि भूतजातानि करतलवत्पश्यन्ति । पश्यन्ति किल ज्ञानतेजसा भूतजातानि ॥ ६ ॥

सर्वं हूयते यस्मिन् स सर्वहुत् तस्मात् पुरुषमेधाख्यात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतम् सम्पादितम् दध्याज्यादिभोग्यजातं सम्पादितमित्यर्थः पुरुषेणेति शेषः । तथा स पुरुषः वायव्यान् वायुदेवतान् तान् प्रसिद्धान् पशून् चक्रे उत्पादितवान् अन्तरिक्षदेवत्याः खलु वै पशव इति श्रुतेः अन्तरिक्षस्य च वायुदेवत्यत्वात् पशूनां वायुदेवत्वम् । तान् कान् ये चारण्याः अरण्ये भवाः हरिणादयः ये च ग्रामभवा गवाश्वादयस्तान् पशून् चक्रे ॥ ६ ॥

तस्मा॑द् य॒ज्ञात् स॑र्व॒हुत॒ ऋच॑ः सामा॑नि जज्ञिरे ।
छन्दा॑ᳪसि जज्ञिरे॒ तस्मा॒द् यजु॒स्तस्मा॑दजायत ॥ ७ ॥

(१) तस्माद्यज्ञात् । तस्मात् यज्ञात्सर्वहुतः ऋचः सामानि जज्ञिरे । छन्दांसि जज्ञिरे तस्मात्यजुः तस्मात् अजायत तस्मादेव यज्ञात्सर्वहुतः प्रज्वालितात् यथा ऋचः सामानि यजूंषि च देवा उत्पादयन्ति छन्दांसि च । एवमात्मयज्ञे प्रणवेन दीपिते स्वयमेव ज्ञानादाधिष्ठितानि भवन्ति । एवं येन परमात्मनि ज्ञायते सर्वे जग्धाः सर्वं वाङ्मयं ज्ञातम्भवतीति ॥ ७ ॥

सर्वहुतः तस्माद्यज्ञात् ऋचः सामानि च जज्ञिरे उत्पन्नानि ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । तस्माद्यज्ञात् । सर्वहुतस्तमाद्यज्ञात् ऋचः सामानि च जज्ञिरे तस्मात् पुरुषमेधात् छन्दांसि गायत्र्यादीनि जज्ञिरे जातानि तस्माद् यजुः अजायत नहि ऋग्यजुः सामभिः छन्दोभिश्च विना यज्ञाः सिध्यन्ति ॥ ७ ॥

छन्दांसि गायत्र्यादीनि जज्ञिरे तस्माद्यजुरप्यजायत । ऋग्यजुःसामभिश्छन्दोभिश्च विना न सिध्यन्ति ॥ ७ ॥

**तस्मा॒दश्वा॑ अजायन्त॒ ये के चो॑भ॒याद॑तः । गावो॑ ह जज्ञि॒रे त॒स्मा॒त्तस्मा॑ज्जा॒ता अ॑जा॒वयः॑ ॥ ८ ॥**

(१) तस्माद्यज्ञात् अश्वाः अजायन्त उत्पन्ना तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयदतः छान्दसं दीर्घम् ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा ह स्फुटं तस्माद्यज्ञात् गावः च जज्ञिरे । किञ्च तस्माद्यज्ञात् अजावयः अजाः अवयश्च जाताः । न हि पशुभिर्विना यज्ञः सिध्येत् ॥ ८ ॥

तस्माद् यज्ञात् अश्वाः अजायन्त उत्पन्नाः तथा ये के चाश्वातिरिक्ता गर्दभादयोऽश्वतराश्च उभयादतः उभयोर्भागयोर्दन्ता येषां ते उभयदतः छान्दसं दीर्घम् ऊर्ध्वाधोभागयोर्दन्तयुक्ताः सन्ति तेऽप्यजायन्त । तथा ह स्फुटं तस्मात् यज्ञात् गावः च जज्ञिरे । किञ्च तस्मात् यज्ञात् अजावयः अजाः अवयश्च जाताः । न हि पशुभिर्विना यज्ञः सिध्येत् ॥ ८ ॥

**तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॒न् पुरु॑षं जा॒तम॑ग्र॒तः । तेन॑ दे॒वा अ॑यजन्त सा॒ध्या ऋष॑यश्च॒ ये ॥ ९ ॥**

(२) तं यज्ञम् । तं यज्ञं बर्हिषि । प्रौक्षन् पुरुषं जातम्

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । तस्मादश्वाः । तस्मात् पुरुषमेधात् अश्वाः अजायन्त इत्यादरार्थम् । ये के च उभयादतः । उभयदन्तयुक्ता इत्यनेनैव ग्रहणात् । ह स्फुटं गावस्तस्माज्जज्ञिरे अजा अवयश्च तस्मात् जाताः नहि पशुभिर्विना यज्ञः सिध्यति सृष्टिः सयज्ञो ह्यसाविति ॥ ८ ॥

(२) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०ना० तद्यथा । तं यज्ञम् । यज्ञसाधने यज्ञशब्दः तं यज्ञसाधनभूतं पुरुषं बर्हिषि

अग्रतः । तेन । देवाः अयजन्त साध्याः । ऋषयश्च । ये ॥
यथेन्द्रेण तत्र यज्ञे अग्निष्टोमाख्ये बर्हिषा प्रोक्षितः पुरुषो जातः ।
तद्वदात्मयज्ञे बर्हिषा प्राणायामेन दीपितेन तस्मिन्पुरुषो जातः
ज्ञानमुत्पद्यते दिव्यम् । अग्रतः प्रथमतः । तेन देवा इन्द्रादयः
साध्याश्च ऋषयश्च यथा अयजन्त । तथा देवा योगिनः कपि
लादयश्च साध्याश्चापरे ऋषयः । ऋषयश्चान्ये तेनैव प्रणवाधिष्ठि-
तेन पुरुषेणात्मयज्ञं कृतवन्त इति ॥ ९ ॥

यज्ञसाधने यज्ञशब्दः यज्ञं यज्ञसाधनभूतं तं पुरुषं पशुत्वमा-
भाव्य यूपे बद्धं बर्हिषि मानसे यज्ञे प्रौक्षन् प्रोक्षितवन्तः प्रोक्षणा-
दिभिः संस्कारैः संस्कृतवन्तः । कीदृशम् अग्रतः सृष्टेः पूर्वं जातं पुरु-
षत्वेनोत्पन्नम् एतच्च प्रागेवोक्तम् तस्माद्विराडजायत विराजो अधि
पूरुष इति । तेन पुरुषरूपेण पशुना देवा अयजन्त मानसयागं नि-
ष्पादितवन्तः । के ते देवा इत्यत्राह ये साध्याः सृष्टिसाधनयोग्याः
प्रजापतिप्रभृतयः ये च तदनुकूला ऋषयः मन्त्रद्रष्टारः ते सर्वेऽप्य-
यजन्त ॥ ९ ॥

यत् पुरु॑षं॒ व्यद॑धुः कति॒धा व्य॑कल्पयन् । मुखं॒ कि-
म॑स्यासी॒त् किं बा॒हू किमू॒रू पादा॑ उच्येते ॥ १० ॥

(१) यत्पुरुषम् । यत्पुरुषम् व्यदधुः कतिधा व्यकल्पयन् ।

अवस्थितम् । अग्रतो जातम् । एवंविधं प्रौक्षन् प्रोक्षणादिभिः संस्का-
रैः संस्कृतवन्तः तत्र श्रुतिः " यान्वैतान् सप्तपुरुषानेकं पुरुषमकुर्व-
न् स प्रजापतिरभवत् स प्रजा असृजत स प्रजाः सृष्ट्वोर्ध्व उदक्रा
मत् स एतं लोकमगच्छत् यत्रैष एतं नयाति नो ह तर्ह्यन्य एतस्माद-
त्र यज्ञिय आसतं देवा यज्ञेनैव यष्टुमाध्रियन्त तस्मादेतदृषिणाभ्य
नुक्तं यज्ञेन यज्ञमयजन्त देवा" इति । देवाः साध्याः ये ऋषयो मरी-
चिप्रभृतयश्च तेन पुरुषेण अयजन्त ॥ ९ ॥

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु०
नास्ति । तद्यथा । यत्पुरुषं व्यदधुः विहितवन्तः उपस्थिताः कालाः

मुखं किम् अस्य आसीत् किं बाहू किमूरू पादौ उच्येते ॥ यत्पुरुषम् देवा इन्द्रादयः तस्मिन् यज्ञे व्यदधुः कृतवन्तो यथा-तद्वत् योगिनः आत्मयज्ञे पुरुषं ज्ञानम् यत् ज्ञानान्तं तत्कृत-वन्तः । कतिप्रकारं विकल्पितवन्तः । तस्यैवंविधस्य किं मुखम् कौ बाहू कौ ऊरू पादौ उच्येते उच्यन्तामित्यर्थः । ब्राह्मण-क्षत्रियवैश्यशूद्राः स्थिता इत्यर्थः ॥ १० ॥

प्रश्नोत्तररूपेण ब्राह्मणादिसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्ना उच्य-न्ते । प्रजापतेः प्राणरूपा देवा यत् यदा पुरुषं व्यदधुः कालेनोदपा-दयन् तदा कतिधा कतिभिः प्रकारैर्व्यकल्पयन् विविधं कल्पितवन्तः अस्य पुरुषस्य मुखं किमासीत् किं बाहू ऊरू चास्ताम् किञ्च पादौ उच्येते पादावपि किमास्तामित्यर्थः ॥ १० ॥

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रो अजायत ॥ ११ ॥

(१)ब्राह्मणोऽस्य । ब्राह्मणः अस्य मुखम् आसीत् बाहू राज-न्यः कृतः ऊरू तत् अस्य यत् वैश्यः पद्भ्यां शूद्रः अजायत । अस्य यज्ञोत्पन्नस्य ये केचिद् ब्राह्मणाः ते मुखम् आसीत् । ये क्षत्रियाः ते बाहू कृताः । ये वैश्याः ते अस्य ऊरू कृताः । ये शूद्राः ते पद्भ्याम् अजायत इति कल्पन्ते । तदस्योत्पन्नत्वादि-

---

कर्मफलदायिनः अथ तदा कतिधा व्यकल्पयन् । कतिप्रकारन्तं विक-ल्पितवन्तः । कल्प्यमानस्यास्य किं मुखमासीत् । किं बाहू आस्तां किम् उरू आस्तां किञ्च पादौ उच्येते ॥ १० ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । अथ वर्णसृष्टिं प्रश्नभूतामृचमाह ब्राह्मणोऽस्य अस्य पुरुषस्य ब्राह्मणो मुखमासीत् । बाहू राजन्यः कृत आसीत् । उरू यत् तदप्ययं वैश्यः यत्तदोर्व्यत्ययः सामर्थ्यात् उरू यौ अस्य पुरुषस्य तौ वैश्यः कृतः पद्भ्यां शूद्रः अजायत ॥ ११ ॥

ति । एवमेतेऽवयवाः शिरःप्रभृतयः पुरुषस्य विद्यन्ते नान्ये इति ॥ ११ ॥

पूर्वोक्तप्रश्नोत्तराण्याह । ब्राह्मणः ब्रह्मत्वजातिविशिष्टः पुरुषोऽस्य प्रजापतेर्मुखमासीत् मुखादुत्पन्न इत्यर्थः । राजन्यः क्षत्रियत्वजातिविशिष्टो बाहू कृतः बाहुत्वेन निष्पादितः । तत् तदानीमस्य प्रजापतेः यत् यावूरू तद्रूपो वैश्यः सम्पन्नः ऊरूभ्यामुत्पादित इत्यर्थः । तथास्य पद्भ्यां शूद्रत्वजातिमान् पुरुषोऽजायत उत्पन्नः॥११॥

**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥**

(१)चन्द्रमा मनसः । मनसः जातः चक्षोः सूर्यः अजायत । श्रोत्रात् वायुश्च प्राणश्च मुखात् अग्निः अजायत । तस्यैवंविधस्य यज्ञोत्पन्नस्य पुरुषस्य । चन्द्रमाः मनसः चेतसः जातः अजायतेति कल्पना । मन एव चन्द्रमाः । चक्षोः नेत्राभ्यां सूर्यः । नेत्रे एव सूर्यः । यः प्राणो जीवः स एव वायुः श्रोत्रात् अजायतेति कल्प्यते श्रोत्रमेव वायुः । योऽयमग्निः स मुखात् अजायतेति कल्प्यते मुखमेवाग्निः अंशोत्पन्नत्वादिति ॥ १२ ॥

यथा दध्यादिद्रव्याणि गवादयः पशवः ऋगादिवेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह । मनसः सकाशात् चन्द्रमाः जातः चक्षोः चक्षुषः

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० ना० तद्यथा। इदानीं देवतासृष्टिं प्रति प्रश्नयति । चन्द्रमा मनसो जातः विपरीतोऽत्र कार्यकारणभावः सूर्यः चक्षोः अजायत चक्षुरुकारान्तो लिङ्गव्यत्ययश्च श्रोत्राद्वायुः प्राणश्च । ननु प्राणाद्वायोरुत्पत्तिः श्रूयते कथमेतदिति चेत् तस्य पुरुषस्य सृजतः स्वेच्छया कार्यकारणभावः । मुखाद् अग्निः अजायत ॥ १२ ॥

सकाशात् सूर्य्य अजायत वायुः प्राणश्च श्रोत्रात्कर्णादजायत मुखादग्निरजायत ॥ १२ ॥

**नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्त्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २॥ अकल्पयन् ॥ १३ ॥**

(१)नाभ्या आसीत् । नाभ्याः आसीत् अन्तरिक्षम् शिर्ष्णः द्यौः सम् अवर्त्तत । पद्भ्याम् भूमिः दिशः श्रोत्रात् तथा लोकान् अकल्पयन् । तस्यैवंविधस्य पुरुषस्य या नाभिः तदेवान्तरिक्षन्नभः । या द्यौः तत् शीर्षं शिरः । समवर्ततेति कल्पितम् । पादौ भूमिरेव । श्रोत्रे श्रवणौ दिशः । श्रोत्रावयवाः यस्मादिशः ब्रह्मणो जाताः तथैव सर्वान् लोकान् पुरुषस्यावयवभूतान् अकल्पयादिति ॥ १३ ॥

यथा प्रजापतेर्मनःप्रभृतयश्चन्द्रादीनकल्पयन् तथान्तरिक्षादिलोकानित्याह नाभ्येति प्रजापतेः नाभेः सकाशात् अन्तरिक्षमासीत् शीर्ष्णः शिरसः द्यौः स्वर्गः समवर्त्ततोत्पन्ना अस्य पद्भ्यां पादाभ्यां भूमिरुत्पन्ना श्रोत्राद्दिशः उत्पन्नाः तथा तेनोक्तेन विधिना लोकान् भूरादीन् प्रजापतेः सकाशादकल्पयन् कल्पितवन्तः फलदानोत्सुकाः काला इति शेषः ॥ १३ ॥

**यत् पुरुषेण हविषा देवा यज्ञमतन्वत । वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥**

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । अथ लोकसृष्टिरेतेषामवस्थानार्थम् । नाभ्या आसीत् नाभ्याः सकाशात् अन्तरिक्षमुत्पन्नमासीत् शीर्ष्णः सकाशात् द्यौः समभवत् । पद्भ्यां सकाशाद्भूमिः श्रोत्राद्दिशः । तथा तेन प्रकारेण तस्मादेव पुरुषाल्लोकान् अकल्पयन् फलदानोत्सुकाः । कालाः ॥१३॥

(१) यत्पुरुषेण। यत्पुरुषेण हविषा देवाः यज्ञम् अतन्वत। वसन्तः अस्य आसीत् आज्यम् ग्रीष्मः इध्मः शरत् हविः। कथमन्नेनाधिरोहति। यत् यस्मात्कारणात् पुरुषेण हविर्भूतेन देवा इन्द्रादयः यथा यज्ञम् अतन्वत विस्तारितवन्तः। तथा योगिनोऽपि पुरुषेणैवामृतभूतेन दीपितेनात्मना आत्मयज्ञं समधिकृतवन्तः। अत्र यज्ञे वसन्तः आज्यमासीत् ग्रीष्मः इध्मः शरद्धविरिति। इतरयागे वसन्तशब्देन सात्त्विको गुण उच्यते ग्रीष्मशब्देन राजसः। शरच्छब्देन तामसः। त्रयो हि गुणास्तत्रात्मयज्ञे योगिनो जुह्वतीति ॥ १४ ॥

यत् यदा पूर्वोक्तक्रमेण देवशरीरेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्यस्यानुत्पन्नत्वेन पुरुषस्वरूपमेव मनसा हविष्ट्वेन सङ्कल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञमतन्वतातनिषत तदानीमस्य यज्ञस्य वसन्तः ऋतुरेवाज्यमासीत् आज्यत्वेन सङ्कल्पितवन्त इत्यर्थः एवं ग्रीष्मः इध्मः आसीत् ग्रीष्ममेवेध्मत्वेन सङ्कल्पितवन्तः तथा शरत् हविः आसीत् शरदमेव पुरोडाशादिहविष्ट्वेन सङ्कल्पितवन्तः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन सङ्कल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन सङ्कल्प इति द्रष्टव्यम् ॥ अत्र कण्डिकाव्युत्क्रमोऽस्ति अस्यानन्तरं तं यज्ञम् (९) ततः तस्माद्यज्ञादिति (६) तिस्रः क्रमेणैव ततः सप्तास्यासन्निति (१५) क्रमोऽपेक्षितः ॥ १४ ॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० ना० तद्यथा। यत्पुरुषेण। यदा पुरुषेण हविषा पशुना साध्या देवाः यज्ञमतन्वत। तदा वसन्त ऋतुः अस्य यज्ञस्य आज्यमासीत्। ग्रीष्मः इध्म आसीत् शरत् हविरासीत्। अथास्य सृष्टियज्ञस्य प्रतिपाद्यमानस्यार्थक्रमः कथ्यते। कण्डिकानाम्। अस्या अनन्तरं तं यज्ञं ततः तस्माद्यज्ञादिति तिस्रः क्रमेणैव ततः सप्तास्यासन्निति द्वे क्रमेणैव ॥ १४ ॥

दे॒वा य॒द्य॒ज्ञं त॒न्वा॒ना अब॑ध्न॒न् पुरु॑षं प॒शुम् ॥ १५ ॥

(१)सप्तास्यासन् । सप्त अस्य आसन् परिधयः त्रिःसप्त समिधः कृताः । देवाः यत् यज्ञम् । तन्वानाः अबध्नन् पुरुषं पशुम् । देवा इन्द्रादयः यथा यज्ञं पुरुषमेधाख्यं विस्तारयन्तः पुरुषं पशुम् अबध्नन् हतवन्तः । अस्य पुरुषमेधयज्ञस्य सप्त समुद्राः परिधयः आसन् । भारते हि वर्षे यागः प्रवर्तते । त्रिःसप्त छन्दांसि गायत्र्यादीनि समिधः कृताः । आत्मयागे परिधिशब्देन पृथिव्यापस्तेजोवायुराकाशं मनो बुद्धिरित्येते परिधयः कल्प्यन्ते त्रिःसप्त समिधः । पञ्च महाभूतानि पृथिव्यादीनि पञ्चतन्मात्राणि रूपादीनि । पञ्चबुद्धीन्द्रियाणि श्रोत्रादीनि । पञ्चकर्मेन्द्रियाणि पाण्यादीनि मनश्च एताः त्रिःसप्तसमिधः कल्पयन्ति । तथा देवा दीप्यमाना ज्ञानेन योगिनः समाध्याख्यं यज्ञन्तन्वाना विस्तारयन्तः । पुरुषं ज्ञानं पुरुषमेधपशुरूपेणावस्थितम् अबध्नन् अगृह्णन् ॥ १५ ॥

यत् यदा देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पुरुषं पशुमबध्नन् विराट्पुरुषमेव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वं ( १४ ) पुरुषेण हविषेत्युक्तम् तदा अस्य सङ्कल्पितस्य यज्ञस्य सप्त गायत्र्यादीनि छन्दांसि परिधयः आसन् ऐष्टिकस्याहवनीयस्य त्रयः परिधयः औत्तरवेदिकाः त्रयः आदित्यः सप्तमः परिधिः प्रतिनिधिरूपः तथा च श्रुतिः गुप्त्यै वा अभितः परि-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० ना० तद्यथा । सप्तास्यासन् । अस्य यज्ञस्य सप्त समुद्राः क्षीरोदादयः परिधय आसन् भारते हि वर्षे यागाः प्रवर्त्तन्ते इति त्रिः सप्त च्छन्दांसि गायत्र्यादीनि अतिछन्दांसि अष्टिप्रभृतीनि परिधयः इति त्रयः सप्तकाः वर्गाः समिधः कृताः यत् देवाः यज्ञं तन्वानाः सन्तः पुरुषं पशुम् अबध्नन् पुनर्निगमनम् ॥ १५ ॥

धयो भवन्त्यथैतत् सूर्य्यमेव पुरस्ताद्गोप्तारं करोतीति तत एते आदित्यसहिताः सप्त परिधयोऽत्र सप्तच्छन्दोरूपाः । त्रिःसप्त त्रिगुणाः सप्त एकविंशतिसंख्याकाः समिधः कृता द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोकाः असावादित्यः एते एकविंशतिरेकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यद्वा सप्त समुद्राः क्षीरोदादयोऽस्य यज्ञस्य परिधयः आसन् भारतखण्डे यागा भवन्ति समुन्द्राणां परिधित्वम् त्रिः त्रिगुणाः सप्त छन्दोवर्गाः समिधः कृताः गायत्र्यादीनि सप्त अतिजगत्यादीनि सप्त कृत्यादीनि सप्तेति ॥ १५ ॥

**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥**

(१)यज्ञेन यज्ञम् । यज्ञेन यज्ञम् अयजन्त । देवाः । तानि धर्माणि प्रथमानि आसन् । ते ह नाकम् । महिमानः सचन्त यत्र नः पूर्वे साध्याः सन्ति देवाः । यथा इन्द्रादयो देवाः यज्ञेन ज्योतिष्टोमाख्येन यज्ञपुरुषं वासुदेवम् विधिना अयजन्त । यतः तानि यजनरूपाणि धर्माणि प्रथमानि आसन् । ते ह महाभा-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । यज्ञेन यज्ञम् । इदानीं साध्यानां यज्ञफलमुच्यते । यज्ञाद्वै तं च साध्या देवाः यज्ञेनैव हविर्भूतेन यज्ञमेव अयजन्त । एवं हि तेषां तानि धर्माणि दर्शनानि प्रथमानि प्रशस्तानि मुख्यानि आसन् ह स्फुटं ते महिमानः साध्याः नाकं सचन्त सचतिः सेवनार्थः । असेवन्त । कमिति सुखनाम तदेकेन नञा प्रतिषिद्धं सद् द्वितीयेन पुनः प्रतिषिध्यतः कोऽर्थः सर्वत्रैव हि किञ्चित्सुखं किञ्चिद्दुःखम् । अत्र सुखमेव पुण्यकृतो ह्येव तत्र गच्छन्ति । यत्र नाके पूर्वे साध्याः देवाः सन्ति । प्रवाहनित्यतामृषीणां दर्शयति । उक्तं चान्यत्रापि सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति । तथा पूर्वेषां पन्थानमुद्दिश्य धीरा इति ॥ १६ ॥

ग्ययुक्ताः नाकं सचन्त स्वर्गं सेवन्ते । यत्र पूर्वे साध्याः प्रथमे सुराः सन्ति विद्यन्ते देवाः तेजसा देदीप्यमानाः । एवं योगिनोऽपि दीपनाद्देवा यज्ञेन समाधिना नारायणाख्यं ज्ञानरूपम् अयजन्त यतः तानि समाधिरूपाणि धर्माणि प्रथमान्यासन् । ते तु नाकं सनकादीनां स्थानं गच्छन्ति । ये तु योगिनो महिमानः जन्मान्तरैर्निर्धूतगुणाः शुद्धाः ते नारायणाख्यं पुरुषमाविशन्ति मुक्तिं गच्छन्तीत्यर्थः ॥ १६ ॥

पूर्वप्रपञ्चेनोक्तमर्थं सङ्क्षिप्याह । देवाः प्रजापतिप्राणरूपा यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञं यज्ञस्वरूपं प्रजापतिमयजन्त पूजितवन्तः तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि भूतानि आसन् । एतावता सृष्टिः प्रतिपादकसूक्तभागार्थः उक्तः अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपाधिसाधकाः देवाः सन्ति तिष्ठन्ति तं नाकं विराट्प्राप्तिरूपं स्वर्गं ह एव ते महिमानः तदुपासका महात्मानः सचन्त सचन्ते समवयन्ति प्राप्नुवन्ति अडभाव आर्षः सृष्टेः प्रवाहनित्यतां दर्शयति तदुक्तम् सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयदिति ॥ १६ ॥

अद्भ्यः सम्भृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्त्तताग्रे । तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥

(१) अद्भ्यः सम्भृतः । अद्भ्यः सम्भृतः पृथिव्यै रसात्

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । अद्भ्यः संभृत इत्युत्तरनारायणेनादित्यमुपस्थायेति षट्कण्डिका उत्तरनारायणं तत उपान्त्ये द्वे अनुष्टुभौ शेषास्त्रिष्टुभः । अत्र पूर्वकल्पान्तरेण पुरुषमेधयाजी आदित्यरूपमापन्नः परापरकोटिसंचारी स्तूयते यः अद्भ्यः उदकात् संभृतः पृथिव्यै

च विश्वकर्मणः सम् अवर्तत अग्रे । तस्य त्वष्टा विदधत् रूपम् एति तन्मर्त्यस्य देवत्वम् आजानम् अग्रे । त्वष्टा प्रजापतिर्ब्रह्मा यद्रूपमेकांशभूतं विदधत्कृतवान् तदेव मर्त्यस्य मर्त्ये भूलोके देवत्वं प्रभुत्वम् आजानमाप्तमित्यर्थः । किम्भूतोऽसौ । अद्भ्यः सकाशात् सम्भृतः पिण्डीभूतः पृथिव्याः रसाच्च । विश्वकर्मणः अग्रे प्रथमतः समवर्तत । संयोगरूपेण कृतः । तस्यैव नान्यस्य तदेव कारणान्मर्त्ये प्राप्तवान् स तु पालनाय दानवादिविनाशनायेति ॥ १७ ॥

इति पुरुषसूक्तानुवाकः। अद्भ्यः सम्भृत इत्युत्तरनारायणेनादित्यमुपस्थायेति ( १३, ६, २, २० ) षट् कण्डिका उत्तरनारायणम्। उपान्त्ये द्वे अनुष्टुभौ शेषास्त्रिष्टुभः आदित्यदेवत्याः। पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते । अद्भ्यः जलात् पृथिव्यपां ग्रहणं भूतपञ्चकोपलक्षकम् भूतपञ्चकात् यो रसः सम्भृतः पुष्टः तथा विश्वं कर्म यस्य विश्वकर्मणः कालस्य रसात् प्रीतेः यो रसोऽग्रे प्रथमं समवर्त्तत समभवत भूतपञ्चकस्य कालस्य च सर्वं प्रति कारणत्वात् पुरुषमेधयाजिनो लिङ्गशरीरे पञ्च भूतानि तुष्टानि कालश्च ततस्तुष्टेभ्यः कश्चिद्रसविशेषफलरूप उत्तमजन्मप्रद उत्पन्न इत्यर्थः। तस्य रसस्य रूपं विदधत् धारयन् त्वष्टा आदित्यः एति प्रत्यहमुदयं करोति। अग्रे प्रथमं मर्त्यस्य मनुष्यस्य पुरुषमेधयाजिनः आजानं देवत्वं मुख्यं देवत्वम् सूर्य्यरूपेण । द्विविधा दे-

---

पृथिव्याश्च सकाशात् पृथिव्याश्च संभृतः महाभूतपञ्चकोपलक्षणार्थमपां पृथिव्याश्च ग्रहणं भूतपञ्चकाख्यः सम्भूतः विश्वकर्मणः रसाच्च विश्वं सर्वं कर्म यस्य स विश्वकर्मा तस्मात् ज्ञानकर्मसमुच्चयजनितफलविपाककालभाविनो रसाच्च यः संभृतः सन् समवर्त्तत समभवत् अत्र प्रथमं लिङ्गादिशरीरः । इदानीं त्वष्टा आदित्यः तस्य रूपं विदधत् कुर्वन् धारयन् वा राति अहरहरुदयं करोति वदेव मर्त्यस्य मनुष्यस्य सतः अग्रे प्रथमं पूर्वे देवत्वमाजानं विभक्तिव्यत्ययः देवत्वेन जन्म उत्पत्तिः ॥ १७ ॥

र्वाः कर्मदेवाः आजानदेवाश्च कर्मणोत्कृष्टेन देवत्वं प्राप्ताः कर्मदेवाः सृष्ट्यादावुत्पन्ना आजानदेवाः। ते कर्मदेवेभ्यः श्रेष्ठाः ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्द इति श्रुतेः ( बृहदार० मा० ४, १, ३५ ) सूर्य्यादय आजानदेवाः ॥ १७ ॥

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १८ ॥**

(१)वेदाहम् वेद अहम् एतम्पुरुषम् महान्तम् आदित्यवर्णम् तमसः परस्तात् । तम् एव विदित्वा अतिमृत्युमेति न अन्यः पन्था विद्यते अयनाय । ऋषेः प्रतिवचनम् । अहमेनं पुरुषं वेद महान्तन्देशकालाद्यवच्छेदरहितम् । आदित्यवर्णम् स्वप्रकाशं तमसः परस्तात् अविद्यायाः भेददर्शनम् । तमेव विदित्वा आतिमृत्युम् एति अतिक्रम्य मृत्युं तं पुरुषमनुप्रविशति । न अन्यः पन्था मार्गः तस्यायनाय गमनाय विद्यते किम्भूतं तं विशिष्यते ॥ १८ ॥

एतं महान्तं सर्वोत्कृष्टं पुरुषं सूर्य्यमण्डलस्थमहं वेद जानामि इति ऋषेर्वचनम् । कीदृशमादित्यवर्णमादित्यस्येव वर्णो यस्य तम् । उपमान्तराभावात् स्वोपमम् तथा तमसः परस्तात् दूरतरम् तमोर-

---

(१) अत्र वाराणसी० लि०पु०समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । वेदाहम् आदित्यान्तरपुरुषं महान्तं अपर्यन्तम् अहं वेद जानामि ऋषेः प्रीतिवचनम् आदित्यवर्णम् आदित्यस्येव वर्णो यस्येति उपमानोपमेयभावः यथा आदित्यः स्वप्रकाशः सन्नन्यान्यपि वस्तूनि प्रकाशयति एवमयमपि तमसः परस्तात् दूरतरम् अविद्या तम उच्यते इति भेददर्शनम् तमेव च विदित्वा मृत्युमत्येति परं ब्रह्म गच्छति अयनाय गमनाय अन्यः पन्थाः न विद्यते ॥ १८ ॥

हितमित्यर्थः तमःशब्देनाविद्योच्यते । तमेवादित्यं विदित्वा ज्ञात्वा मृत्युमत्येति अतिक्रामति परं ब्रह्म गच्छति । अयनायाश्रयायान्यः पन्था मार्गः न विद्यते सूर्य्यमण्डलान्तः पुरुषमात्मरूपं ज्ञात्वैव मुक्तिः ॥ १८ ॥

**प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा वि जायते । तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा ॥ १९ ॥**

(१) प्रजापतिश्चरति । प्रजापतिः चरति गर्भे अन्तः अजायमानः बहुधा विजायते । तस्य योनिं परिपश्यन्ति धीराः तस्मिन् ह तस्थुः भुवनानि विश्वा । स एव पुरुष एकांशभूतः प्रजापतिः अस्य गर्भस्यान्तः अजायमानः चराति चतुर्विधेषु भूतेषु । स एव जायमानः बहुधानेकप्रकारं विजायते । ये धीराः योगिनः ते तस्यै योनिं परिपश्यन्ति । सर्वत्यागेन परिहरन्ति विश्वे त्रैलोक्ये भुवनानि तस्मिन्नातस्थुः ॥ १९ ॥

हः सर्वात्मा प्रजापतिः अन्तर्हृदि स्थितः सन् गर्भे चरति गर्भमध्ये प्रविशति यश्चाजायमानोऽनुत्पद्यमानो नित्यः सन् बहुधा कार्य्यकारणरूपेण विजायते मायया प्रपञ्चरूपेणोत्पद्यते । धीराः ब्रह्मविदस्तस्य प्रजापतेः योनिं स्थानं स्वरूपं ( परि ) पश्यन्ति अहं ब्रह्मास्मीति जानन्ति । विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि ब्रह्मणि तस्थुः स्थितानि । सर्वं तदात्मकमेवेत्यर्थः ॥ १९ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति । तद्यथा । प्रजापतिः । यः सर्वात्मा प्रजापतिः अन्तः उदरे स्थितः सन् गर्भे चरति संचरति यश्च अजायमानः बहुधा कार्यकारणरूपेण जायते धीरा ब्रह्मविदः तस्य प्रजापतेः योनिं स्थानं स्वरूपमहमस्मीति पश्यन्ति विश्वा सर्वाणि भुवनानि भूतजातानि तस्मिन् ह तस्मिन्नेव कारणात्मनि तस्थुः स्थितानि ॥ १९ ॥

यो देवेभ्य आतपति यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥

(१) यो देवेभ्यः । यः देवेभ्यः आतपति यः देवानाम्पुरोहितः । पूर्वः यः देवेभ्यः जातः नमः रुचाय ब्राह्मये । अग्रे यो देवेभ्यः योगिनस्तन्नमन्ति ध्यायन्ति यो देवेभ्यः सर्वेभ्यः आतपति अतिशयेन तेजसा तपति आदित्यरूपेणेत्यर्थः । यश्च देवानां पुरोऽग्रे इन्द्रत्वेन स्थितः यश्च पूर्वः अग्रे ब्रह्मरूपेण देवेभ्यो जातः तस्मै रुचाय तेजसे ब्राह्मये ब्रह्मपुरुषोऽपत्याय नमः ॥ २० ॥

यः प्रजापतिरादित्यरूपो देवेभ्योऽर्थायातपति द्योतते यश्च देवानां पुरोहितः सर्वकार्य्येष्वग्रे नीतः यश्च देवेभ्यः सकाशात् पूर्वः जातः प्रथममुत्पन्नः तस्मै आदित्याय नमः । कीदृशाय रोचतेऽसौ रुचस्तस्मै दीप्यमानाय इगुपधेति ( पा० ३, १, १३५ ) कप्रत्ययः तथा ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः इञि टिलोपः ब्रह्मावयवभूताय वा ॥२०॥

रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन् वशे ॥ २१ ॥

(१)रुचं ब्राह्मम् । रुचं ब्राह्मं जनयन्तः देवा अग्रे तत् अब्रुवन् । यः त्वा एवम् ब्राह्मणः विद्यात् तस्य देवाः असन् वशे । रुचन्देदीप्यमानं ब्राह्मं ब्रह्मण उत्पन्नं जनयन्तः सृष्ट्यर्थम् देवा

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा यो देवेभ्यः । यः आदित्यः देवेभ्योऽर्थाय आतपति यश्च देवानां पुरोहितः सर्वकार्येषु अग्रे नीतः यो देवेभ्यः सकाशात पूर्वो जातः तस्मै नमः किम्भूताय रुचाय रोचनाय दीप्ताय रोचते इति रुचः इगुपधश्चेति कः । ब्राह्मये ब्रह्मणोऽपत्यं ब्राह्मिः टिलोपः । यद्वा ब्रह्मावयवभूताय ॥ २० ॥

योगिनः तेजसा दीप्यमानाः यत्त अब्रुवन् यद्ब्रूयुः अग्रे प्रथमतः। किमूचुः अपरोऽपि यो ब्राह्मणः स ब्रह्म विद्याज्जानीयात् तस्य देवा असन्वशे सोऽपि सनकादीनां स्थानङ्गच्छतीत्यर्थः ॥२१॥

देवाः दीप्यमानाः प्राणाः रुचं शोभनं ब्राह्मं ब्रह्मणोऽपत्यमादित्यं जनयन्तः उत्पादयन्तः अग्रे प्रथमं तत् वचोऽब्रुवन् ऊचुः ब्राह्मो जाताविति (पा० ६, ४, १७१) निपातः। तत् किमत आह यो ब्राह्मणः हे आदित्य ! त्वा त्वामेवमुक्तविधिना उत्पन्नं विद्यात् जानीयात् तस्य ब्राह्मणस्य देवा वशे असन् वश्या भवन्ति आदित्योपासिता जगत्पूज्यो भवतीत्यर्थः ॥ २१ ॥

श्रीश्चं ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायाम् एकत्रिंशोऽध्यायः ॥ ३१ ॥

(१)श्रीश्च ते। श्रीः च ते लक्ष्मीः च पत्न्यौ अहोरात्रे पार्श्वे

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति। तद्यथा। रुचं ब्राह्मं देवाः प्राणाः। रुचं रोचनं ब्राह्मं ब्रह्मावयवभूतं ब्राह्मो जातावित्यणि टिलोपः जनयन्तः उत्पद्यमानाः सन्तः देवाः अग्रे प्रथमं तत् अब्रुवन् किमिति यो ब्राह्मणः त्वाम् एवमुक्तविधिना विद्यात्। जानीयात् तस्य ब्राह्मणस्य देवाः वशे असन् भवन्ति। अवयवभूता हि तस्य देवाः स चेश्वरो देवानामित्यर्थः ॥ २१ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०

'नक्षत्राणि रूपम् अश्विनौ व्यात्तम्। इष्णन् इषाण अमुम् मे इषाण सर्वलोकम् मे इषाण। अस्य पुरुषस्यैतेऽवयवाः। श्रीश्च लक्ष्मीश्च पत्न्यौ भार्ये अहश्च रात्रिश्च ते पार्श्वे नक्षत्राणि रूपम् अश्विनौ व्यात्तं मुखम्। इष्णन् इषाण स्वर्गस्य लोकस्य ईशानः। एतद्गुणविशिष्टः नाममोक्षस्य ईशानः सर्वलोकस्य च स एव देवानामीशान इति ॥ २२ ॥

इति शौनकप्रणीतं पुरुषसूक्तभाष्यं समाप्तम् ॥ ३१ ॥

ऋषिरादित्यं स्तुत्वा प्रार्थयते। हे आदित्य! श्रीः लक्ष्मीश्च ते तव पत्न्यौ जायास्थानीये त्वद्वश्ये इत्यर्थः। यया सर्वजनाश्रयणीयो भवति सा श्रीः श्रीयतेऽनया श्रीः सम्पदित्यर्थः। यया लक्ष्यते दृश्यते जनैः सा लक्ष्मीः सौन्दर्य्यमित्यर्थः। अहोरात्रे तव पार्श्वे पार्श्वस्थानीये। नक्षत्राणि गगनगास्तारा: तव रूपम् तवैव तेजसा भासमानत्वात् तेजसां गोलकः सूर्य्यो नक्षत्राण्यम्बुगोलका इति ज्योतिःशास्त्रोक्तेः। अश्विनौ द्यावापृथिव्यौ तव व्यात्तं विकासितमु-

---

नास्ति। तद्यथा। श्रीश्च ते श्रीश्च लक्ष्मीश्च यस्य ते पत्न्यौ पालयित्र्यौ यया आश्रयणीयो भवति सा श्रीः यया तु लक्ष्यते सा लक्ष्मीः अहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ द्यावापृथिव्यौ यस्य व्यात्तं मुखम् अश्विनौ द्यावापृथिव्यौ इमे हीदंꣳसर्वमश्नुवातामिति श्रुतिः तं त्वां याचे इष्णन् इषाण इषेरेतद्रूपद्वयं पूर्वं शतृपरं कर्त्तरि विकरणव्यत्ययः। इष आभीक्ष्णे क्र्यादिर्वा त्वं मे इष्णन् कर्मफलं मम इच्छन् अमुं लोकं मे आत्मत्वेन इषाण इच्छ सर्वलोकं च मे आत्मत्वेन इषाण अहमेवेदं सर्वमिति भावः ॥ २२ ॥

इति मन्त्रभाष्ये एकत्रिंशः ॥ ३१ ॥

खस्थानीये अश्नुवाते व्याप्नुतस्तौ अश्विनौ द्यावापृथिव्यौ इमे हीदꣳ सर्वमश्नुवातामिति श्रुतेः । य ईदृशस्तं त्वां याचे इष्णन् कर्मफलमिच्छन् सन् इषाण इच्छ इषु इच्छायाम् विकरणव्यत्ययः यद्वा इष आभीक्ष्ण्ये क्र्यादिः अत्रेच्छार्थः । किमेषणीयम् तत्राह अमुं परलोकं मे मम इषाण मम परलोकः समीचीनोऽस्त्वितीच्छा अमोघेच्छत्वादिष्टं भवतीत्यर्थः । सर्वं मे मम इषाण सर्वलोकात्मकोऽहं भवेयमितीच्छेत्यर्थः मुक्तो भवेयमित्यर्थः सर्वं खल्विदं ब्रह्मेति सामश्रुतेः ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
नरमेधोऽध्याय एष एकत्रिंशोऽयमीरितः ॥ ३१ ॥



# द्वात्रिंशोऽध्यायः ।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः ॥ १ ॥

(१) इदानीं सर्वे मन्त्राः प्राक् प्रवायुमित्यस्मादनुवाकात्सर्वमेधसंबद्धाः । ब्रह्मण आर्षम् । तदेवाग्निः द्वे अनुष्टुभौ । विज्ञानात्मा परेणात्मना विशिष्टाग्न्यादिषु ओतप्रोतत्वेनोपास्योऽभिधीयते । तदेव कारणमग्निः तदादित्यः तद्वायुः तत् उ चन्द्रमाः । उकार एवार्थे तदेव शुक्रन्त्रयीलक्षणम् । तद्ब्रह्म परं ता आपः सः प्रजापतिः ॥ १ ॥

पुरुषमन्त्रा उक्ताः । अथ सर्वमेधमन्त्रा उच्यन्ते प्रवायुमच्छेत्यस्मात् प्राक् ( ३३, ५५ ) । स्वयम्भुब्रह्मदृष्टाः आत्मदेवत्याः सप्तमेऽहनि आप्तोर्यामसंज्ञिके सर्वहोमे विनियुक्ताः आप्तोर्यामः सप्तममहर्भवतीत्युपक्रम्य सर्वं जुहोति सर्वस्यास्यै सर्वस्यावरुध्यै इति श्रुतेः ( १३, ७, १, ९ ) ॥ द्वे अनुष्टुभौ । विज्ञानात्मा परेणात्मना वि-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । समाप्तः पुरुषमेधः । इदानीं सर्वे इमे मन्त्राः प्राक् प्रवायुमित्यस्मादनुवाकात् सर्वमेधसंबद्धा इति ब्राह्मण आर्षं तदैक्षत् तनवै तपस्यानन्त्यमस्ति ह भूतेष्वात्मानं जुहवानि भूतानि चात्मनीत्येवमादिना ग्रन्थेन ज्ञानसहितात्कर्मणो युक्तिं दर्शयति यस्तु सर्वाणि भूतानीत्यादिनाप्तोर्यामसप्तममहर्भवतीत्युपक्रम्य सर्वं जुहोति सर्वस्यास्यै सर्वस्यावरुध्या इति । तत्रायमध्यायो विनियुक्तः तदेवाग्निः द्वे अनुष्टुभौ विज्ञानात्मा परेणात्मना विशिष्टोऽग्न्यादिषु ओतप्रोतत्वेनोपास्योऽभिधीयते तदेव कारणमग्निः तत् आदित्यः तत् वायुः तत् उ चन्द्रमाः उ एवार्थे तदेव शुक्रं त्रयीलक्षणं तत् परं ताः आपः स प्रजापतिः ॥ १ ॥

शिष्टोऽग्न्यादिष्वोतप्रोतत्वेनोपास्योऽभिधीयते । अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तदेव वायुस्तदेव चन्द्रमास्तत् तदेव उ एवार्थे । शुक्रं शुक्रं तत् प्रसिद्धम् । ब्रह्म त्रयीलक्षणं तत् ब्रह्मैव । ताः प्रसिद्धाः आपः जलानि ( स ) प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म ॥ १ ॥

**सर्वे॑ निमे॒षा ज॑ज्ञिरे वि॒द्यु॒तः॒ पुरु॑षा॒दधि॑ । नैन॑मू॒र्ध्वं न ति॒र्य्य॒ञ्चं॒ न मध्ये॒ परि॑जग्रभत् ॥ २ ॥**

( १ ) सर्वे निमेषाः । सर्वे निमेषत्रुटिकाष्ठादयः कालविशेषाः जज्ञिरे जाताः । विद्युतः विद्युत्पर्जन्यस्तनयित्नवः । पुरुषादधिशकाशात् नच एनं पुरुषं सर्वस्यापि जनकं सन्तम् । ऊर्ध्वं नच तिर्यञ्चं नच मध्ये परिजग्रभत् । न परिगृह्णाति कश्चिदपि । न ह्यसौ प्रत्यक्षादीनां विषयः । आगमो हि तत्र प्रवर्तते । तदुक्तम् । एष नेति नेत्यात्मना अगृह्यो नहि गृह्यत इत्यादि ॥ २ ॥

सर्वे निमेषाः निमेषाः त्रुटिकाष्ठाघट्यादयः कालविशेषाः पुरुषसकाशाज्जज्ञिरे । कीदृशात् पुरुषात् विद्युतः विशेषेण द्योतते विद्युत् तस्मात् । किञ्च कश्चिदपि एनं पुरुषमूर्ध्वमुपरिभागे न परिजग्रभत् परिगृह्णाति । एनं तिर्यञ्चं चतुर्दिक्षु न परि० मध्यदेशेऽपि न गृह्णाति न ह्यसौ प्रत्यक्षादीनां विषय इत्यर्थः । स एष नेति नेत्यात्मागृह्यो न हि गृह्यत इति श्रुतेः । जग्रभत् ग्रहेः शतरि जुहोत्यादित्वेन रूपम् ॥ २ ॥

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० ना० तद्यथा । सर्वे निमेषाः । सर्वे निमेषाः त्रुटिकाष्ठादयः कालविशेषाः विद्युत्पर्जन्यस्तनितादयश्च पुरुषात् अधिसकाशात् जज्ञिरे जाताः एनं पुरुषम् ऊर्ध्वं तिर्य्यञ्चं च मध्ये च न परिजग्रभत् न परिगृह्णाति कश्चिदपि न ह्यसौ प्रत्यक्षादीनां विषयः तदुक्तं स एष नेति नेत्यात्मा गृह्यो,नहि गृह्यते इत्यादि ॥ २ ॥

न तस्यं प्रतिमा अंस्ति यस्यं नामं महद्यशंः । हिरण्यगर्भ इत्येषः । मा मां हिंसीदित्येषा । यस्मान्न जात इत्येषः ॥ ३ ॥

( १ ) न तस्य । गायत्री द्विपदा न तस्य पुरुषस्य प्रतिमा प्रतिमानभूतं किञ्चिद्विद्यते । यतो यस्य नाम महद्यश इत्येष वेदान्तविदः पठन्ति । हिरण्यगर्भ इत्येष चतुर्ऋचोऽनुवाकोऽदूरविप्रकर्षेण हिरण्यगर्भं प्रतिमाभूतमाह । मा मा हिंसीदित्येषा च ऋक् यस्मान्न जात इत्येषा च द्विकाण्डिकोऽनुवाकः । षोडशिदैवत्योऽदूरविप्रकर्षेणाभिवदति । आसां च कण्डिकानां ब्रह्मयज्ञेऽध्ययनं कर्तव्यं प्रतीकग्रहणत्वात् ॥ ३ ॥

द्विपदा गायत्री यस्य पुरुषस्य प्रतिमा प्रतिमानमुपमानं किञ्चिद्वस्तु नास्ति अत एव नाम प्रसिद्धं महत् यशः यस्यास्ति सर्वातिरिक्तयशा इत्यर्थः ॥ हिरण्यगर्भ इत्येषोऽनुवाकश्चतुर्ऋचः हिरण्यगर्भः यः प्राणतः यस्येमे य आत्मदाः इति ( २५, १०—१३ । मा मा हिंसीज्जनितेत्येका एषा ( १२, १०२ ) । यस्मान्न जातः इन्द्रश्च सम्राडिति ( ८, ३६—३७ ) दृच्यृचोऽनुवाकः । एताः प्रतीकचोदिताः पूर्वं पठितत्वादादिमात्रेणोक्ताः ब्रह्मयज्ञे जपे च सर्वा अध्येयाः । एवं सर्वत्र ॥ ३ ॥

एषो हं देवः प्रदिशोऽनु सर्वाः पूर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमा-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० ना० तद्यथा । न तस्य । गायत्री द्विपदा तस्य पुरुषस्य प्रतिमा प्रतिमानभूतं किञ्चिद्वस्तु नास्ति यतो यस्य नाम महत् यश इत्येवं वेदविदः पठन्ति हिरण्यगर्भ इत्येष चतुर्ऋचोऽनुवाकः अदूरविप्रकर्षेणाभिवदति आशां च काण्डिकानां ब्रह्मयज्ञेऽध्ययनं कर्त्तव्यं प्रतीकगृहीतत्वात् ॥ ३ ॥

णः प्रत्यङ् जनांस्तिष्ठति सर्वतोमुखः ॥ ४ ॥

एषो ह। त्रिष्टुभः सर्वाः सदसस्पतिमद्भुतमित्यस्या गायत्र्याः प्राक्। इदानीं स्वरूपतः कथयति। एष एव देवः प्रदिशः दिशश्च सर्वाः अनुव्याप्य वर्त्तते तिर्यगूर्ध्वमधश्चेति। पूर्वो ह जात अनादिनिधनः सम्भूतः। स उ गर्भे अन्तः। स एव च मातुरुदरे अन्तर्गर्भे व्यवतिष्ठते। स एव च जातः स एष च जनिष्यमाणः॥ तदुक्तम्॥ सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तमुपासीतेति। प्रतिपदार्थमञ्चनः। हे जनाः तिष्ठति सर्वतोमुखः। सर्वतोऽक्षिशिरोग्रीवपाणिपादः तिष्ठति अचिन्त्यशक्तिरित्यर्थः। जना इत्याद्युदात्तस्वरमपि स्वरामन्त्रितार्थस्यादावेव वर्तते॥ ४॥

चतस्रस्त्रिष्टुभः। ह प्रसिद्धम् एषो ह देवः सर्वाः प्रदिशः अनुतिष्ठति व्याप्य स्थितः। हे जनाः! ह प्रसिद्धमेष पूर्वः प्रथमो जातः उत्पन्नः। गर्भे अन्तः गर्भमध्ये स उ स एव तिष्ठति। जातोऽपि स एव। जनिष्यमाणः उत्पत्स्यमानोऽपि स एव। प्रत्यङ् प्रतिपदार्थमञ्चति प्रत्यङ्। सर्वतोमुखः सर्वतो मुखाद्यवयवा यस्य अचिन्त्यशक्तिरित्यर्थः॥ ४॥

यस्माज्जातं न पुरा किं चनैव य आबभूव भुवना-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० ना०। तद्यथा। एषो ह देवः। त्रिष्टुभः सर्वाः सदस्पतिमित्यस्या गायत्र्याः प्राक् इदानीं स्वरूपमाह एष देवः सर्वाः प्रदिशो दिशश्च अनुव्याप्य वर्त्तते तिर्यगूर्ध्वमधश्च पूर्वो ह जातः अनादिनिधनः संभूतः सः उ गर्भे अन्तः स एव च गर्भे मातुरुदरे तिष्ठति स एव च जातः स एव जनिष्यमाणः॥ तदुक्तं सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीतेति प्रत्यङ् प्रतिपदार्थस्यादाविति॥ ४॥

नि विश्वा । प्रजापतिः प्रजया सꣳरराणस्त्रीणि ज्योतीꣳषि सचते स षोडशी ॥ ५ ॥

(१) यस्मान्न जातः । यस्मात्पुरुषात् जातं न पुरा किञ्च एव । यश्च आबभूव सम्भावयति भुवनानि भूतजातानि विश्वा विश्वानि सर्वाणि । प्रजापतिरिति व्याख्यातम् । अयं षोडशकालिङ्गयुक्तः ॥ ५ ॥

यस्मात् पुरा किञ्चन किमपि न जातमेव यश्च विश्वा विश्वानि सर्वाणि भुवनानि भूतजातानि आबभूव समन्ताद् भावयामास-अन्तर्भूतो ण्यर्थः । स षोडशी षोडशावयवलिङ्गशरीरी प्रजापतिः प्रजया संरराणः रममाणः त्रीणि ज्योतींषि रवीन्द्वग्निरूपाणि सचते सेवते ॥ ५ ॥

येन द्यौरुग्रा पृथिवी च दृढा येन स्वस्तभितं येन नाकः । यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥ ६ ॥

(२) येन पुरुषेण द्यौः उग्रा उद्गूर्णा वृष्टिदायिनी कृता ।

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० ना० । तद्यथा । यस्माज्जातमिति । यस्मात्पुरुषात् पुरा किञ्चन किमपि न जातमेव यश्च विश्वा भुवनानि सर्वाणि भूतजातानि आबभूवासमन्तात् भावयामास णिजन्तोऽर्थोऽन्तर्भूतो ज्ञेयः उत्पादयति प्रजापतिरित्युत्तरार्द्धं व्याख्यातम् ॥ ५ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । येन द्यौः । येन पुरुषेण द्यौः उग्रा उद्गूर्णा वृष्टिदायिनी कृता येन पृथिवी दृढा स्थिरा प्राणिधारणाय वृष्टिग्रहणाय च अन्ननिष्पादनाय कृता येन स्वः आदित्यमण्डलं स्तम्भितं येन नाकः स्तम्भितः यः अन्तरिक्षे रजसः उदकस्य वृष्टिलक्षणस्य विमानः निर्माता तं विहाय कस्मै अन्यस्मै हविषा विधेम हविर्दद्मः ॥ ६ ॥

पृथिवी च दृढा स्थिरा प्राणिधारणाय वृष्टिग्रहणाय च अन्ननिष्पादनाय च कृता । येन च स्वः आदित्यमण्डलं स्तभितं स्तम्भितम् । येन च नाकः स्वर्गो लोकः । स्तम्भितः । यश्चान्तरिक्षे रजसः उदकस्य वृष्टिलक्षणस्य विमानो निर्माता । तं परित्यज्य कस्मै अन्यस्मै देवाय हविषा विधेम हविर्दद्म इति समञ्जसम् ॥ ६ ॥

येन पुरुषेण द्यौरुग्रा उद्गूर्णा वृष्टिदा कृतेति शेषः पृथिवी च येन दृढा कृता सर्वप्राणिधारणं वृष्टिग्रहणम् अन्ननिष्पादनञ्चेति भूमेर्दार्ढ्यम् । येन स्वः आदित्यमण्डलं स्तभितं स्तम्भितम् येन नाकः स्वर्गोऽपि स्तम्भितः । यः अन्तरिक्षे नभसि रजसो जलस्य वृष्टिरूपस्य विमानः विमिमीते निर्माता । तं विहाय कस्मै देवाय हविषा विधेम हविर्दद्मः न कस्मैचिदित्यर्थः ॥ ६ ॥

यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने । यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ आपो ह यद् बृहतीः । यश्चिदापः ॥७॥

(१)यं क्रन्दसी यं पुरुषं क्रन्दसी द्यावापृथिव्यौ अवसा अन्नेन हविर्लक्षणेन वृष्टिधारणाद्युपकारजनितेन । तस्तभाने संस्त-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । यं क्रन्दसी । क्रन्दसी द्यावापृथिव्यौ यं रुपुषं मनसा अभ्यैक्षेतेतां साध्वेतत्कृतमनेनेति किम्भूते क्रन्दसी अवसा अन्नेन हविर्लक्षणेन वृष्टिधारणाद्युपकारजनितेन तस्तभाने सस्तम्भयन्त्यौ प्राणिजातं रेजमाने कम्पमाने यत्र अधि उपरिस्थितः यदाधार इत्यर्थः सूरः सूर्यः उदितः सन् विभाति तं देवं परित्यज्य कस्मै हविर्दद्मः आपो ह यद् बृहतीः यश्चिदापः द्वे प्रतीके गृहीते अत्रापि स्वाध्यायोऽध्ययनं युक्तं प्रतीकस्योपलक्षणार्थत्वात् ॥ ७ ॥

भयन्त्यौ सर्वप्राणिजातम् अभि ऐक्षेतां मनसा । साध्वेतत्कृतमनेनेति । रेजमाने कम्पमाने । यत्र च अधि उपरि स्थितः यदाधार इत्यभिप्रायः । सूरः सूर्यः उदितः सन् विभाति । तन्देवम् । परित्यज्य कस्मै देवाय हविषा विधेम इति समञ्जसम् । आपो ह यद्बृहतीर्यश्चिदाप इति द्वे प्रतीकगृहीते अत्रापिस्वाध्यायेऽध्ययनं प्राप्तं प्रतीकस्योपलक्षणार्थत्वात् ॥ ७ ॥

क्रन्दसी द्यावापृथिव्यौ यं पुरुषं मनसा अभ्यैक्षेतां साधु कृतमित्यपश्यताम् । कीदृशौ क्रन्दसी अवसा हविर्लक्षणेनान्नेन वृष्टिजनकेन तस्तभाने प्राणिजातं स्तम्भयन्त्यौ व्यत्ययेन स्तम्भेर्ह्रादित्वम् । रेजमाने शोभमाने । सूरः सूर्यः यत्र द्यावापृथिव्योः उदितः सन् अधिविभाति अधिकं शोभते विभासयति वा । तं विहाय कस्मै हविर्देद्मः ॥ आपो ह यद्बृहतीः ( २७, २५ ) यश्चिदापः ( २७, २६ ) द्वे प्रतीकोक्ते जपादावध्येये ॥ ७ ॥

वेनस्तत् पंश्यन्निहिंतं गुहा सद्यत्र विश्वं भवत्येकंनीडम् । तस्मिंन्निदꣳ सं च वि चैति सर्वꣳ स ओतः प्रोतंश्च विभूः प्रजासु ॥ ८ ॥

( १ ) वेनस्तत्पश्यत् । वेनः पण्डितः विदितवेदान्तरहस्यः सद्भावनया तद्रूपं ब्रह्म पश्यन् पश्यति । निहितं स्थापितम् । गुहा

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । वेनः । वेनः पण्डितः विदितवेदान्तरहस्यः तद् ब्रह्मणो रूपं पश्यत् पश्यति निहितं स्थापितं गुहासत् गुहायामिव सत् नित्यं यत्र विश्वं सर्वमिदं विकारजातम् एकनीडम् एकनिलयम् अविभक्तं भवति उपसंहृतं सर्वविशेषं कारणमेव तस्मिन् परमात्मनि इदं सर्वं समेति च उपसंहृतिकाले व्येति च सर्गकाले सः विभूः विभवति कार्यकारणभावेनेति विभूः प्रजासु ओतश्च शरीरभावेन प्रोतश्च शरीरिभावेन सर्वमेव परमेश्वर इत्यर्थः ॥ ८ ॥

गुहायामिव । सन्नित्यम् । यत्र विश्वं सर्वमिदं विकारजातं भवति एकनीडम् एकनिलयमविभक्तम् । कारणमेवोपसंहृतं सर्वविशेषम् । तस्मिन्निदं सञ्च विचैति सर्वम् । तस्मिन्नेव परमात्मनि इदं विकारजातं सर्वं समेति च उपसंहृतिकाले । समेत्य च । व्येति सृष्टिकाले सर्वमेव । स च परमेश्वरः ओतश्च शरीरभावेन प्रोतश्च जीवभावेन इतरथा वा विभूः विभवति च कार्यकारणभावेन । प्रजासु ॥ ८ ॥

वेनः पण्डितो विदितवेदान्तरहस्यः तत् ब्रह्म पश्यति जानातीत्यर्थः । कीदृशं तत् गुहा गुहायां रहः स्थाने निहितं स्थापितं दुर्ज्ञेयमित्यर्थः । सत् नित्यम् । यत्र ब्रह्मणि विश्वं कार्य्यजातमेकनीडं भवति एकमेव नीडमाश्रयो यस्य तत् अविभक्तमविशेषं कारणमेव भवतीत्यर्थः । तस्मिन् ब्रह्मणि इदं सर्वं भूतजातं समेति च सङ्गच्छते संहारकाले व्येति च निर्गच्छति सर्गकाले । स परमात्मा प्रजासु ओतः प्रोतश्च ऊर्ध्वतन्तुषु पट इव शरीरभावेन ओतः तिर्य्यक्तन्तुषु पट इव शरीरिभावेन प्रोतश्च । कीदृशः विभूः कार्य्यकारणरूपेण विविधं भवतीति प्रोतश्च । सर्वं स एवेत्यर्थः ॥ ८ ॥

प्र तद् वोचेदमृतं नु विद्वान् गन्धर्वो धाम विभृतं गुहा सत् । त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ॥ ९ ॥

(१)प्रं तत् प्रवोचेत् प्रब्रूयात् तत् अमृतं शास्वतम् । नु क्षिप्रं

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । प्र तत् । विद्वान् गन्धर्वः उ क्षिप्रममृतं शाश्वतं तत् ब्रह्म प्रवोचत् प्रब्रूयात् गन्धर्वलोके हि सुतरां ब्रह्मविद्या ज्ञायते धाम स्थानं विभृतं विहृतं नानाभूतं सर्गस्थितिप्रलयरूपैः गुहासत् गुहायामेव निगूढं सत् अविवृतं विदितवेदान्तरहस्याना किञ्च अस्य अमृतस्य त्रीणि पदानि गुहा गुहायामिव निहिता निहितानि

विद्वान् पण्डितः गन्धर्वः । गन्धर्वलोके हि ब्रह्मविद्या सुतरां ज्ञायते । धाम स्थानम् । विभृतं विहृतं नानाभूतैः सर्गस्थितिप्रलयैः । गुहासत् गुहायामिव निगूढम् अविवृतवेदान्तरहस्यमज्ञावांनाम् । किञ्च । त्रीणि पदानि निहितानि गुहा । गुहायामिव अस्य अमृतस्य सर्गस्थितिप्रलयाः त्रयो वा वेदाः त्रयो वा कालाः । भूयस्त्वोपलक्षणार्थं वा । भूयांसो हि तत्र गुणा श्रूयन्ते विज्ञानघनानन्दसत्यसङ्कल्पादयः । परब्रह्मान्तर्याम्यव्याकृतानि वा त्रयः पादाः । यश्च तानि वेद जानाति स पितुरपि पिता भवति । परं ब्रह्म भवतीत्यर्थः । तद्धि ब्रह्मरूपं श्रेष्ठम् ॥ ९ ॥

गां वेदवाचं धारयति विचारयतीति गन्धर्वः वेदान्तवेत्ता विद्वान् पण्डितः नु क्षिप्रम् अमृतं शाश्वतम् तत् ब्रह्म प्रवोचेत् प्रब्रूयात् गुहा गुहायां सत् विद्यमानं धाम स्वरूपं विभृतं विहृतं सर्गस्थितिप्रलयरूपैर्विभक्तम् । किञ्च अस्यामृतस्य त्रीणि पदानि स्वरूपाणि गुहा गुहायां ( निहिता ) निहितानि । पदानि सर्गस्थितिप्रलयाः वेदाः काला वा ब्रह्मान्तर्यामिविज्ञानात्मानो वा । किञ्च यः तानि पदानि वेद जानाति स पितुः ब्रह्मणोऽपि पिता परमात्मा असत् भवति परं ब्रह्मैव भवतीत्यर्थः ९ ॥

स नो॒ बन्धु॑र्जनि॒ता स वि॑धा॒ता धामा॑नि वेद॒ भुव॑नानि॒ विश्वा॑ । यत्र॑ दे॒वा अ॒मृत॑मानशा॒नास्तृ॒तीये॒ धाम॑न्न॒ध्यैर॑यन्त ॥ १० ॥

सर्गस्थितिप्रलयास्त्रयः त्रयो वेदा वा काला वा भूयस्त्वोपलक्षणार्थं भूयांसो हि तत्र गुणाः श्रूयन्ते विज्ञानघनानन्दसत्यसङ्कल्पादयः परब्रह्मान्तर्यामिविज्ञानात्मानो वा परब्रह्मान्तर्याम्यविकृतानि वा त्रयः पादाः यश्च तानि पदानि वेद सः पितुः पिता असत् भवति परं ब्रह्म भवतीत्यर्थः तद्धि ब्रह्मरूपं श्रेष्ठं ॥ ९ ॥

(१)स नो बन्धुः। स नोऽस्माकं बन्धुः सचास्माकञ्जनिता। जनयितेति प्राप्ते जनिता मन्त्र इति णिचो लोपः। स च नो विधता धारयिता। यः धामानि ब्रह्मणः स्थानानि वेद। भुवनानि भूतजातानि विश्वा सर्वाणि वेद नानान्यात्मनो भिन्नानि वेद। किञ्च। यत्र देवा अग्न्यादयः अमृतम्परब्रह्मलक्षणम्। आनशानाः व्याप्नुवन्तः तृतीये धामनि स्थाने अधि उपरि स्थिताः ऐरयन्त स्वेच्छया प्रवर्तन्ते तच्च यो वेद स नो बन्धुरित्याद्यनुवर्तते॥ १० ॥

स परमात्मा नोऽस्माकं बन्धुः बन्धुवन्मान्यः जनिता जनयिता जनिता मन्त्र इति (पा० ६, ४, ५३) णिचो लोपः स च विधाता धारयिता। सः विश्वा सर्वाणि भुवनानि भूतजातानि धामानि स्थानानि च वेद। देवा अग्न्यादयः तृतीये धामन् धामनि स्थाने स्वर्गरूपे अध्यैरयन्त स्वेच्छया वर्त्तन्ते। कीदृशा देवाः अमृतं मोक्षप्रापकं ज्ञानं यत्र ब्रह्माणि आनशानाः व्याप्नुवानाः अश्नुवते आनशानाः बहुलं छन्दसीति ( पा० २, ४ ७६ ) अशोर्ह्लादित्वेन द्वित्वे शानचि अभ्यासस्य नुगागमः। ब्रह्मनिष्ठं ज्ञानं प्राप्ताः सन्तः स्वर्गे देवा मोदन्त इति भावः॥ १० ॥

परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्र-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति। तद्यथा । स नो बन्धुः। सः नोऽस्माकं बन्धुः स चास्माकं जनिता जनयितेति प्राप्ते जनिता मन्त्रे इति णिचो लोपः स च नः विधाता धारयिता यः विश्वा भुवनानि सर्वाणि भूतजातानि धामानि ब्रह्मस्थानानि वेद परमात्मनोऽभिन्नानि जानाति किञ्च यत्र देवा अग्न्यादयः परब्रह्मलक्षणममृतम् आनशानाः व्याप्नुवन्तः तृतीये धामन् धामनि स्थाने अधि उपरिस्थिताः ऐरयं स्वेच्छया प्रवर्त्तन्त तं च यो वेद, स नो बन्धुरित्यनुवर्तते॥ १० ॥

दिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभि संविवेश ॥ ११ ॥

(१)इदानीं सर्वेषु भूतेष्वहमस्मि सर्वाणि च भूतानि मयि सन्तीत्येतद्दर्शनावगुण्ठितस्य सर्वमेधयाजिनो मुक्तिरुच्यते द्वाभ्यां कण्डिकाभ्याम् नचात्र सर्वमेधो ग्रहः कर्तव्यो दर्शनस्य प्राधान्यात् । एवं हि पश्यतो यजमानस्याग्निहोत्रादयो यज्ञाः सर्वे सर्वमेधा एव । आलम्बनमात्रं हि तत्र यज्ञाः । परीत्यभूतानि । अनेन दर्शनेन परिज्ञाय सर्वाणि भूतानि एवमेतदित्यवधार्य । एवं परिज्ञाय च सर्वान् लोकान् परिज्ञाय च सर्वाः दिशः परिज्ञाय च सर्वाः प्रदिशः । उपस्थाय च प्रथमजां वातं त्रयीलक्षणाम् । अपि हि तस्मात्पुरुषाद्ब्रह्मैव पूर्वमसृज्यतेति श्रुतिः प्रथमजा वाक् । ऋतस्य यज्ञस्य । आत्मना आत्मानं परेण ब्रह्मणा विशिष्टं ब्रह्म अभिसंविशति अपुनरावृत्तये ॥ ११ ॥

इदानीं सर्वभूतेष्वहमस्मि सर्वाणि भूतानि मयीति ज्ञानवतः सर्वमेधयाजिनो मुक्तिरुच्यते । किञ्च सर्वमेधग्रहोऽपि न ज्ञानं प्रधान

---

(१) अत्र वाराणसी० लि०पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । इदानीं सर्वेषु भूतेष्वहमस्मि भूतानि सर्वाणि मयि सन्तीत्येतद्दर्शनावगुण्ठितस्य सर्वमेधयाजिनो मुक्तिरुच्यते । द्वाभ्यां कण्डिकाभ्यां नचात्र सर्वमेधो ग्रहः कर्त्तव्यो दर्शनस्य प्राधान्यात् एवं हि पश्यतो यजमानस्याग्निहोत्रादयो यज्ञाः सर्वे सर्वमेधा एव आलम्बनमात्रं हि तत्र यज्ञाः परीत्य भूनानि भूतानि परीत्य अनेन दर्शनेन सर्वाणि भूतान्येवमेतादिति परिज्ञाय लोकान् परीत्य सर्वाः प्रदिशो दिशश्च परिज्ञाय प्रथमजां त्रयीलक्षणां वाच उपस्थाय अपि हि तस्मात्पुरुषाद् ब्रह्मैव पूर्वमसृज्यतेति श्रुतिः । प्रथमजा वाक् ऋतस्य यज्ञस्य आत्मना परेण ब्रह्मणा आत्मानं विशिष्टमभिसंविवेश अभिसंविशति अपुनरावृत्तये ॥ ११ ॥

म् ब्रह्मज्ञानवतो यजमानस्याग्निहोत्रादयोऽपि यज्ञाः सर्वमेधा एवे-त्याह परीत्य भूतानीति कण्डिकाभ्याम् ॥ एवं ज्ञानवान् सर्वमेधयाजी आत्मना जीवरूपेण ऋतस्य यज्ञस्यात्मानं यज्ञाधिष्ठातारं परमात्मानमभिसंविवेश प्रविशति ब्रह्मैव भवतीत्यर्थः । किं कृत्वा.भूतानि परीत्य सर्वभूतानि ब्रह्मत्वेन विज्ञाय । लोकान् परीत्य ब्रह्मरूपान् ज्ञात्वा । सर्वाः प्रदिशः विदिशः दिशश्च परीत्य तद्रूपा ज्ञात्वा । प्रथमजां प्रथमोत्पन्नां त्रयीरूपां वाचमुपस्थाय संसेव्य यज्ञादि कृत्वेत्यर्थः अपिहि तस्मात् पुरुषाद् ब्रह्मैव पूर्वमसृज्यतेति श्रुतेः प्रथमजा वाक् वेदरूपा ॥ ११ ॥

परि द्यावापृथिवी सद्य इत्वा परि लोकान् परि दिशः परि स्वः । ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्तदासित् ॥ १२ ॥

(१) परिद्यावा । परीत्ययमुपसर्ग इत्वेत्यनेन संबध्यते । परीत्य द्यावापृथिव्यौ अनेन दर्शनेन । परीत्य च लोकान् परीत्य च दिशः परीत्य च स्वः आदित्यम् । ऋतस्य यज्ञस्य तन्तुं विततं विचृत्य विच्छिद्य परिसमाप्य । सदा एव तत् तथाभूतमात्मानम् अपश्यत् पश्यति । तदभवत् तथाभूतं ब्रह्म भव-

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । परिद्यावा । परीत्युपसर्ग इत्वेत्यनेन सम्बध्यते द्यावापृथिव्यौ अनेन दर्शनेन परीत्य लोकान् दिशः स्वरादित्यं च परीत्य ऋतस्य यज्ञस्य तन्तुं विततं प्रसारितं विवृत्य परिच्छिद्य समाप्य सद्य एव तत् तथाभूतं ब्रह्म अपश्यत् पश्यति तदभवत् ब्रह्म भवति तत् आसीत् तदेवास्ति तदुक्तं तदेव सन्तस्तदु तद्बभूवाम इति यथा ह्येकस्याग्नेः प्रदीपसहस्राणि तुल्यशक्तीनि निर्गच्छन्ति एवं परमात्मनः इमे जीवा अप्युच्चरन्ति आभ्यां काण्डिकाभ्यां गृहस्थानामेव दर्शनान्मुक्तिर्भवति । तेषां हि भूयांसो यज्ञादय उपायाः ॥ १२ ॥

ति । तदासीत् तदेवास्ति । तदुक्तम् । तदेव सन्तस्तदु तद्ब-वाम । यथा ह्येकस्याग्नेः प्रदीपसहस्राणि तुल्यशक्तीनि निर्गच्छ-न्ति । एवं परमात्मन इमे जीवा अप्युच्चरन्ति । आभ्याङ्कण्डि-काभ्यां गृहस्थानामेव मुक्तिर्दर्शिता भवति तेषां हि भूयांस उ-पायाः यज्ञादयः ॥ १२ ॥

परीत्युपसर्ग इत्वेत्यनेन सम्बध्यते । सर्वमेधयाजी तत् ब्रह्म अप-श्यत् पश्यति तत् अभवत् भवति तत् आसीत् वस्तुगत्या तदेवा-स्ति । अज्ञाननिवृत्तिरेव दर्शनं भवनञ्चेति भावः । किं कृत्वा द्यावा-पृथिव्यौ सद्यः परि इत्वा परीत्य तद्रूपेण ज्ञात्वा लोकान् परीत्य दि-शः परीत्य स्वरादित्यं च परीत्य । गुह्यं वस्तु पुनः पुनः कथितं चि-त्तमारोहतीति पुनरुक्तिः । ऋतस्य यज्ञस्य तन्तुमिति कर्त्तव्यतां वित तं प्रसारितं यथा तथा विचृत्य समाप्य यज्ञं कृत्वेत्यर्थः । तदेव स-न्तस्तदु तद्भवामेति श्रुतेः ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेश्च ब्रह्मरूप-स्य जीवस्याज्ञाननिवृत्तिरेव ब्रह्माप्तिरित्यर्थः ॥ १२ ॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषꣳ स्वाहा ॥ १३ ॥

(१) इत उत्तरं तिसृभिः कण्डिकाभिर्मेधा याच्यते श्रीश्च चतुर्थ्या । सदसस्पतिम् सदसस्पतिर्देवता सदो यज्ञगृहं तस्य पतिः तम् । अद्भुतं महान्तमचिन्त्यशक्तिम् । प्रियमिन्द्रस्य । काम्यङ्कामसंपत्करम् कमनीयं वा धनमेधार्थिभिः । सनिन्धनं मेधाम् अथासिषं याचे द्विकर्मा चायं धातुः ॥ १३ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति । तद्यथा । इत उत्तरम् । तिसृभिः कण्डिकाभिर्मेधा याच्यते श्रीश्चतुर्थ्या च सदसस्पतिं सदसो यज्ञगृहस्य पतिमग्निं सनिं स-म्भजनीयं धनं मेधां च अयासिषं याचे द्विकर्मको याधातुर्याचनार्थः । किम्भूतम् अद्भुतं महान्तमचिन्त्यशक्तिम् इन्द्रस्य प्रियं काम्यं कामसंपत्करं कमनीयं वा धनमेधार्थिभिः ॥ १३ ॥

इत उत्तरमृक्त्रये मेधा याच्यते चतुर्थ्यां श्रीर्याच्यते । प्रथमा गायत्री लिङ्गोक्तदेवता । अग्निं सनिं द्रव्यदानं मेधां बुद्धिं च अयासिषं याचे द्विकर्मकः । कीदृशमग्निं सदसः यज्ञगृहस्य पतिं पालकम् अद्भुतमचिन्त्यशक्तिम् इन्द्रस्य प्रियं मित्रम् काम्यं कामनीयं धनमेधार्थिभिः ॥ १३ ॥

**यां मेधां देवगणाः पितरश्चोपासते । तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा ॥ १४ ॥**

(१) यां मेधां तिस्रोऽनुष्टुभ आग्नेयी । यां मेधां देवगणाः पितरश्च उपासते पूजयन्ति । तया माम् अद्य मेधया हे अग्ने मेधाविनं कुरु स्वाहा सुहुतमस्तु ॥ १४ ॥

अनुष्टुप् । हे अग्ने ! तया मेधया अद्य मां मेधाविनं बुद्धियुक्तं कुरु । स्वाहा सुहुतमस्तु । अस्मायामेधास्रजो विनिरिति ( पा० ५, २, १२१ ) विनिप्रत्ययः मेधास्यास्ति मेधावी तम् । तया कया देवगणाः देवसमूहाः पितरश्च यां मेधामुपासते पूजयन्ति । देवपितृमान्या बुद्धिरस्माकमस्त्वित्यर्थः ॥ १४ ॥

**मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिन्द्रश्च वायुश्च मेधां धाता ददातु मे स्वाहा ॥ १५ ॥**

(२) मेधां मे । लिङ्गोक्तदेवता । मेधां मे मह्यं वरुणो द-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । यां मेधाम् । लिङ्गोक्ता देवता वरुणोऽग्निः प्रजापतिरिन्द्रो वा तिस्रोऽनुष्टुभ आग्नेय्यः हे अग्ने देवगणाः पितरश्च यां मेधामुपासते । पूजयन्ति तया मेधया मां मेधाविनम् अद्य कुरु स्वाहा सुहुतमस्तु ॥ १४ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । मेधा मे लिङ्गोक्ता देवता वरुणोऽग्निः प्रजापतिरिन्द्रो वायुर्धाता च मे मह्यं मेधां ददतु ॥ १५ ॥

दातु । मेधां चाग्निः प्रजापतिश्च । मेधां च इन्द्रश्च वायुश्च । मेधां च धाता ददातु मे मह्यं स्वाहा सुहुतमस्तु ॥ १५ ॥

लिङ्गोक्तदेवतानुष्टुप् । वरुणो मे मह्यं मेधां ददातु अग्निः प्रजापतिश्च मे मेधां ददातु इन्द्रः वायुश्च मेधां ददातु धाता मे मेधां ददातु स्वाहा सुहुतमस्तु ॥ १५ ॥

इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् । मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥ १६ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

(१) इदं मे । श्री ऋक् । इदं ब्रह्म च क्षत्रश्च उभे ब्रह्मक्षत्रे श्रियम् अश्नुतां मदीयां श्रियमुपजीवताम् । मयि च देवाः दधतु स्थापयन्तु श्रियम् उत्तमाम् यथाहं सर्वजनभोग्यो भवामि । तस्यै ते स्वाहा । या त्वमेवं सर्वजनैरभिलष्यसे तस्यै श्रियै

---

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । इदं मे । श्रियै ऋक् इदं ब्रह्म क्षत्रं च उभे ब्रह्मक्षत्रे मे मम श्रियम् अश्नुतां मदीयां श्रियमुपजीवतां देवाः मयि उत्तमां श्रियं दधतु स्थापयन्तु यथाहं सर्वजनभोग्यो भवामि तस्यै ते स्वाहा या त्वमेवं सर्वजनैरभिलष्यसे तस्यै ते तुभ्यं श्रियै स्वाहा सुहुतमस्तु अप्राप्य मेधां श्रियं च यज्ञा न सिध्यन्तीति भावः ॥ १६ ॥

इति मन्त्रभाष्ये द्वात्रिंशोऽध्यायः ॥ ३२ ॥

ते तुभ्यं स्वाहा सुहुतमस्तु । अप्राप्य च मेधां श्रियं च न यज्ञाः सिध्यन्तीत्येष संबन्धः ॥ १६ ॥

इति उव्वटकृतौ मन्त्रभाष्ये द्वात्रिंशत्तमोऽध्यायः ॥ ३२ ॥

मन्त्रोक्तदेवतानुष्टुप् । श्रीकामोऽनया श्रियं याचते । ब्रह्म ब्राह्मणजातिः क्षत्रं क्षत्रियजातिः इदमिमे उभे ब्रह्मक्षत्रे मे मम श्रियमश्नुताम् । देवाः मयि उत्तमां श्रियं दधतु स्थापयन्तु । तस्यै प्रसिद्धायै ते तुभ्यं श्रियै स्वाहा सुहुतमस्तु । चौ समुच्चयार्थौ । श्रीमेधे विना यज्ञासिद्धेस्ते प्रार्थ्येते ॥ १६ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सार्वमेधिकमन्त्रोक्तिर्द्वात्रिंशोऽध्याय ईरितः ॥ ३२ ॥



# त्रयस्त्रिंशोऽध्यायः ।

अस्याजरासो दमामरित्रा अर्चद्धूमासो अग्नयः पावकाः । श्वितीचयः श्वात्रासो भुरण्यवो वनर्षदो वायवो न सोमाः ॥ १ ॥

(१) इत उत्तरं सप्तदशकाः पुरोरुग्गाना अस्मिन्नध्याये प-

( १ ) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । अस्या जरासः । इत उत्तरं सप्तदशकाः पुरोरुग्गणा अस्मिन्नध्याये पठ्यन्ते । तत्र सार्वमेधिकानां चतुर्णामह्नां चत्वार आद्याः पुरोरुच इत्येवमेव ते विदुः । यथा तस्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति । तस्याग्नेया ग्रहा भवन्ति । आग्नेय्यः पुरोरुच इति । एवमिन्द्रस्तदुक्थ्यो द्वितीयमहर्भवति । तस्यैन्द्रा ग्रहा भवन्ति । ऐन्द्र्यः पुरोरुचः । सूर्यस्तदुक्थ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्यः पुरोरुचः । वैश्वदेवश्चतुर्थमहर्भवति तस्य वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुच इति । परतस्त्रयोऽनुवाकाः अनारभ्याधीता एताश्च पुरोरुचो यच्छन्दस्काः प्रकृतिदृष्टास्तच्छन्दस्का इहापि प्रायसो दृश्यन्ते । अन्त्यमनुवाकं वर्जयित्वा ऐन्द्रवायव्यस्य द्वे पुरोरुचौ अस्या जरासः अस्य यजमानस्य अग्नयः ईदृशाः सन्तु किम्भूता अजरासः जरारहिताः दमां गृहाणा अरित्राः अरणाः नावामिवकानिपाताः । यद्वा दमां दमनीयानां रक्षसाम् अरणाः तारकाः अर्चद्धूमासः पूज्यधूमाः अर्चत् पूजनीयो धूमो धूमोपलक्षिता ज्वाला येषां ते तथा । पावकाः पावितारः शोधकाः अस्य सोमाश्च ईदृशाः सन्तु किम्भूताः श्वितीचयः श्वेतत्वप्रचयकारिणः । श्वेतत्वं प्रचयन्तः श्वात्रासः श्वात्रशब्दः क्षिप्रवचनः क्षिप्रधर्मकाः क्षिप्रकारिणः भुरण्यवः भर्त्तारः भरणकर्त्तारः वनर्षदः वनसदः रेफ उपजनः । वनमुदकं तत्र सन्नाः उदकाभिषुताः वायवो न वायव इवोद्दीपयितारः । गृहे रक्षमाणाः । यद्वा सर्वा-

ठ्यन्ते । तत्र सार्वमेधिकानां चतुर्णामह्नां चत्वार आद्याः पुरोरुच इत्येवमेते विदुः । यथास्याग्निष्टुदग्निष्टोमः प्रथममहर्भवति तस्याग्नेया ग्रहा भवन्ति आग्नेय्यः पुरोरुच इति । एवमिन्द्रस्तदुक्थ्यो द्वितीयमहर्भवति ऐन्द्र्यः पुरोरुचः । सूर्यस्तदुक्थ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्य्यः पुरोरुचः । वैश्वदेवश्चतुर्थमहर्भवति तस्य वैश्वदेवा ग्रहा भवन्ति विश्वदेव्यः पुरोरुच इति । य एते त्रयोऽनुवाका अनारभ्याधीताः । एताश्च पुरोरुचो यच्छन्दस्काः प्रकृतिदृष्टास्तच्छन्दस्का इहापि प्रायो दृश्यन्ते अन्त्यमनुवाकं वर्जयित्वा । अस्या जरासः । ऐन्द्रवायव्यस्य द्वे पुरोरुचौ । अस्य यजमानस्य अजरासः जरारहिताः। दमां ग्रहाणाम् अरित्राः अरणाः । नावामिवके निपाताः । यद्वा दमां दमनीयानां रक्षसाम् अरणास्तारकाः अर्चद्धूमासः अर्चन्पूजनीयो धूमो येषां ते अर्चद्धूमासः। पूज्यधूमाः पावकाः पावयितारश्च अग्नयो भवन्तु । अस्य च श्वितीचयः श्वेतत्वप्रचयकारिणः । श्वात्रासः श्वात्रशब्दः क्षिप्रवचनः क्षिप्रकर्माणः । भुरण्यवः भर्तारः वनसदः वनर्षदः रेफ उपजनः । वनमुदकन्तत्र सन्ना उदकाभिषुता इत्यर्थः । वायवो न वायव इवोद्दीपयितारः गृहे रक्षमाणाः सोमाः सन्तु । यद्वा सर्वाण्यरण्यग्निविशेषणानि । श्वितीचयः श्वेतत्वसंचनाः । वायव इव श्वात्रासः क्षिप्रगमनाः। वनर्षदो वनसदः । वनसदो वेटोरेफेणेति प्रातिशाख्यसूत्रेण रेफागमः । सोमा इव यजमानेष्टदाः । समानमितरत् ॥ १ ॥

---

ण्यग्निविशेषणानि श्वेतत्वं प्रचयन्तः वायव इव श्वात्रासः क्षिप्रगमनाः वने सीदन्तीति वनसदः सोमाः इव यजमानेष्टदाः अन्यत्पूर्वार्द्धे तद्वत् । वनर्षद इत्यत्र वनसदो वेटो रेफेणेति प्रातिशाख्यसूत्रेण रेफागमः ॥ १ ॥

सर्वमेधेऽग्निष्टोमसंस्थेऽग्निष्टुत्संज्ञे प्रथमेऽहनि अस्याजरास इत्याद्या महो अग्ने इत्यन्ताः सप्तदश ऋचोऽग्निदेवत्याः पुरोरुचो भवन्ति । पुरोरुक्शब्देन ऋग्रूपा ग्रहणमन्त्रा उच्यन्ते न यजूरूपाः ऋग्घि पुरोरुगिति श्रुतेः । उक्थ्यमहावैश्वदेवपात्नीवतहारियोजनेषु यजूरूपे ग्रहणमन्त्रे सत्यपि तं वा अपुरोरुक्कं गृह्णातीति श्रुतेस्तत्र न दोषः अत एवाग्नेयीभिर्ऋच एव निवर्त्यन्ते नोपयामादीनि ॥ आद्ये द्वे ऐन्द्रवायवग्रहस्य पुरोरुचौ । वत्सप्रीदृष्टाग्नेयी त्रिष्टुप् आ वायवित्यस्याः ( ७, ७, स्थाने । अस्य यजमानस्य अग्नयः ईदृशाः सन्तु । कीदृशाः अजरासः नास्ति जरा येषां ते अजराः वार्द्धक्यहीनाः । दमां गृहाणामरित्राः रक्षकाः नावामिव केनिपाताः अरिभ्यः त्रायन्तेऽरित्राः यद्वा दमानां दमनीयानां रक्षसामरित्राः तारकाः विभक्तेर्नुडभावात्सवर्णदीर्घः । अर्चद्धूमासः अर्चन् अर्चनीयः पूजनीयो धूमो धूमोपलक्षिता ज्वाला येषां तेऽर्चद्धूमाः । पावकाः शोधकाः । श्वितीचयः श्विति श्वेतवर्णं चिन्वन्ति श्वितिचयः चिनोतेः क्विप् अनिन्यमगमशासनामिति तुगभावः श्वितिशब्दस्य छान्दसो दीर्घः श्वेतत्वमुज्ज्वलत्वं यजमानस्य वर्धयन्तः । श्वात्रासः श्वात्रशब्दः क्षिप्रवाचकः श्वात्राः क्षिप्रफलप्रदाः । भुरण्यवः भरणकर्त्तारः । वनर्षदः वनसदः वने काष्ठे सीदन्तीति वनसदः वनसदोऽवेटो रेफेणेति ( ३, ३, ११ ) प्रातिशाख्यसूत्रेण रेफागमः । वायवो न वायव इव दीपयितारः । सोमा इव यजमानेष्टदाः ॥ १ ॥

हर॑यो धू॒मके॑तवो॒ वात॑जूता॒ उप॒ द्यवि॑ । यत॑न्ते॒ वृथ॑ग॒ग्नयः॑ ॥ २ ॥

(१)हरयो धूमकेतवः । ये अग्नयः हरयो हरितवर्णाः । धूमके

(१)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०ना० तद्यथा । हरयो धूमकेतवः । अग्नयः पृथक् नाना उपद्यवि द्युलोकं प्रति यतन्ते यत्नमाचरन्ति । पृथक् पृथगिति प्राप्ते वर्णव्यापत्तितः पृथक् कीदृशाः हरयः हरितवर्णाः धूमकेतवः धूमप्रज्ञानाः वातजूताः वातगमनाः तान् स्तुम इति शेषः ॥ २ ॥

तत्रः धूम्रप्रज्ञानाः । वातजूता वातगमनाः । उपद्यवि द्युलोकं प्रति । यतन्ते यत्नमाचरन्ति । वृथक् । पृथागिति प्राप्ते वर्णव्यापृतिः । पृथक् नाना । तां स्तुम इति शेषः ॥ २ ॥

गायत्री विश्वरूपदृष्टा इन्द्रवायू इत्यस्याः ( ७, ८ ) स्थाने। अग्नयः वृथक् पृथक् नानाप्रकारेण द्यवि स्वर्गे उपयतन्ते स्वर्गं गन्तुं यत्नं कुर्वन्ति । कीदृशाः हरयः हरितवर्णाः । धूमकेतवः धूम एव केतुर्ज्ञापको येषां ते यत्र धूमस्तत्राग्निरिति व्याप्तेः। वातजूताः वातेन जूतं गमनं प्रसारो येषां ते ॥ आ वायो इन्द्रवायू इमे ( ७, ७—८ ) अनयोः स्थाने एते द्वे उक्ते॥२॥

यजा नो मित्रावरुणा यजा देवाँ २॥ऋतं बृहत् । अग्ने यक्षि स्वं दमम् ॥ ३ ॥

(१)यजानः । मैत्रावरुणी गायत्री । यजा नः अस्माकम् मित्रावारुणौ । यज च देवान् यज च ऋतं यज्ञम् बृहत्माहान्तम् । हे अग्ने यक्षि यज च स्वन्दमं स्वकीयं गृहम् ॥ ३ ॥

गायत्री गोतमदृष्टा मैत्रावरुणस्य पुरोरुक् अयं वामित्यस्याः ( ७, ९ ) स्थाने । हे अग्ने ! नोऽस्माकं मित्रावरुणा यज । यज देवान् । यज बृहत् महत् ऋतं यज्ञम् । स्वं दमं गृहं यक्षि यज ॥ ३ ॥

(२)युक्ष्वा हि देवहूतमाँ २॥ अश्वाँ ॥ अग्ने रथीरिव । नि होता पूर्व्यः सदः ॥ ४ ॥

अथाश्विनस्य । युक्ष्वाहीति व्याख्यातम् ॥ ४ ॥

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० ना० तद्यथा । यजा नः मैत्रावरुणी गायत्री हे अग्ने नोऽस्माकं मित्रावरुणौ यज देवान् यज बृहत् महान्तं ऋतं यज यजस्व दमं गृहं यक्षि यज॥३

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु०॥ अथाश्विनस्य युक्ष्वाहीति व्याख्यातम् ॥ ४ ॥

आश्विनग्रहस्य पुरोरुक् या वां कशेत्यस्याः स्थाने ( ७, ११ ) व्याख्यातेयम् ( १३, ३७ ) ॥ ४ ॥

द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते । हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ ५ ॥

(१) द्वे विरूपे । त्रिष्टुप् शुक्रस्य । द्वे रात्र्यहनी विरूपे नानारूपे । कृष्णा रात्रिः शुक्लमहः चरतः आदित्येन सहाहश्चरति इतरत्र अग्निना तु रात्रिः । स्वर्थे शोभनार्थे । अन्यान्या वत्समुपधापयेते । अन्या एका रात्रिः एकमाग्निरूपं वत्सम् अन्या एकमहः एकमादित्यरूपं वत्सम् उपधापयेते । रात्रिरग्निदेवत्यमग्निहोत्रम् अहः सूर्यदेवत्यमग्निहोत्रं वत्समित्याशयः । किञ्च हरिर्हरितवर्णोऽग्निः अन्यस्यां रात्रौ स्वधावान् अन्नवानुप-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । द्वे विरूपे त्रिष्टुप् । शुक्रस्य द्वे रात्र्यहनी विरूपे नानारूपे कृष्णा रात्रिः शुक्लमहः चरतः आदित्येन सहाहश्चरति । इतरत्र अग्निना तु रात्रिः स्वर्थे शोभनोऽर्थो ययोस्ते अन्यान्या वत्सम् उपधापयेते अन्या एका रात्रिः एकमग्निं वत्सम् अन्यदेकमह आदित्यं वत्समुपधापयेते रात्रिरग्निदैवत्यमग्निहोत्रम् अहः सूर्यदैवत्यमग्निहोत्रं वत्समिति भावः किञ्च हरिः हरितवर्णोऽग्निः अन्यस्यां रात्रौ स्वधावान् अन्नवान् उपभोग्यस्तापपाकप्रकाशैः भवति शुक्रः शुक्लवर्णः आदित्यः अन्यस्याम् अहनि सुवर्चा ददृशे दृश्यते यद्वा द्वे द्यावापृथिव्यौ विरूपे नानारूपे परस्परापेक्षया चरतः स्वार्थे कल्याणप्रयोजने अन्या अग्निं वत्सम् । अन्यादित्यं वत्समुपयेते घोषयतः किञ्च हरिरग्निरेकस्यां पृथिव्यां स्वधावान् भवति तत्र ह्याहुतयो हूयन्ते शुक्र आदित्यः अन्यस्यां दिवि सुवर्चाः सुतेजा दृश्यते ॥ ५ ॥

भोग्यः तापपाकप्रकाशैर्भवति । शुक्रः शुक्लवर्ण आदित्यः अन्यस्यामहनि ददृशे दृश्यते सुवर्चाः सुतेजाः । यद्वा द्वे द्यावपृथिव्यौ विरूपे नानारूपे परस्परापेक्षया चरतः स्वर्थे कल्याणप्रयोजने अन्या पृथिवी अग्निवत्सम् अन्या द्यौरादित्यं वत्सम् उपधापयेते पोषयतः । किञ्च हरिरग्निः अन्यस्यां पृथिव्यां स्वधावान् भवति । शुक्र आदित्यश्च अन्यस्यान्दिवि ददृशे सुवर्चाः दृश्यते सुतेजः ॥ ५ ॥

शुक्रग्रहपुरोरुक् कुत्सदृष्टा त्रिष्टुप् तं प्रत्नथेत्यस्याः ( ७, १२ ) स्थाने ! द्वे रात्र्यहनी चरतः निरन्तरं प्रवर्तते । कीदृशे विरूपे विविधं रूपं ययोस्ते कृष्णा रात्रिः शुक्लमहः । स्वर्थे शोभनोऽर्थो ययोस्ते कल्याणप्रयोजने । अन्यान्या अन्या च अन्या च वत्समुपधापयेते क्षीरं पाययतः अन्या एका रात्रिः वत्समग्निमुपधापयते रात्रावग्निदेवत्यमग्निहोत्रम् अन्या दिवसरूपा वत्समादित्यमुपधापयते अह्नि सूर्य्यदेवत्यमग्निहोत्रम् । किञ्च तदेवाह अन्यस्यां रात्रौ हरिः हरितवर्णोऽग्निः स्वधावान् अन्नवान् भवति अन्यस्यामहनि शुक्रः शुक्लः आदित्यः सुवर्चाः शोभनतेजाः ददृशे दृश्यते । यद्वा द्वे द्यावापृथिव्यौ अग्निर्भूमी स्वधावान् रविर्दिवि सुवर्चाः दृश्यते ॥ ५ ॥

अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः । यमप्नवानो भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशे विशे ॥ ६ ॥

(१) मन्थिनः अयमिहेति व्याख्यातम् ॥ ६ ॥

मन्थिग्रहपुरोरुक् अयं वेन इत्यस्याः ( ७, १६ ) स्थाने । व्याख्याता ( ३. १५ ) ॥ ६ ॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति मन्थिनः अयमिह व्याख्यातः ॥ ६ ॥

त्रीणि॑ श॒ता त्री स॒हस्रा॑ण्य॒ग्निं त्रि॒ꣳशच्च॑ दे॒वा न॒वं चा॑सपर्य्यन् । औक्ष॑न् घृ॒तैरस्तृ॑णन् ब॒र्हिर॑स्मा॒ आदि॒द्धोता॑रं॒ न्य॑सादयन्त ॥ ७ ॥

(१)वैश्वदेवं गृह्णाति । त्रीणि शतानीति त्रीणि शतानि त्रीणि सहस्राणि । त्रिंशत् नव च । देवाः असपर्यन् । सपर्यतिः परिचरणकर्मा परिचरितवन्तः कथमिति चेत् । औक्षन् असिञ्चन् अग्निं घृतैः । अस्तृणन् बर्हिश्च अस्मै अग्नये । आत् इत् अथ एव अनन्तरमेव । होतारं वृत्त्वा न्यसादयन्त । नितरां विनियुक्तवन्तः ॥ ७ ॥

विश्वामित्रदृष्टा त्रिष्टुप् विश्वदेवदैवतस्याग्रयणग्रहस्य पुरोरुक् ये देवास इति ( ७, १९ ) स्थाने । त्रीणि शता त्रीणि शतानि त्री त्रीणि सहस्राणि त्रिंशत् नव च देवाः यथा ३३३९ । एते वस्वादिगणा देवा अग्निमसपर्यन् परिचरन्ति सपर्य्यतिः परिचरणकर्मा । यद्वागमोक्ता देवाः नवैवाङ्कास्त्रिवृद्धाः स्युर्देवानां दशकैर्गणैः ते ब्रह्मविष्णुरुद्राणां शक्तीनां वर्णभेदत इति ते च ३३३ ३३३ ३३३ एतावन्तो भवन्ति । कथं परिचरन्ति तदाह ते घृतैरग्निमौक्षन् असिञ्चयन् उक्ष सेचने लुङ् अस्मै अग्नये बर्हिरस्तृणन् आच्छादयन् आत इत् अनन्तरमेव होतारं वृत्वा होत्रे कर्मणि न्यसादयन्त नियुक्तवन्तः । घृतसेचनबर्हिः स्तरणहोतृवरणमेवाग्निपरिचर्य्येति भावः ॥ ७ ॥

मू॒र्धानं॑ दि॒वो अ॑र॒तिं पृ॑थि॒व्या वै॑श्वान॒रमृ॒त आ

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । वैश्वदेवं गृह्णाति त्रीणि शतानि त्रीणि सहस्राणि त्रिंशत् नव च देवाः अग्निमसपर्यन् परिचारितवन्तः समपर्यतिः परिचरणकर्मा कथमिति चेत् घृतैः अग्निम् अक्षन् असिञ्चन् अस्मै अग्नये बर्हिः अस्तृणन् आत् इत् अथ एव अनन्तरमेव होतारं वृत्त्वा होत्रे नितराम् असादयन्त विनियुक्तवन्तः ॥ ७ ॥

जातमग्निम्। कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥८॥

(१)अथ ध्रुवस्य। मूर्द्धानन्दिव इति व्याख्यातम् ॥ ८ ॥

प्रकृतिवदेव ध्रुवग्रहपुरोरुक्। व्याख्याता ( ७, २४ ) ॥ ८ ॥

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः ॥ ९ ॥

(२)ऐन्द्राग्नस्य। अग्निर्वृत्राणि गायत्री। अग्निः वृत्राणि यजमानस्य वृजिनानि। जङ्घनत् अत्यर्थं हन्ति। किं भूतः द्रविणस्युः धनं हविर्लक्षणमिच्छम्। केन हेतुना जङ्घनत् विपन्यया। विपनिरर्चतिकर्मा यजमानपूजया निमित्तभूतया। पुनः किंभूतोऽग्निः समिद्धः दीप्तः शुक्रः शुक्लः आहुतः अभिहुतः सन् ॥ ९ ॥

गायत्री भरद्वाजदृष्टा ऐन्द्राग्नग्रहपुरोरुक् इन्द्राग्नी आगतमित्यस्याः ( ७, ३१ ) स्थाने। अग्निर्वृत्राणि पापानि जङ्घनत् अत्यर्थं हन्ति यङ्लुगन्तम्। कया विपन्यया पनतिरर्चतिकर्मा विविधया पूजया पापं हन्ति। कीदृशोऽग्निः द्रविणस्युः द्रविणो धनमिच्छति द्रविणस्यति सुप आत्मनः क्यच् क्याच्छन्दसीति ( पा० ३, २, १७०)

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा। अथ ध्रुवस्य मूर्धानं दिव इति व्याख्यातं प्राकृत एव ग्रहः ॥ ८ ॥

(२)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०ना० तद्यथा। ऐन्द्राग्नस्य अग्निर्वृत्राणि गायत्री अग्निर्वृत्राणि यजमानस्य पापानि जङ्घनत् अत्यर्थं हन्ति केन हेतुना विपन्यया पनतिरर्चतिकर्मा यजमानपूजया निमित्तभूतया किम्भूतः द्रविणस्युः हविर्लक्षणं धनमिच्छन् समिद्धः दीप्तः शुक्रः शुक्लः आहुतः अभिहुतः सन्॥९॥

क्यजन्तादुप्रत्ययः हविर्लक्षणं धनमिच्छन् । समिद्धः दीप्तः । शुक्रः शुद्धः । आहुतः निमन्त्रितः ॥ ९ ॥

**विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः ॥ १० ॥**

(१) वैश्वदेवस्य । विश्वेभिः सोम्यं गायत्री । विश्वेभिः देवैः सह । सोमसम्बन्धि मधु हे अग्ने इन्द्रेण च सह वायुना च सह पिब । मित्रस्य धामभिर्नामभिः स्तुतः सन् । तदुक्तम् त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवासि दस्र ईड्य इति॥१०॥

गायत्री मेधातिथिदृष्टा वैश्वदेवग्रहपुरोरुक् ओमासश्चर्षणीत्यस्याः ( ७, ३३ ) स्थाने । हे अग्ने ! विश्वेभिः विश्वैर्देवैः इन्द्रेण वायुना च सह सोम्यं सोममयं मधु पिब । कीदृशस्त्वं मित्रस्य धामभिः नामभिः स्तुत इति शेषः त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि दस्र ईड्यः इति श्रुतेः ॥ १० ॥

**आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके । अग्निः शर्धमनवद्यं युवानꣳ स्वाध्यं जनयत् सूदयच्च ॥ ११ ॥**

( १ ) आ यत् । द्वाभ्यां मरुत्वतीयाभ्यां द्वे त्रिष्टुभौ ।

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । वैश्वदेवस्य गायत्री विश्वेभिः सौम्यं हे अग्ने विश्वैर्देवैः इन्द्रेण वायुना च सह सोम्यं सोममयं मधु पिब मित्रस्य धामभिर्नामभिः स्तुतः सन् तदुक्तं त्वमग्ने वरुणो जायसे यस्त्वं मित्रो भवसि दस्र ईड्य इति ॥ १० ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । आ यत् द्वाभ्यां मरुत्वतीयाभ्यां द्वे त्रिष्टुभौ व्यवहितप्रायः आहुतिपरिणामवादी आ उपसर्गः आनट् अनेन सम्बध्यते अश्नोतेरेतद्रूपं यत् यदा इषे अन्नाय निषिक्तं नितरां सिक्तं देवतोद्देशेन

व्यवहितपदप्रायः आहुतिपरिणामवादिन्यौ । आ उपसर्गः आनट् इत्यनेनाख्यातेन सम्बध्यते । यत् यदा इषे अन्नाय निषिक्तं नितरां सिक्तं देवतोद्देशेन क्षिप्तम् शुचिमन्त्रैः संस्कृतम् तेजः जगदुत्पत्तिबीजम् । नृपतिम् अग्निम् आ आनट् अश्नोतेरेतद्रूपम् व्याप्नोति । ततोऽपि रेतो मध्यस्थानं व्याप्नोति विद्युल्लक्षणं तेजः । द्यौरभीके । द्यौरपि तस्याहुतिपरिणामभूतस्य रसस्य अभीके निकट एव वर्त्तते । तत् अग्निः शर्द्धम् शर्द्धं बलं तस्य हेतुभूतम् अनवद्यं प्रशस्यम् युवानं परिपक्वं रसं स्वाध्यं सुष्ठु ध्यानीयम् । सर्वोऽपि वृष्टिमभिलषति । जनयत् जनयति अष्टभिर्मासैः । सूदयच्च । षूद क्षरणे । निष्पन्नमुदकं चतुर्भिमासैः क्षरति च वृष्टिद्वारेण ॥ ११ ॥

त्रिष्टुप् पराशरदृष्टा मरुत्वतीयग्रहपुरोरुक् इन्द्र मरुत्व इत्यस्याः ( ७, ३५ ) स्थाने । आ उपसर्गः आनडित्यनेन सम्बध्यते यत् यदा तेजः तेजसो हेतुभूतं हविर्नृपतिं नुर्यजमानस्य पालकमग्निमानट् अश्नुते व्याप्नोति यदाग्नौ हविर्हूयत इत्यर्थः तदा अग्निः रेतो जगद्बीजभूतं जलं द्यौरभीके प्रथमा षष्ठ्यर्थे दिवः समीपेऽन्तरिक्षे ( जनयत् ) जनयति मेघरूपेण च पुरः सूदयत् सूदयति क्षरति वृष्टिद्वारेण षुद क्षरणे । कीदृशं तेजः इषे वृष्ट्यै निषिक्तं देवतोद्देशेनाग्नौ सिक्तं हुतम । शुचि मन्त्रसंस्कृतम् । कीदृशं रेतः शर्धं बलहेतुभूतम् अनवद्यं निर्दोषम् अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेष्विति ( पा० ३, १, १०१ ) गर्ह्यार्थेऽवद्यमिति निपातः न अवद्यमनव-

---

क्षिप्तं शुचिमन्त्रसंस्कृतम् ईदृशं रेतः जगदुत्पत्तिबीजं नृपतिमग्निम् आनट् व्याप्नोति ततः तेजोविद्युल्लक्षणं मध्यस्थानं व्याप्नोति द्यौरपि तस्याहुतिपरिणामभूतस्य रसस्य अभीके निकटे एव वर्त्तते अग्निः शर्द्धं बलस्य हेतुभूतम् अनवद्यं प्रशस्यं युवानं परिपक्वरसं स्वाध्यं सुध्यानीयं रसं सर्वो हि वृष्टिमभिलषति जनयन् जनयति अष्टभिर्मासैः सूदयत् षूद क्षरणे निष्पन्नमुदकं चतुर्मासैः क्षरति वृष्टिद्वारेण ॥ ११ ॥

घमगर्ह्यं प्रशस्यम् । युवानं युवतुल्यं परिपक्वरसं दृढमित्यर्थः । स्वाध्यं सुष्ठु आ समन्तात् ध्यायते चिन्त्यत इति स्वाध्यं चिन्तनीयम् सर्वो वृष्टिमिच्छति । हविषा तर्पितोऽग्निरष्टमासैर्जलं निष्पाद्य वर्षासु वर्षतीत्यर्थः व्यवहितपदो मन्त्रः ॥ ११ ॥

**अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु । सं जास्पत्यꣳ सुयममाकृणुष्व शत्रूयतामभितिष्ठा महाꣳसि ॥ १२ ॥**

(१) अग्ने शर्द्ध । हे भगवन्नग्ने शर्द्ध उत्सहस्व बलमाविष्कुरु । महते सौभगाय । महत्सौभाग्यं लोकस्थितिः । एवं कुर्वतस्तव द्युम्नानि उत्तमानि सन्तु । द्युम्नं द्योततेर्यशोऽन्नं वा । हविर्लक्षणानि धनानि सन्तु यशांसि वा । किञ्च एतच्च त्वं प्रार्थ्यसे । संजास्पत्यम् । जायापतिमिति प्राप्ते आकारयकारयोर्लोपः सुक् च । सुयमं सुनियमम् अन्योन्यबद्धरागं समाकृणुष्व कुरुष्व । शत्रूयतां शत्रुत्वमिच्छताम् । अभितिष्ठ पद्भ्यामभिभव । महांसि महत्त्वानि ॥ १२ ॥

त्रिष्टुप् विश्ववारादृष्टा द्वितीयमरुत्वतीयपुरोरुक् मरुत्वन्तं वृषभमित्यस्याः ( ७, ३६ ) स्थाने । हे अग्ने ! त्वं शर्ध उत्सहस्व बलमाविष्कुरु किमर्थं महते सौभगाय महत्सौभाग्यं लोकस्थितिः ।

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । अग्ने शर्द्ध । हे अग्ने महते सौभागाय शर्द्ध उत्सहस्व बलमाविष्कुरु महत्सौभाग्यं लोकस्थितिः एवं कुर्वतस्तव उत्तमानि सन्तु द्युम्नं द्योततेर्यशो वा अन्नं वा हविर्लक्षणानि धनानि यशांसि वा सन्तु किञ्च जास्पत्यं जायापत्यमिति प्राप्ते आकारयकारयोर्लोपः । सुगागमश्च जायापत्यं सुयमं सूपनिबद्धरागं समाकृणुष्व कुरुष्व शत्रूयतां शत्रुत्वमिच्छतां महांसि महत्त्वानि अभितिष्ठ पद्भ्यामभिभव ॥ १२ ॥

उद्यच्छतस्तव द्युम्नानि उत्तमानि उत्कृष्टानि सन्तु द्युम्नं द्योततेर्यशो वान्नं वेति ( निरु० ५, ५ ) यास्कः हविर्लक्षणान्यन्नानि यशांसि वा सन्तु । किञ्च जास्पत्यं जायापत्यमित्यर्थे जास्पत्यामिति निपातः जायापत्यं पत्नीयजमानरूपं सुयमं सुनियमं जितेन्द्रियमन्योन्याबद्धरागं समाकृणुष्व कुरु सुष्ठु यम्यते सुयमम् ईषद्दुः सुष्विति ( पा० ३, ३. १२६ ) खल्प्रत्ययः । किञ्च शत्रूयतां शत्रुत्वमिच्छतां महांसि तेजांसि अभितिष्ठ आक्रमस्व अभिभव ॥ १२ ॥

त्वाᳬं हि मन्द्रतममर्कशोकैर्ववृमहे महि नः श्रोष्यग्ने । इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति राधसा नृतमाः ॥ १३ ॥

(१) त्वाᳬंहि । महेन्द्रस्य । त्रिष्टुप् । त्वां हि त्वामेव मन्द्रतमं मन्दनीयतमं मृदुहृदयं वा । अर्कशोकैः मन्त्रैर्दीप्तैः । यथोक्तस्थानकर्णानुमदानवाद्भिः । देवताद्यात्मवित्तसन्तानगर्भगुरुसुश्रूषाधिगताविप्लावितब्रह्मचर्यैः । एवं हि मन्त्रा दीप्ताः स्युः । ववृमहे वृतवन्तो वयम् । त्वं च वृतः सन् महि महत् स्तोत्रं नोऽस्माकम् श्रोषि श्रृणोषि । श्रुत्वा च प्रभावयासि कर्म हे अग्ने । किञ्च इत्थं नाम त्वं महती देवता । येन इन्द्रन्न । उपमार्थीयो नकारः । इन्द्रमिव त्वा शवसा बलकृत्या पृणन्ति

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । त्वाᳬंहि माहेन्द्रस्य त्रिष्टुप् । हे अग्ने अर्कशोकैर्मन्त्रैर्दीप्तैः त्वां ववृमहे वृतवन्तो वयम् अविप्लुतब्रह्मचर्यैर्यथोक्तमधीता मन्त्रा दीप्ताः स्युः किन्त्वां मन्द्रतमं मृदुहृदयतमं मन्दनीयतमं वा त्वं च नोऽस्माकं महि महत् स्तोत्रं श्रोषि शृणोषि श्रुत्वा च प्रदयास्मत्कर्म किञ्च त्वं महती । देवता येन नृतमाः मनुष्यतमाः याजयूकाः त्वां राधसा हविर्लक्षणेन धनेन पृणन्ति पूरयन्ति किं त्वां शवसा बलेन इन्द्रं न इन्द्रमिव वायुमिव च ॥ १३ ॥

पूरयन्ति । वायुमिव च पूरयन्ति राधसा हविर्लक्षणेन धनेन नृतमाः मनुष्यतमाः मनुष्यश्रेष्ठाः ॥ १३ ॥

त्रिष्टुब् भरद्वाजदृष्टा माहेन्द्रग्रहपुरोरुक् इन्द्रो नृवदित्यस्याः (७, ३९) स्थाने हे अग्ने ! वयं त्वां ववृमहे वृतवन्तः कीदृशं त्वां मन्द्रतममतिगम्भीरम् कैः अर्कशोकैः अर्कवत् शोचन्तेऽर्कशोका मन्त्रास्तैः अविप्लुतब्रह्मचर्य्यैर्यथोक्तमधीता मन्त्रा अर्कवद्दीप्ताः स्युरिति भावः । हि यस्मात् नोऽस्माकं महि महत् स्तोत्रं त्वं श्रोषि शृणोषि विकरणव्यत्ययः । किञ्च नृतमाः मनुष्यश्रेष्ठाः देवता देवतां त्वा त्वां राधसा हवीरूपेणान्नेन पृणन्ति पूरयन्ति देवताशब्दात् सुपो लुक् । कीदृशं त्वां शवसा बलेन इन्द्रं न इन्द्रमिव वायुमिव च स्थितम् न इवार्थे उभयोःसम्बध्यते ॥ १३ ॥

त्वे अ॑ग्ने स्वाहुत प्रि॒यासः॑ सन्तु सू॒रयः॑ । य॒न्तारो॒ ये म॒घवा॑नो जना॑नामू॒र्वान् दय॑न्त गोना॑म् ॥ १४ ॥

(१) त्वे अग्ने आदित्यग्रहस्य । धृत्यौ । त्वे तव हे अग्ने । स्वाहुत । साधुना प्रकारेणाभिहुत । प्रियासः । प्रियाः सन्तु सूरयः पण्डिताः । ये च यन्तारः निगूहितसर्वविषयाः । ये च मघवानः धनवन्तः । जनानां मध्ये । न केवलं धनवन्त एव किन्तर्हि । ऊर्वान् अन्नप्रकारान् दयन्त । दयतिर्दानार्थः ।

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति । तद्यथा । त्वे अग्ने आदित्यग्रहस्य पुरोरुचो बृहत्यौ हे अग्ने हे स्वाहुत साधुना प्रकारेण अभिहुत ते सूरयः पण्डिताः त्वे तव प्रियासः प्रियाः सन्तु ते के ये जनानां मध्ये यन्तारः निगृहीतसर्वविषयाः ये च मघवानः धनवन्तः न केवलं धनवन्त एव किं तर्हि ये गोनां गवां संबन्धिभिरुपसेचनैः सहितान् उर्वान् अन्नप्रकारान् दयन्त दयतिर्दानार्थः गवामिति प्राप्ते गोः पदान्त इति नुट् ॥ १४ ॥

ददति। गोनाम् गवामिति प्राप्ते गोः पादान्त इति नुट्। गवां संबन्धिभिरुपसेचनैः सहितान् ॥ १४ ॥

द्वे बृहत्यौ आदित्यग्रहपुरोरुचौ आद्या वसिष्ठदृष्टा अन्या प्रस्कण्वदृष्टा कदाचन स्तरीरसि कदाचन प्रयुच्छसीत्यनयोः (८, २, ३) स्थाने। सुष्ठु हूयते स्वाहुतः हे स्वाहुत। हेऽग्ने। जनानां मध्ये ये जनाः गोनां गवां सम्बन्धिभिर्दुग्धदधिघृतैः सह ऊर्वान् अन्नविशेषान् पुरोडाशादीन् दयन्त ददति दय दानगतिहिंसादानेषु लङ् अडभाव आर्षः। ते सूरयः पण्डिताः त्वे तव प्रियासः सन्तु। कीदृशास्ते यन्तारः निगृहीतेन्द्रियाः। मघवानः धनवन्तः। गोनामित्यत्र गोः पादान्तः इति (पा० ७, १, ५७) नुडागमः ॥ १४ ॥

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः। आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम्॥१५॥

(१) श्रुधि श्रुत्कर्ण। हे अग्ने श्रुधि शृणु। प्रकृत इत्यादिना धिभावः। सस्वरं यज्ञमाग्नेयम्। हे श्रुत्कर्ण। शृण्वतः कर्णावर्थिनां वचांसि यस्य स तथोक्तः। त्वयि श्रुतवति। वह्निभि र्वोढृभिर्देवैः। स यावभिः। या प्रापणे वनिप्। समानप्राप्तिभिः। सहिताः। आसीदन्तु बर्हिषि। मित्रः अर्यमा च। अन्ये च प्रातर्यावाणः। प्रातरेव हविः प्राप्तिर्येषां ते तथोक्ताः ॥ १५ ॥

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति। तद्यथा। श्रुधि श्रुत्कर्ण हे अग्ने हे श्रुत्कर्ण शृणुतः अर्थिनां वचांसीति श्रुतौ कर्णौ यस्य स श्रुत्कर्ण त्वम् अध्वरं श्रुधि शृणु त्वयि अध्वरं श्रुतवति वह्निभिर्वोढृभिः सयावभिः सह यान्ति ते सनावानः तैः वनिप् समानप्राप्तिभिः देवैः सहिताः एते बर्हिषि आसीदन्तु के मित्रः अर्यमा अन्ये च प्रातर्यावाणः प्रातर्यान्ति ते प्रातर्यावानः प्रातः एव येषां हविः प्राप्तिः ॥ १५ ॥

शृणुतः इति श्रुतौ अर्थिवचः श्रोतारौ कर्णौ यस्य स श्रुत्कर्णः हे श्रुत्कर्ण ! देवैः सह त्वमध्वरं यज्ञं श्रुधि शृणु । कीदृशैर्देवैः वह्निभिः हवींषि वहन्ति ते वह्नयः तैः । सयावभिः सह यान्ति ते सयावानः तैः । किञ्च मित्रः अर्य्यमा प्रातर्यावाणश्च देवाः बर्हिषि आसीदन्तु उपविशन्तु प्रातर्यान्ति हविः प्राप्नुवन्ति ते प्रातःसवने येषां हविःप्राप्तिस्ते ॥ १५ ॥

**विश्वेषामदितिर्यज्ञियानां विश्वेषामतिथिर्मानुषाणाम् । अग्निर्देवानामव आवृणानः सुमृडीको भवतु जातवेदाः ॥ १६ ॥**

(१) विश्वेषामदितिः । आदित्यग्रहे दधिश्रयणमन्त्रः । अयमपि पुरोरुचां मध्ये गण्यते । तथा हि । कदाचन स्तरीरसि । कदाचन प्रयुच्छसि । यज्ञो देवानामिति तिसृणामादित्येभ्यस्त्वेत्यनुषङ्गः । त्रिष्टुप् । योऽग्निः विश्वेषाम् अदितिः अदीनः । यज्ञियानाम् । यज्ञसंपादकानाम् । विश्वेषां च अतिथिः मानुषाणाम् आग्निहोत्रिणाम् । सोऽग्निः देवानाम् अवः अन्नं हविर्लक्षणम् आवृणानः समर्प्पयन् । सुमृडीको भवतु जातवेदाः जातप्रज्ञानः ॥ १६ ॥

त्रिष्टुब्गोतमदृष्टादित्यग्रहदधिश्रयणे विनियुक्ता यज्ञा देवानामित्यस्याः ( ८, ४ ) स्थाने । अग्निः ईदृशो भवतु । कीदृशः विश्वेषां

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । विश्वेषामदितिः आदित्यग्रहे दधिश्रयणमन्त्रः त्रिष्टुप् अयमपि पुरोरुचां मध्ये गण्यते तथाहि कदाचन स्तरीरसि कदाचन प्रयुच्छसि यज्ञो देवानाम् इति तिसृणाम् आदित्येभ्यस्त्वेत्यनुषङ्गः अग्निः सुमृडीकः सुखकारी भवतु कीदृशः विश्वेषां यज्ञियानां यज्ञसंपादिनां मध्ये अदितिः अदीनः मुख्यः विश्वेषां मानुषाणाम् अतिथिः देवानामव हविर्लक्षणमन्नम् आवृणानः समर्पयन् जातवेदाः जातप्रज्ञानः ॥ १६ ॥

सर्वेषां देवानां मध्ये अदितिः नास्ति दितिः खण्डनं यस्य अदीनः कीदृशानां देवानाम् यज्ञियानां यज्ञार्हाणाम् । तथा विश्वेषां सर्वेषां मानुषाणां नराणामतिथिः पूज्यः देवानामवो हविर्लक्षणमन्नमावृणानः समर्पयन् । सुमृडीकः शोभनं मृडीकं सुखं यस्मात् सुखकारी जातवेदाः जातप्रज्ञानः ॥ १६ ॥

**महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये । श्रेष्ठे स्याम सवितुः सवीमनि तद् देवानामवो अद्या वृणीमहे ॥ १७ ॥**

(१) महो अग्नेः । सावित्रस्य । त्रिष्टुप् । महः महतः अग्नेः समिधानस्य संदीप्यमानस्य । शर्मणि शरणे आश्रये वर्तमानाः अनागाः अनपराधाः स्याम । येन च मित्रे वरुणे अनपराधा एव स्याम । स्वस्तये अविनाशाय । येन च श्रेष्ठे स्याम सवितुः । सवीमनि । प्रसवे । तत् देवानां संबन्धि अवः हविर्लक्षणमन्नम् । अद्य । आवृणीमहे । अभिसंस्कुर्मः ॥ १७ ॥

लुशोधानाकदृष्टा त्रिष्टुप् सवित्रग्रहपुरोरुक् वाममद्येत्यस्याः ( ८, ६ ) स्थाने । देवानां तत् अवः अन्नं हविर्लक्षणमद्य वयं वृणीमहे संस्कुर्मः क्व सति सवितुः सूर्य्यस्य सवीमनि सति आज्ञायां सत्याम् देवस्य त्वा सवितुः प्रसव इत्युक्तेः सवीमा प्रसवोऽनुज्ञेति कोशः । कीदृश सवीमनि श्रेष्ठे अन्यदेवाज्ञातः सूर्य्याज्ञोत्कृष्टा । तत् किम् येनान्नेन वयं स्वस्तये स्वस्तिमन्तो भवेम । कीदृशा वयम् अग्नेः शर्मणि शरणे आश्रये मित्रे वरुणे च अनागाः अनागसः सुपां

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । महो अग्नेः सावित्रस्य त्रिष्टुप् देवानां तत् अवः हविरन्नम् अद्य वयं वृणीमहे अभिसंस्कुर्मः तत् किं येन अवसा महेः महतः समिधानस्य अग्नेः शर्मणि शरणे आश्रये वर्तमानाः सन्तः अनागाः अनागसः अनपराधाः स्याम तदवः अभिसंस्कुर्मः ॥ १७ ॥

सुप इति ( पा० ७, १, ३९ वा० १ ) जसः सुः अग्निमित्रवरुणेष्व-पराधरहिताः । कीदृशस्याग्नेः महः पूज्यस्य मह्यते मह् तस्य मह पूजायां क्विप् समिधानस्य दीप्यमानस्य ॥ १७ ॥

आपश्चित् पिप्यु स्तर्यो न गावो नक्षन्नृतं जरितारस्त इन्द्र । याहि वायुर्न नियुतो नो अच्छा त्वᳬ हि धीभिर्दयसे वि वाजान् ॥ १८ ॥

(१)इदानीमिन्द्रस्तुतिः । उक्थ्यसंस्थे द्वितीयेऽहनि पुरोरुच ऐन्द्यो द्वादश ॥ आपश्चित् । त्रिष्टुप् । आपोऽपि । पिप्युः प्यायः पी आदेशः । प्याययेयुः निग्राह्यसोमे । स्तर्यो न गावः । सुन्वन्ति अभिषुण्वन्ति याभिर्वाग्भिः सोमन्तास्तर्यः । सोमाभिषवे हि त्रयीलक्षणा वाचो व्याप्रियन्ते । तदेतदुक्तम् । तर्यो न गावः तर्य इव गावः नक्षन्नृतं जरितारस्त इन्द्रः । नक्षन् नक्षतिर्व्याप्तिकर्मा एवमनेन प्रकारेण नक्षन् व्याप्नुवन्ति ऋतं यज्ञम् । जरितारः स्तोतारः ते तव हे इन्द्र । एतच्च ज्ञात्वा । याहि वायुर्न नियुतो नो अच्छ । अच्छ अभियाहि । आयाहि नः अस्मान् वायुर्न नियुतः वायुर्यथा नियुतः अश्वान् याति ।

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । त्रिष्टुप् इन्द्रस्तुतिः उक्थसंस्थे द्वितीयेऽहनि पुरोरुच ऐन्द्यः द्वादश आपश्चित् आपोऽपि पिप्युः प्यायः पी आदेशः आपोपि आप्याययेयुः निग्राभ्यां सोमं सूर्यो न गावः सूर्यस्तृणन्ति सुन्वन्ति अभिषुण्वन्ति याभिर्गोभिः वाग्भिः सोमं ता सूर्यः सोमाभिषवे हि त्रयीलक्षणा वाक् व्याप्रियते ता यथा आप्याययन्ति तत एवमुक्तं हे इन्द्र जरितारः स्तोतारः ते तव ऋतं यज्ञं नक्षत् व्याप्नुवन्ति एतच्च ज्ञात्वा त्वं नोऽस्मान् अच्छ अभियाहि आयाहि वायुर्न वायुरिव वायुर्यथा नियुतोऽश्वान् प्राप्य याति हि यतः त्वं धीभिः स्वकीयाभिर्बुद्धिभिः वाजान् अन्नानि विविधं दयसे ददासि ॥ १८ ॥

त्वं हि। हि यस्मात्। पुनस्त्वमेवमुच्यसे। यस्त्वं धीभिः स्वकीयाभिर्बुद्धिभिः दयसे ददासि। विविधं वाजान् अन्नानि ॥ १८ ॥

इन्द्रस्तुदुक्थ्यो द्वितीयमहर्भवति तस्यैन्द्रा ग्रहा भवन्त्यैन्द्र्यः पुरोरुचः सर्वमैन्द्रमसदिति सर्वमेधे श्रुतिः (१३, ७, १, ४)। ततः इन्द्रस्तुत्संज्ञे उक्थ्यसंस्थे सर्वमेधस्य द्वितीयेऽहनि आपश्चिदित्यादि इमां त इत्यन्ता द्वादश ऋचः तं प्रत्नथा अयं वेनः महाँ इन्द्रः कदाचन स्तरीः कदाचन प्रयुच्छसीति पञ्च प्रतीकोक्ताः एवं सप्तदशेन्द्रदेवत्याः ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां ग्रहणमन्त्राः॥ वशिष्ठदृष्टा त्रिष्टुप् ऐन्द्रवायवस्य पुरोरुक् आ वायो इत्यस्याः (७, ७) स्थाने। हे इन्द्र! जरितारः स्तोतारः ऋत्विजः ते तव ऋतं यज्ञं नक्षन् नक्षन्ति व्याप्नुवन्ति नक्षतिर्व्याप्तिकर्मा लङि अडभाव आर्षः। आपः चित् आपोऽपि निम्नाभ्यारूपाः पिप्युः अप्यायन्ति सोमं वर्धयन्ति ओप्यायी वृद्धौ लिटि प्यायः पी-आदेशः। तत्र दृष्टान्तः स्तर्यो गावः इव स्तृण्वन्ति सुन्वन्ति याभिः ताः स्तर्यः याभिः सोमः सूयते ता गावो वाचो वेदरूपा इव ता यथा सोममाप्यायन्ति तथापोऽपि। अत एव त्वं नोऽस्मानच्छ अभिमुखं याहि आगच्छ वायुर्न वायुरिव वायुर्यथा नियुतः स्वानश्वानभियाति। हि यतः त्वं धीभिः बुद्धिभिः कर्मभिर्वा वाजानन्नानि विदयसे विविधं ददासि दय दानादौ अत एवागच्छ ॥ १८ ॥

गाव उपावतावतं मही यज्ञस्य रप्सुदा। उभा कर्णा हिरण्यया ॥ १९ ॥

(१)गाव उप। तिस्रो गायत्र्यः। दक्षिणा लक्षणा गाव उ-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० मा० तद्यथा। गाव उपतिस्रो गायत्र्यः दक्षिणालक्षणा गाव उच्यन्ते। हे गावः अवतं कूपं प्रति उपावत उपागच्छत दक्षिणामार्गेण अवत इति कूपनाम अवटमित्यर्थः। स चात्र चात्वालस्तदन्तरेण हि ग-

च्यन्ते । हे गावः उपावत उपगच्छत दक्षिणामार्गेण अवतं प्रति । अवतमिति कूपनाम । स चात्र चत्वाले तदन्तरेण हि गवां संचारः । को हेतुरागमन इति चेत् । मही यज्ञस्य रप्सुदा । मही महत्यः यज्ञस्य रप्सुदा दानं वर्तते यतश्च भवतीनाम् उभौ कर्णौ हिरण्मयौ कृतौ । दानार्थमेव अत उपावतेति संबन्धः ॥ १९ ॥

तिस्रो गायत्र्यः आद्या पुरुमीढाजमीढदृष्टा ऐन्द्रवायवस्य द्वितीया पुरोरुक् इन्द्रवायू इत्यस्याः ( ७, ८ ) स्थाने । गाव उच्यन्ते हे गावः ! अवतं कूपं चात्वालरूपं प्रति उपावत उपगच्छत दानार्थं चात्वालान्तरेण गवां सञ्चरोऽस्ति अवत इति कूपनाम ( निघ० ३, २३, ७ ) । को हेतुरागमने तत्राह मही महत्यौ द्यावापृथिव्यौ यज्ञस्य रप्सुदा रप्सुदे रप्स्विति रूपनाम तद्दत्तस्ते रप्सुदे वर्त्तेते । द्यावाभूमी यज्ञस्य शोभां कुरुत इति यूयमुपागच्छत । किञ्च उभा कर्णा भवतीनामुभौ कर्णौ हिरण्यया हिरण्मयौ अत एव दानार्थमागच्छतेत्यर्थः ॥ १९ ॥

यद॒द्य सूर॒ उदि॒तेऽनागा मि॒त्रो अ॑र्य॒मा । सु॒वाति॑ सवि॒ता भगः॑ ॥ २० ॥

(१) यदद्य । यत्कर्म अद्य अस्मिन्नहनि सूरे उदिते उद्गते

---

वां संचरः को हेतुरागमने इति चेत् मही महती यज्ञस्य रप्सुदा रभसदानं वर्त्तते यद्वा मही महत्यौ द्यावापृथिव्यौ प्रति उपावत । कीदृशे मही यज्ञस्य दारश्रितिरूपनाम मखस्य रूपदात्र्यौ यतश्च । भवतीनाम् उभौ कर्णौ हिरण्यया हिरण्यमयौ दानार्थमेव अत उपावत ॥ १९ ॥

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । यदद्य सूरे उदिते उद्गते अनागाः अनपराधः मित्रः यत् कर्म सुवाति प्रसूते तत्कर्म कुर्यादिति शेषः एवमर्यम्णः सवितुर्भगस्य च वाक्यानि अविशेषात् ॥ २० ॥

अनागाः अनपराधो मित्रः सुवाति प्रसौति तत्कर्म भयादिति शेषः । एवमर्यम्णः सवितुर्भगस्य च वाक्यानि अविशेषात् ॥२०॥

वशिष्ठदृष्टा मैत्रावरुणपुरोरुक् अयं वामित्यस्याः ( ७, ९ ) स्थाने । अद्य सूरे सूर्य्ये उदिते सति मित्रः अर्यमा सविता भगश्च यत् सुवाति प्रेरयति तत् कर्म कुर्यादिति शेषः । नास्ति आगोऽपराधो यस्य सोऽनागा इति चतुर्णां विशेषणम् ॥ २० ॥

आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् ।
रसा दधीत वृषभम् ॥ तं प्रत्नथा । अयं वेनः ॥ २१ ॥

(१)आ सुते । तृतीयः पादः प्रथमं व्याख्यायते । यं सोमं रसा नदी रसतेः शब्दकर्मणः । दधीत धारयति नद्युपकण्ठे हि सोमो जायते । वृषभं वर्षितारम् आसुते सिञ्चत आसिञ्चत ग्रहपात्रेषु चमसेषु सोमं हे ऋत्विजः । सुते अभिषुते सति सोमे । कथंभूतं श्रियं श्रियो हेतुभूतम् । रोदस्योरभिश्रियं द्यावापृथिव्योरधिगतश्रियम् ब्रह्माण्डव्यापिनी हि सोमश्रीः तम्प्रत्नथायं वेनः इति द्वे प्रतीके उक्ते ॥ २१ ॥

सुनीतिदृष्टाश्विनपुरोरुक् या वामित्यस्याः ( ७, ११ ) स्थाने । रसा नदी रसतेः शब्दकर्मण इति ( निरु० ११, २५ ) यास्कः । रसा नदी वृषभं वर्षितारं सोमं दधीत पुष्णाति दधातेर्लिङ् नदी-

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । आ सुते हे ऋत्विजः सोमं वृषभं वर्षितारं यं रसा रसं दधीत धारयति । यद्वा रसा नदी रसतेः शब्दकर्मणः रसा नदी सोमं दधीत पुष्णाति नद्युपकण्ठे हि सोमो जायते तस्मिन् सुते अभिसुते सोमे तं रसम् आसिञ्चत ग्रहपात्रेषु चमसेषु । किम्भूतं रसं श्रियं श्रियो हेतुं रोदस्योः द्यावापृथिव्योः अभिश्रियम् अभिगतश्रियं ब्रह्माण्डव्यापिनी हि सोमस्य श्रीः तं प्रत्नथा अयं वेनः द्वे प्राकृते प्रतीकोक्ते ॥ २१ ॥

समीपे हि सोमोत्पत्तेः । तस्मिन् सोमे सुते अभिषुते सति आ-
सिञ्चत चमसेष्विति शेषः ऋत्विजः प्रति वचनमेतत् । कीदृशं
वृषभं रोदस्योः द्यावापृथिव्योः श्रियं श्रीयते श्रीः तम् आश्रयम्
सोमस्य जगदाधारत्वात् । अभिश्रियम् अभि सर्वतः श्रीः शोभा
यस्य सोऽभिश्रीः तम् ॥ तं प्रत्नथा अयं वेनः द्वे प्रतीकोक्ते शुक्रम-
न्थिनोः प्राकृते ( ७, १२, १६ ) पुरोरुचौ ॥ २१ ॥

**आतिष्ठन्तं परि विश्वे अभूषञ्छ्रियोवसानश्च-
रति स्वरोचिः । महत्तद्वृष्णो असुरस्य नामा विश्वरू-
पो अमृतानि तस्थौ ॥ २२ ॥**

(१)आतिष्ठन्तम् । त्रिष्टुप् । इन्द्रस्यात्र वृष्टिकर्मोच्यते ग्रीष्मा-
न्ते मध्यमस्थाने आतिष्ठन्तम् इन्द्रम्पर्य्यभूषन् परिरक्षितवन्तः
विश्वे सर्वे देवा मध्यमका देवगणाः । श्रियोवसानश्चरति स्वरो-
चिः स तु मध्यमस्थानः सर्वेषां देवगणानां श्रियः आच्छादयन्
स्वेच्छया चरति । स्वरोचिः अपराधीनदीप्तिः तृतीयः पादश्च-
तुर्थान्ते व्याख्यायते तच्छब्दयोगात् । अविस्वरूपो अमृतानि
तस्थौ । यत् आतस्थौ विश्वरूपः इन्द्रः अमृतानि उदकानि

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु०
नास्ति तद्यथा । आतिष्ठन्तम् । त्रिष्टुप् इन्द्रस्यात्र वृष्टिकर्मोच्यते ।
विश्वेदेवाः मध्यमका देवगणाः ग्रीष्मान्ते मध्यमे स्थाने आतिष्ठ
न्तम् इन्द्रं पर्यभूषन् परिरक्षितवन्तः स तु मध्यस्थानः सर्वेषां दे-
वगणाः ग्रीष्मान्ते मध्यमे स्थाने आतिष्ठन्तम् इन्द्रं पर्यभूषन् परिर-
क्षितवन्तः स तु मध्यस्थानः सर्वेषां देवगणानां श्रियः वसानः आ-
च्छादयन् चरति स्वरोचिः अपराधीनदीप्तिः विश्वरूपः स इन्द्रः
यत् अमृतानि उदकानि आतस्थौ उदकेषु पातयितव्येषु आस्थि-
तः वृष्णः वर्षितुः असुरस्य प्रज्ञावतः तत् महत् नाम नमनं
प्रह्वीभावः ॥ २२ ॥

उदकेषु पातयितव्येषु महत् तत् वृष्णः वर्षितुः असुरस्य प्रज्ञा-नवतः नाम। नमनम्प्रह्वीभावः॥ २२॥

विश्वामित्रदृष्टाग्रयणपुरोरुक् ये देवास इत्यस्याः (७, १९) स्थाने। इन्द्रस्य वृष्टिकर्मोच्यते। विश्वे देवाः आतिष्ठन्तं समन्तात् स्थितमिन्द्रं पर्यभूषन् परिरक्षितवन्तः। स इन्द्रः चरति सर्वत्र गच्छति। कीदृशः श्रियो वसानः देवानां दीप्तीः आच्छादयन् स्व-रोचिः स्वं रोचिर्यस्य सः अनन्याधीनदीप्तिः। किञ्च विश्वं रूपयति निरूपयति विश्वरूपः इन्द्रो यतः अमृतानि जलानि आतस्थौ वृ-ष्ट्ये आस्थितवान् वृष्णः इन्द्रस्य तत् महत् प्रसिद्धं नाम वासवो वृत्रहा इत्यादि। कीदृशस्य वृष्णः असुरस्य असवो विद्यन्ते यस्य सोऽसुरस्तस्य प्राणवतः सावधानस्य प्रज्ञावत इत्यर्थः॥ २२॥

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे। इन्द्रस्य यस्य सुमखꣳ सहो महि श्रवो नृम्णं च रोदसी सपर्य्यतः॥ २३॥

(१)प्र वः। त्रिष्टुप्। हे ऋत्विजः। प्रार्च। प्रार्चत। वः यूयं स्तुतीः। महे इन्द्रविशेषणमेतत्। महते। अन्धसः अन्नस्य दात्रे इति वाक्यशेषः। मन्दमानाय स्तूयमानाय मोदमानाय वा। विश्वानराय सर्वभूताय। विश्वाभुवे सर्वव्यापिने किञ्च।

(२) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०ना-स्ति तद्यथा। प्र वः त्रिष्टुप् हे ऋत्विजः वः यूयं विश्वानराय इ-न्द्राय प्रार्च प्रार्चत प्रोच्चारयत स्तुती वचनव्यत्ययः पूजयत वा किम्भूताय महे महते मन्दमानाय मोदमानाय स्तूयमानाय वा अन्धसोऽन्नस्य दात्रे इति शेषः विश्वाभुवे सर्वविभूतये विश्वा भू-र्यस्या संहितायां दीर्घः सर्वव्यापिने यद्वा विश्वं भवति यस्मादि-ति विश्वभूः किञ्च यस्येन्द्रस्य सुमखं साधुयज्ञं सहः बलं महिमह-च्च श्रवः श्रवणीयं यशः नॄन् नम्णं धनं च नॄन् नमतीति नृम्णं रोद-सीद्यावापृथिव्यौ सपर्यतः पूजयतः तमिन्द्रं प्रार्चतेति सम्बन्धः॥२३॥

इन्द्रस्य यस्य सुमखं साधुयज्ञम् । सहः बलं च महि महच्च श्रवः श्रवणीयश्च यशः । नृम्णश्च धनश्च नृन्नमयतीति नृम्णम् । रोदसी द्यावापृथिव्यौ सपर्यतः परिचर्यतः । तस्य प्रार्चतस्तु-तीरित्यनुषङ्गः ॥ २३ ॥

सुचीकदृष्टा त्रिष्टुप् ध्रुवग्रहपुरोरुक् मूर्धानमित्यस्याः ( ७, २४) स्थाने । हे ऋत्विजः ! यूयं विश्वानराय विश्वे सर्वे नरा यजमाना यस्य तस्मै प्रार्च प्रार्चत वचनव्यत्ययः इन्द्रं पूजयतेत्यर्थः । कीदृशाय महे महते । वो युष्माकमन्धसः अन्धसा अन्नेन हवीरूपेण मन्दमानाय मोदमानाय । विश्वभुवे विश्वं भवति प्राप्नोति विश्वभूः तस्मै सर्वव्यापिने विश्वा भूर्यस्येति वा विश्वं भवति यस्मादिति वा संहितायां दीर्घः । किञ्च रोदसी द्यावापृथिव्यौ यस्येन्द्रस्य एतान् पदार्थान् सपर्यतः पूजयतः कान् सुमखं शोभनं यज्ञम् सहः बलम् महि महत् श्रवो यशः नृम्णं धनं च । द्यावाभूमी यस्य मखादीनि मानयतस्तं पूजयतेत्यर्थः ॥ २३ ॥

बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः । येषामिन्द्रो युवा सखा ॥ २४ ॥

(१)बृहन्नित् । द्वे गायत्र्यौ अन्त्यः पादः प्रथमं व्याख्यायते यच्छब्दयोगात् । येषामिन्द्रो युवा सर्वकर्मसु दक्षः सखा । तेषामेषां यजमानानाम् बृहन्नित् महानेव इध्मः भवति । महत्वश्च साधनानां साध्योत्कर्षं कुर्वताम्भवति । भूरिशस्तम्भवति । पृथुश्च स्वरुः भवति । यज्ञानां वा भूयोभूयः करणमेवाभिप्रेतः स्यात् ॥ २४ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । बृहन्नित् । द्वे गायत्र्यौ येषां युवा सर्वकर्मक्षम इन्द्रः सखा एषां यजमानानां बृहत् इत् महानेव इध्मो भवति महत्त्वं च साधनानां साध्योत्कर्षं कुर्वतां भवति भूरिशस्तं बहु च शस्तं पृथुः स्वरुर्भवति यज्ञानां वा भूयोभूयः करणमभिप्रेतम् ॥२४॥

त्रिशोकदृष्टा गायत्री ऐन्द्राग्निपुरोरुक् इन्द्राग्नी इत्यस्याः ( ३, ७१ ) स्थाने । युवा समर्थः इन्द्रः येषां यजमानानां सखा सहायः एषामिन्द्रः वृहन् इत् महानेव भवति । शस्तं शास्त्रं भूरि बहुः खड्गः पृथुः विशालः । यज्ञबाहुल्यमाशास्यत इत्यर्थः ॥ २४ ॥

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ२॥ अभिष्टिरोजसा ॥ २५ ॥

इन्द्रे हि । हे इन्द्र आ इहि आगच्छ । एत्य च मत्सि तृप्तिं कुरु अन्धसः अध्यानीयस्य सोमलक्षणस्यान्नस्य स्वेनांशेन । ततोऽपि विश्वेभिः सर्वैः सोमपर्वभिः सोमयागकालैर्निमित्तभूतैः । आ इहि यद्वा सर्वसवनगतैः सोमांशुभिः निमित्तभूतैः । कस्मात्पुनस्त्वमेवमस्माभिः प्रार्थ्यसे इत्यत आह । यतो महानसि अभिष्टिश्च । अभ्येषणशीलश्च शत्रुणामभियष्टव्यो वा । ओजसा स्वकीयेन बलेन ॥ २५ ॥

मधुच्छन्दोदृष्टा गायत्री वैश्वदेवपुरोरुक् ओमास इत्यस्याः ( ७, ३३ ) स्थाने । इन्द्र आ इहि ओमाङोश्चेति ( पा० ६, १, ९५ ) पररूपम् । हे इन्द्र ! आ इहि आगच्छ आगत्य अन्धसः अन्धसान्नेन हविर्लक्षणेन विश्वेभिः विश्वैः सर्व्वैः सोमपर्वभिः सोमांशुभिश्च त्वं मत्सि तृप्यस्व मद तृप्तौ शपो लुक् । कीदृशः त्वम् ओजसा तेजसा महान् श्रेष्ठः । अभिष्टिः अभीज्यत इत्यभिष्टिः अभियष्टव्यः पृषोदरादिः ॥ २५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । इन्द्रेहि । हे इन्द्र आ इहि आगच्छ एत्य च अन्धसः सोमलक्षणस्यान्नस्य स्वांशेन मत्सि तृप्तिं कुरु विश्वेभिः सोमपर्वभिः सर्वैः सोमयागकालैर्निमित्तभूतैरेहि सर्वगतैः सोमांशुभिर्वा यतः त्वं महान् असि ओजसा बलेन अभिष्टिश्च अभ्येषण शीलः शत्रूणाम् अभियष्टव्यो वा ॥ २५ ॥

इन्द्रो॑ वृ॒त्रम॑वृणो॒च्छर्ध॑नीतिः॒ प्र मा॒यिना॑ममिना॒-द्वर्प॑णीतिः । अह॒न् व्य॑ꣳसमु॒शध॒ग्वने॑ष्वा॒विर्धेना॑ अ-कृणोद्रा॒म्याणा॑म् ॥ २६ ॥

(१) इन्द्रो वृत्रम् । त्रिष्टुभौ य इन्द्रः वृत्रं युद्धाय आवृणोत् शर्द्धनीतिः । शर्द्ध इति बलनाम । शर्द्धे चतुरङ्गबले नीतिर्यस्य स तथोक्तः । प्रमायिनाममिनात् । यश्च मायिनां मायाविनां प्र अमिनात् । मीङ् हिंसायाम् । हिनस्ति । यश्च वर्पणीतिः । वर्प इति रूपनाम । रूपसन्नद्धः स्वेच्छारूपविजृम्भकः । यश्च अहन् हन्ति । व्यंसं निरंसं सन्धिसंबन्धिनं मायिनम् । उशधक् । वश कान्तावस्य कृतसंप्रसारणस्यैतद्रूपम् । दहतेरुत्तरं कृतभष्भावस्य । अथ कोऽर्थः शत्रुत्वं कामयमानान् दहति वनेष्वपि वर्तमानान् । आविर्धेना अकृणोद्राम्याणाम् । स इन्द्रः अविः प्रकटम् । धेनाः स्तुतीः इत्थं शत्रून् हन्ति इत्थमपरिमितं धनं ददातीति । अवश्यं च रमयितव्यानां याजयूकानाम् ॥ २६ ॥

विश्वामित्रदृष्टा त्रिष्टुप् प्रथममरुत्वतीयपुरोरुक् इन्द्र मरुत्व

---

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । इन्द्रो वृत्रम् । त्रिष्टुभौ यः इन्द्रः वृत्रंः युद्धाय अवृणोत् कीदृशः शर्द्धनीतिः शर्द्ध इति बलनाम । शर्द्धे चतुरङ्गबले नीतिर्यस्य स तथा यश्च मायिनां मायाः प्रामिनात् हिनस्ति मिङ् सिंसायाम् । वर्पणीतिः वर्प इति रूपनाम वर्पं नयतीति । रूपनयः स्वेच्छारूपविजृम्भकः यश्च वनेषु व्यंसं निरंसं मायिनम्. अहन् । हन्ति उशधक् वश कान्तावित्यस्य कृतसंप्रसारणस्य रूपं दहतेरुत्तरं कृतभष्भावस्य उशन्ति शत्रुत्वकामयन्ते इति उशाः तान् दहतीति उशधक् स इन्द्रः राम्याणां रमयितव्यानां यायजूकानां धेनाः गाः स्तुतीः आविरकृणोत् प्रकटीकरोति । शत्रून् दग्ध्वा धनं ददातीत्यर्थः ॥ २६ ॥

इत्यस्याः ( ७, ३५ ) स्थाने । इन्द्रः वृत्रं दैत्यमवृणोत् युद्धाय वृणोति स्म । मायिनां मायिनो दैत्यान् प्रामिणात् हिनास्ति मीञ् हिंसायाम् क्र्यादिः प्वादित्वाद्धस्वः कर्मणि षष्ठी । व्यंसमहन् हन्ति अंस विभागे चुरादिरदन्तः अंसयति विभजति स्थान् परानिति व्यंसो दुष्टः तम् क वनेषु वनस्थान् हन्तीत्यर्थः । रमयन्ति देवान् ऋते राम्याः यायजूकाः तेषां धेनाः स्तुतिरूपा वाचः आविः अकृणोत् आविः करोति यजमानाः स्तुवन्तीति देवेषु प्रकटयतीत्यर्थः कीदृशः इन्द्रः शर्धनीतिः शर्ध इति बलनाम ( निघ० २, ९, ७ ) शर्धे चतुरङ्गे बले नीतिर्यस्य सः । वर्पणीतिः वर्प इति रूपनाम ( निघ० ३, ७, ३ ) वर्पं नानारूपं नयति प्राप्नोति वर्पणीतिः नानारूपधारी । उशधक् उशन्ति कामयन्ते परस्वं ते उशाश्चौरास्तान् दहति उशधक् ॥ २६ ॥

कुतस्त्वमिन्द्र माहिनः सन्नेको यासि सत्पते किं त इत्था । सम्पृच्छसे समराणः शुभानैर्वोचेस्तन्नो हरिवो यत्ते अस्मे ॥ महाँ २॥ इन्द्रो य ओजसा । कदा चन स्तरीरसि । कदा चन प्रयुच्छसि ॥ २७ ॥

(१)कुतस्त्वम् । इन्द्रमरुत्संवादे मरुतामेतद्वाक्यम् । हे इन्द्र त्वं

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । कुतस्त्वम् । मरुत्संवादे मरुतामेतद्वाक्यम् । हे इन्द्र हे सत्पते सतां श्रुतिस्मृत्यनुष्ठानरतानां पालयितः त्वं कुतः कस्माद्धेतोः माहिनः महनीयः सर्वस्य पूज्यः सन् एकोऽसहायः यासि किं ते तव इच्छा इत्थम्भूतं प्रयोजनमस्ति येनैकाकी यासि समराणः सम्यक् गच्छन् शुभानैः शोभनैर्वचोभिः संपृच्छसे कतमः पन्था इति हे हरिवः हे हरिवन् तत् कारणं नोऽस्माकं वोचेः ब्रूयाः यत् यस्मात्ते तव व्यावृत्तिकारिणम् अस्मे अस्मासु वर्त्तते इति महान् इन्द्रो य ओजसा कदाचन स्तरीरसि कदाचन प्रयुच्छसि तिस्रःप्राकृताः२७

कुतः कस्माद्धेतोः माहिनः महनीयः सर्वस्य पूज्यः सन् शत्रून् एकः असहायः यासि । हे सत्पते । श्रुतिस्मृत्यनुष्ठानरतानां पालयितः । किन्त इत्था किञ्च ते तव इत्थंभूतं प्रयोजनमस्ति येनैकाकी यासि । संपृच्छसे समराणः संगच्छमानः शुभानैः शोभनैः वचोभिः संपृच्छसे कतमः पन्था इति हे हरिवः हरिवन् तत्करणं नः अस्माकं वोचेः ब्रूयाः । यत्ते अस्मे । यत् व्यावृत्तिकारणं ते तव अस्मे अस्मासु वर्त्तते इति ॥ महाँ २ इन्द्रो य ओजसा । कदाचन स्तरीरसि । कदाचन प्रयुच्छसि । इति तिस्रः प्रकृताः प्रतीकोक्ताः ॥ २७ ॥

अगस्त्यदृष्टा त्रिष्टुप् सशस्त्रमरुत्वतीयपुरोरुक् मरुत्वन्तमित्यस्याः ( ७, ३६ ) स्थाने । इन्द्रं प्रति मरुद्वाक्यम् हे इन्द्र ! हे सत्पते । श्रुतिस्मृत्युक्ताचाररताः सन्तः तेषां पते ! पालक ! त्वमेकः सन् कुतो यासि असहायः क्व गच्छसि ! ते तव किमित्था गमने को हेतुः ! किं प्रयोजनम् ! था हेतौ च छन्दसीति ( पा० ५, ३,२६ ) इदमः थाप्रत्ययः एतेतौ रथोरिति ( पा० ५, ३, ४ ) इदम इदादेशः । कीदृशस्त्वं माहिनः माहितः पूज्यः निष्ठा तस्य नत्वम् धातोर्वृद्धिश्च छान्दसी यद्वा मह उत्सवोऽस्यास्तीति मही एव माहिनः स्वार्थेऽण् इन्नण्यनपत्य इति ( पा० ६, ४, १६४ ) टिलोपाभावः । किञ्च समराणः सम्यक् गच्छन् सन् शुभानैः शोभनैः वचनैः त्वं सम्पृच्छसे कतमः पन्था इति लोकान् पृच्छसि एकाकित्वात् शोभन्ते तानि शुभानानि शानचि शपि लुप्ते रूपम् ! सम्पूर्वस्यऽर्त्तेः शानचि शपि लुप्ते समराण इति । हरयोऽश्वा अस्य सन्तीति हरिवान् मतुवसो रुः सम्बुद्धौ छन्दसीति ( पा० ८, ३, १ ) रुः हे हरिवः इन्द्र ! नोऽस्माकं तत् एकाकिगमनकारणं वोचेः ब्रूहि यत् यतो हेतोः अस्मे वयं ते तव त्वदीया वयमिति हेतोर्वक्तव्यमित्यर्थः ॥ तिस्रः प्रतीकोक्ताः तत्र महां इन्द्र इत्यस्याः ( ७, ४० ) महेन्द्रग्रहणे विनियोगः नृवदित्यस्याः ( ७, ३९ ) स्थाने कदाचनेति ( ८, २—३ ) द्वयोरादित्यग्रहणे विनियोगः ॥ २७ ॥

आ ते त इन्द्रायवः पनन्ताभि य ऊर्वं गोमन्तं तितृत्सान्। सकृत्स्वं ये पुरुपुत्रां महीᳬं सहस्रधारां बृहतीं दुदुक्षन्॥ २८॥

(१)आतत्। त्रिष्टुप्। आङुपसर्गः पनन्तेत्याख्यातेन संबध्यते। आपनन्त। पनतिः पूजाकर्मा पूजयन्ति वृत्रवधादिकम् ते तव संबन्धि कर्म हे इन्द्र आयवः मनुष्याः यजमानाः। कथंभूता आयवः अभितितृत्सान्। तृत्सदतिर्हिंसाकर्मा। ये अभितर्दितुं हिंसितुमिच्छन्ति। किमित्यत आह। ऊर्वम् अन्नं सोमलक्षणम्। गोमन्तम् उदकवन्तम्। निग्राभ्याभिः सोमोऽभिषूयते। येऽपि उदकवन्तं सोममभिषुण्वन्ति तेऽपि पूजयन्तीत्यर्थः। किञ्च। सकृत्स्वम्। एकवारमेव प्रसूयते या गोहिरण्यधान्यादिभिः सा सकृत्सूस्तां सकृत्स्वम्। ये यजमानाः। पुरुपुत्रां बहुपुत्राम्। सर्वे एव पदार्थाः पृथिवीत उत्पद्यन्ते। महीं भूमिम्। सहस्रधाराम्। अनन्तभोगप्रदायिनीम्। बहुधा प्राणिजातं धारयन्तीं वा। बृहतीम्महतीम्। दुदुक्षन् दोग्धुमिच्छन्ति। भूमिदानं सर्वमेधयाजिनश्चोद्यते तदभिप्रायमे-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा। आतत्। त्रिष्टुप्। हे इन्द्र आयवः मनुष्याः यजमानाः ते तव तत्कर्म वृत्रवधादिकम आपनन्त पूजयन्ति पनतिः पूजाकर्मा ये आयवः गोमन्तम् उदकवन्तं सोममदन्ति ते पूजयन्तीत्यर्थः किञ्च ये ईदृशीं महीं भूमिं दुदुक्षन् दुधुक्षन् दोग्धुमिच्छन्ति तेऽपि त्वां पनन्ते किं य सकृत्स्वं सकृदेकवारमेव सूते प्रसूते गोहिरण्यधान्यादिभिः सा सकृत्सूः तां पुरुपुत्रां सर्वे एव पदार्थाः पृथिवीतः उत्पद्यन्ते सहस्रधाराम् अनन्तभोगप्रदायिनीं-बहुप्राणिजातं धारयन्तीं वा बृहतीं महतीं भूमिदानं सर्वमेधयाजिनश्चोद्यते तदभिप्रायमेतत् ये च सोमाभिषवं कुर्वन्ति ये च पृथिवीं ददते त्वां पूजयन्ति। नान्यो दुर्मेधाः॥ २८॥

**तत् । ये च सोमाभिषवं कुर्वन्ति ये च पृथिवीं ददति ते त्वां पूजयन्ति नान्ये दुर्मेधस इति ॥ २८ ॥**

गौरीवितिदृष्टा त्रिष्टुप् आदित्यग्रहस्य दधिश्रयणे विनियोगः । यशो देवानामित्यस्याः ( ८, ४ ) स्थाने । हे इन्द्र ! आयवो मनुष्याः ते तव तत् कर्म आपनन्त पूजयन्ति पनतिः पूजाकर्मा लङ् अडभाव आर्षः । ये आयवः ऊर्वमन्नं सोमरूपमभितितृत्सान् अभितितृत्सन्ति तर्दितुं हिंसितुमिच्छन्ति तितृत्सन्ति उतृदिर् हिंसानादरयोः सनन्तः इतश्च लोपः परस्मैपदेष्विति ( पा० ३, ४, ९७ ) अतेरिकारलोपः । सोमं सोतुमिच्छन्तीत्यर्थः । कीदृशमूर्वं गोमन्तं गौरुदकमस्ति यस्मिन् स गोमान् तम् निग्राभ्यालक्षणोदकयुतम् ताभिरेव सोमः सूयते । किञ्च ये मनुष्याः महीं भूमिं दुदुक्षन् दुधुक्षन्ति दोग्धुमिच्छन्ति दुहः सनन्ताल्लट् पूर्ववदिकारलोपः तेऽपि तव कर्म पनन्ति स्तुवन्ति । कीदृशीं महीं सकृत्स्वं सकृदेकवारमेव सूते हिरण्यधान्यादि ददाति सकृत्सूः ताम् पुरुपुत्रां बहुपुत्राम् सर्वे पदार्थाः पृथिवीत उत्पद्यन्ते । सहस्रधारां सहस्रं धारा हिरण्यादयो यस्याः सा ताम् बहुभोगदाम् यद्वा सहस्रमसंख्यं प्राणिजातं धरति सहस्रधारा ताम् । बृहतीं महतीम् । ये विप्राः सोमाभिषवं कुर्वन्ति ये च क्षत्रिया भूमिं दुहन्ति पालयन्ति ददते ते इन्द्रस्य वृत्रवधादिकर्म स्तुवन्ति नान्ये दुर्मेधस इत्यर्थः ॥ २८ ॥

**इमां ते धियं प्रभरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे । तमुत्सवे च प्रसवे च सासहिमिन्द्रं देवासः शवसामदन्ननु ॥ २९ ॥**

(१)इमान्ते । हे इन्द्र इमां ते तव धियं स्तुतिं प्रभरे प्रहरामि

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति । तद्यथा । इमां मे ते हे इन्द्र ते तव इमां धियं स्तुतिं प्रभरे प्रहरामि प्रापयामि किं ते महः महतः किं धियं महीं महतीम् अस्य अस्य यज्ञस्य स्तोत्रे धिषणां वाक् यत् यस्मात् ते तव गुणान् आ-

शपयामि । कथंभूतस्य ते । महः महतः । कथंभूतां धियम् । महीं महतीम् । अस्य यज्ञस्य स्तोत्रे धिषणा वाक् । यत्ते यस्मात्ते तव स्वभूतान् गुणान् आनजे । अभिव्यनक्ति ऐन्द्रमेव यज्ञं प्रकाशयति । किञ्च । तमेवेन्द्रम् । उत्सवे च अभ्युदये प्रसवे च अभ्यनुज्ञायां विषयभूतायाम् । सासहिं शत्रूणामभिभवितारम् । देवासः देवा अपि शवसा मदन्ननु । शवसा बलेन अन्वमदम् अभिष्टुवन्ति । पूर्वोऽर्द्धर्चः प्रत्यक्षकृतः उत्तरस्तु परोक्षकृतः अतो वाक्यभेदेन व्याख्यानम् ॥ २९ ॥

कुत्सदृष्टा जगती सावित्रपुरोरुक् वाममद्येत्यस्याः ( ८, ६ ) स्थाने । हे इन्द्र । इमां मामकीं धियं बुद्धिं स्तुतिं वा कर्म वा ते तुभ्यं प्रभरे प्रहरे समर्पयामि । कीदृशस्य ते महः महतः पूज्यस्य । कीदृशीं धियं महीं महतीम् यत् यस्मात् अस्य यजमानस्य धिषणा बुद्धिर्वाग्वा स्तोत्रे क्रियमाणे ते तव आनजे त्वां व्यनक्ति कर्मणि षष्ठी अञ्जेर्लिट् नलोपश्छान्दसः । किञ्च देवासः देवाः तमिन्द्रमन्वमदन् अनुमदन्ति स्तुवन्ति छन्दसि परेऽपीति ( पा० १, ४, ८१ ) अनोः परः प्रयोगः । क्व स्तुवन्ति उत्सवे अभ्युदये प्रसवे गुर्वाद्यनुज्ञायां सत्याम् यद्वा प्रसवे पुत्राद्युत्पत्तिरूपे उत्सवे इन्द्रं स्तुवन्ति । कीदृशमिन्द्रं शवसा बलेन सासहिम् सहते सासहिः शत्रूणामभिभवितारम् चौ समुच्चये ॥ इन्द्रस्तुत्संज्ञं द्वितीयमहः समाप्तम् ॥ २९ ॥

**विभ्राड्बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपंतावविह्रुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पुंपोष पुरुधा विराजति ॥ ३० ॥**

नजे अभिअनक्ति ऐन्द्रमेव यज्ञं प्रकाशयति किञ्च देवासः तमिन्द्रम् उत्सवे अभ्युदये प्रसवे अभ्युदये प्रसवे अभ्यनुज्ञायां च विषयभूतायाम् अनु अमदन् अभिष्टुवन्ति किमिन्द्रं शवसा सहिं शत्रूणामभिभवितारं पूर्वोऽर्धर्चः प्रत्यक्षकृतः उत्तरः परोक्षकृतः अतो वाक्यभेदेन व्याख्यातम् ॥ २९ ॥

(१)विभ्राड् बृहत्। जगती सूर्यस्तुतिः द्वितीयेऽहनि ग्रहाणां पुरोरुचः । द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते यच्छन्दयोगात् । यः वातजूतः वातप्रेरितः वातो यस्य वोढेत्यभिप्रायः । अभिरक्षति त्मना आत्मनैव जगत् । मन्त्रेष्वाङ्ग्यादेरात्मन इत्याकारलोपः । यश्च प्रजाः पुपोष पोषयति शीतोष्णवर्षैः । यश्च पुरुधा विराजति । बहुधा च दीप्यति अग्निविद्युन्नक्षत्रादिरूपैः । स विभ्राड् विविधं भ्राजते इति विभ्राड् सूर्यः । बृहत् महत् पिबतु सोम्यं सोममयं मधु । किं कुर्वन् । आयुः जीवनम् दधत् स्थापयन् यज्ञपतौ यजमाने । अविहूरुतम् अनवखण्डितम् । हूर्च्छ कौटिल्ये । हूरु ह्वरेश्छन्दसीति हूरु आदेशः ॥ ३० ॥

अथ तृतीयमहः सूर्य्यस्तुत् । तथा च श्रुतिः ( १३, ७, १, ५ ) सूर्य्यस्तुदुक्थ्यस्तृतीयमहर्भवति तस्य सौर्या ग्रहा भवन्ति सौर्यः पुरोरुचः सर्वꣳ सौर्यमसदिति । चतुर्दश पुरोरुचस्तिस्रः प्रतीकोक्ताः एवं सप्तदश ऋचः सूर्य्यस्तुत्संज्ञे उक्थ्यसंस्थे सर्वमेधस्य तृतीयेऽहनि,॥ ऐन्द्रवायवादिसावित्रान्तानां ग्रहाणां पूर्वोक्तक्रमेण ग्रहणमन्त्रा बोध्याः ॥ विभ्राड्दृष्टा जगती ऐन्द्रवायवपुरोरुक् । विविधं भ्राजते विभ्राट् सूर्य्यः सोम्यं सोमरूपं हविः पिबतु । कीदृशं सोम्यं बृहत् महत् मधु मधुरस्वादम् । यः सूर्य्यः त्मना आत्मना प्रजाः अभिरक्षति पालयति पुपोष पुष्णाति च पुरुधा बहुधा विराजति च

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । विभ्राड् जगती सूर्यस्तुति· तृतीयेऽहनि ग्रहाणां पूर्वोक्तानां पुरोरुचः यः वातजुतः वातप्रेरितः वातो यस्य वोढेति भावः । त्मना आत्मना प्रजाः प्रजाः अभिरक्षति पुपोष पुष्णाति च शीतोष्णवर्षैः पुरुधा बहुधा विराजति दीप्यते अग्निविद्युन्नक्षत्ररूपैः स विभ्राड् विविधं भ्राजते इति विभ्राड् सूर्यः बृहत् महत् मधु मधिव स्वादु सोम्यं सोममयं पिबतु । किंकुर्वन् यज्ञपतौ यजमाने अविह्रुतम् अखण्डितम् आयुः दधत् स्थापयन् हृच्छ कौटिल्ये हूरु ह्वरेश्छन्दसीति हूरु आदेशः ॥ ३० ॥

शोभेते। कीदृशः यज्ञपतौ यजमाने अविह्रुतमखण्डितमायुः दधत् स्थापयन्। वातजूतः वातेन प्रेरितः वातेन प्रेरितं रविमण्डलं भ्रमतीति प्रसिद्धिः। त्मना मन्त्रेष्वाङ्यादेरात्मन (पा० ६, ४, १४१) इत्याकारलोपः। ह्वृ कौटिल्ये ह्रु ह्वरेश्छन्दसीति (पा० ७, २, ३१) ह्रु आदेशः॥ ३०॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यꣳ स्वाहा॥ ३१॥

उदुत्यमिति व्याख्यातम्॥ ३१॥

ऐन्द्रवायवस्य द्वितीया पुरोरुक्। व्याख्याता (७, ४१)॥ ३१॥

येना पावक चक्षसा भुरण्यन्तं जनाँ२॥ अनु। त्वं वरुण पश्यसि॥ ३२॥

येना पावक। द्वे गायत्र्यौ सर्वमेधोऽग्निश्चीयते। तेन रूपेण। आत्मानं संपाद्य क्षिप्रं यजमानो मोक्षं प्राप्नोति। तदिह प्रार्थ्यते। येन हे पावक पावयितः। येन चक्षसा दर्शनेन। भुरण्यन्तञ्जनान् अनु। शकुनिः क्षिप्रपाती भुरण्युरित्यभि-

---

(१) अत्र वारणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा। उदुत्यं व्याख्यातम्॥ ३१॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। येनापावक द्वे गायत्र्यौ सर्वमेधो ऽग्निश्चीयते तेन रूपेणात्मानं सम्पाद्य क्षिप्रं द्वितीयोऽर्धर्चः प्रथमं व्याख्यायते यथाशब्दयोगात् यजमानो मोक्षं प्राप्नोति तदिह प्रार्थ्यते हे पावक पावयितः येन चक्षसा दर्शनेन त्वं भुरण्यं तमनुपश्यसि शकुनिः क्षिप्रपाती भुरण्युच्यते भुरण्युमात्मानं करोतीति भुरण्यतीति भुरण्युन् तं भुरण्यन्तं सर्वमेधयाजिनं पक्षिरूपेणात्मानं सम्पाद्य क्षिप्रं गच्छन्तमित्यर्थः हे वरुण सूर्य तदोऽध्याहारेण योजना तेन चक्षसा जनान् अस्मान् अपि भुरण्यत पश्य ३२॥

धीयते । सर्वमेधयाजिनो जनान् अनुभुरण्यन्तं पक्षिरूपेणात्मानं संपाद्य क्षिप्रं गच्छन्तमित्यर्थः । त्वं हे वरुण सूर्य पश्यासि । तदोऽध्याहारेण वाक्यपरिपूर्त्तिः । येन जनान् अनु भुरण्यतः पश्येति ॥ ३२ ॥

प्रस्कण्वदृष्टा गायत्री मैत्रावरुणपुरोरुक् । सर्वमेधे पक्ष्याकारेणाग्निश्चीयते तद्रूपमात्मानं सम्पाद्य मुक्तिमाप्नोति तदत्र प्रार्थ्यते हे पावक शोधक ! येन चक्षसा दर्शनेन त्वं भुरण्यन्तमनुपश्यसि क्षिप्रपाती पक्षी भुरण्युः भुरण्युमात्मानं करोति भुरण्यति भुरण्यतीति भुरण्यन् तं क्विबन्तात् शतृप्रत्ययः । सर्वमेधयाजिनं भुरण्यु पक्षिरूपमात्मानं कृत्वा स्वर्गच्छन्तं येन चक्षसानुपश्यसीत्यर्थः । तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण । त्वं पश्य वरुणः सूर्य्यः ॥ ३२ ॥

दैव्यावध्वर्यू आगतꣳ रथेन सूर्यत्वचा । मध्वा यज्ञꣳ समञ्जाथे ॥ तं प्रत्नथा । अयं वेनः । चित्रं देवानाम् ॥ ३३ ॥

(१) दैव्यावध्वर्यू । हे दैव्यावध्वर्यू अध्वरस्य नेतारौ इह आगतम् आगच्छन्तम् आगमनं कुरुतम् । रथेन सूर्यत्वचा । सूर्यस्येव त्वचो यस्य स सूर्यत्वक् तेन सूर्यत्वचा । मध्वा मधुस्वादुना हविषा सोमपुरोडाशेन दध्यादिना । यज्ञं समञ्जाथे समाप्तमिति साधुरूपं समञ्जयन्तं प्रभूतानि

---

(१) अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । दैव्यावध्वर्यू । हे दैव्यौ अध्वर्यू अध्वरस्य नेतारौ सूर्यस्येव त्वक् यस्य तेन सूर्यत्वचा रथेन इह आगतं युवाम् आगच्छतम् एत्य च मध्वा मधुस्वादुना हविषा सोमपुरोडाशदध्यादिना यज्ञं समञ्जाथे साधुरूपं संम्रक्षयन्तं प्रभूतानि हवींषि कुरुतमित्यर्थः तं प्रत्नथा अयं वेनः चित्रं देवानां तिस्रः प्रतीकोक्ताः ॥ ३३ ॥

हवींषि कुरुतमित्यर्थः । तं प्रत्नथा यं वेनश्चित्रं देवानामिति तिस्रः प्रतीकोक्ताः ॥ ३३ ॥

आश्विनपुरोरुक् गायत्री । देवानामिमौ दैव्यौ हे दैव्या अध्वर्यू अश्विनौ ! युवां रथेन आगतमागच्छतम् शपो लुक् । कीदृशेन रथेन सूर्यत्वचा सूर्य्यस्येव त्वक् कान्तिर्यस्य तेन । यस्य मध्वा मधुरेण हविषा सोमपुरोडाशदध्यादिना यज्ञं समञ्जाथे युवां संभक्षयतम् बहूनि बर्हींषि कुरुतमित्यर्थः ॥ तं प्रत्नथा ( ७, १२ ) अयं वेनः ( ७, १६ ) चित्रं देवानाम् ( ७, ४२ ) तिस्रः प्रतीकोक्ता आद्ये द्वे शुक्रमन्थिपुरोरुचौ तृतीयाग्रयणस्य ॥ ३३ ॥

आ न इडाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु । अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥ ३४ ॥

(१) आ नः । त्रिष्टुप् । द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् । अपि यथा येन प्रकारणे । हे देवाः युवानः सर्वकर्मक्षमाः अविपरिणामिनो वा मत्सथ माद्यथ तृप्यथ नः अस्माकं गृहे । विश्वं जगदुद्धराम इति कृत्वा । अभिपित्वे अभिपतनकाले प्राप्ते । मनीषा मनीषयेति विभक्तिव्यत्ययः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । आनः । त्रिष्टुप् अपि निश्चितं यथा येनप्रकारेण नोऽस्माकं गृहे हे युवानः सर्वकर्मक्षमाः अविपरिणामिनो वा हे देव्यः यूयं मत्सथ माद्यथ तृप्यथ किमिति अभिपित्वे अभिपतनकाले प्राप्ते विश्वं सर्वं जगत् उद्धराम इति मनीषा मनीषया मनस इच्छया तथा तेन विधिना माद्यन् सन् नोऽस्माकं विदथे यज्ञे इडाभिः कारणभूताभिः सुशस्तीत्यविभक्तिको निर्देशः सुशस्तिभिश्च शोभनैः शंसनैर्निमित्तभूतैः विश्वानरः आ एतु सविता देवश्च आ एतु ॥ ३४ ॥

मनस इच्छया । अपि तथा तेन प्रकारेण माद्यत यथेष्टम् । नः अस्माकं विदथे यज्ञे इडाभिः करणभूतैः । सुशस्ति अविभक्तिको निर्देशः । सुशस्तिभिश्च शोभनैः शंसनैश्च करणभूतैः। विश्वानरः आ एतु सविता च देवः आ एतु ॥ ३४ ॥

अगस्त्यदृष्टा त्रिष्टुप् ध्रुवपुरोरुक् । विश्वानरो विश्वनरहितकारी सविता देवः नोऽस्माकं विदथे यज्ञगृहे आ एतु आगच्छतु । कथम् इडाभिः सुशस्ति यथा स्यात् तथा इडाभक्षणेन शोभना शस्तिः शंसनं प्रसंशा यस्यां क्रियायां तथा यथा सर्वे इडां भक्षयन्ति तथा एत्वित्यर्थः । यद्वा सुशस्ति विभक्तिलोपः कीदृशे यज्ञगृहे सुशस्ति सुशस्तौ इडाभिः शोभनप्रशंसायुक्ते । एवं सूर्य्यमुक्त्वा देवानाह । हे युवानः ! जरारहिता देवाः अपि निश्चितम् अभिपित्वे अभिपतने आगमनकाले यथा येन प्रकारेण यूयं मत्सथ मद तृप्तौ तृप्तथ तथा नोऽस्माकं विश्वं सर्वं जगत् गन्तृ जङ्गमं पुत्रगवादिकं मनीषा मनीषया बुद्ध्या मत्सथ अन्तर्भूतण्यर्थः तर्पयत यथा भवद्भिस्तृप्तिः क्रियते तथास्मत्प्रजास्तर्पणीया इत्यर्थः ॥ ३४ ॥

यद॒द्य कच्च॑ वृत्रहन्नु॒दगा॑ अ॒भि सू॑र्य्य । सर्व॒ तदि॑न्द्र॒ ते वशे॑ ॥ ३५ ॥

(१) यदद्य । द्वे गायत्र्यौ यत् अद्य कच कुत्रचित् यत् । हे वृत्रहन् वृत्रस्य पाप्मनः शार्वरस्य तमसो हन्तः । त्वम् उदगा अभि । अभ्युदगाः अभ्युदेषि हे सूर्य । तत्सर्वमेतत् हे

(१) अत्र वाराणसी० लि०पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । यदद्य द्वे गायत्र्यौ हे वृत्रहन् वृत्रस्य पाप्मनः शार्वरस्य तमसः हन्तः हे सूर्य हे इन्द्र ऐश्वर्ययुक्त अद्य त्वं यत् कच्च यत्र कुत्रचित् अभिउदगाः अभ्युदेषि तत्सर्वं ते तव वशे वर्तते यद्वा उदगाः पुरुषव्यत्ययः उदगात् यत्किञ्चित्प्राणिजातमुद्गच्छति तत्सर्वं तव वशे वर्त्तते सर्वस्य त्वमेवैक ईशिषे न द्वितीय इत्यर्थः ॥ ३५ ॥

इन्द्र ऐश्वर्ययुक्त ते तव वशे वर्तते । त्वमेवैक ईश्वरो न द्वितीय इत्यभिप्रायः ॥ ३५ ॥

श्रुतकक्षसुकक्षदृष्टा गायत्री ऐन्द्राग्नपुरोरुक् । वृत्रो मेघे रिपौ ध्वान्ते दानवे वासवे गिराविति कोशात् वृत्रमन्धकारं शार्वरं हन्ति वृत्रहा रविः । हे वृत्रहन् ! हे सूर्य्य ! हे इन्द्र ! ऐश्वर्य्ययुक्त ! अद्य यत् कच्च यत्र कुत्रचित् त्वमभि उद्गाः अभ्युदेषि तत्सर्वं ते तव वशेऽस्तीति शेषः । यद्वा उद्गाः अत्र पुरुषव्यत्ययः यत्किञ्चित्प्राणिजातमुदेति तत्सर्वं तव वशे सर्वस्येशिता त्वमेवेत्यर्थः ॥ ३५ ॥

**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य्य । विश्व-माभासि रोचनम् ॥ ३६ ॥**

(१) तरणिर्विश्वदर्शतः यस्त्वं तरणिरसि तूर्णं वर्तसे विश्वदर्शतः सर्वदर्शनीयश्चासि । ज्योतिष्कृत् ज्योतिषश्च कर्तासि हे सूर्य । तं त्वां प्रति तथा ब्रूमः त्वमेव विश्वं सर्वम् आभासि दीपयसि । रोचनं दीप्तम् अग्निविद्युद्ग्रहतारकरूपन्त्वदीयमेवैकं ज्योतिः सर्वत्राभातीत्यर्थः ॥ ३६ ॥

प्रस्कण्वदृष्टा गायत्री वैश्वदेवपुरोरुक् । हे सूर्य्य ! त्वं ज्योतिष्कृत् तेजसः कर्त्तासि विश्वमाभासि प्रकाशयसि च अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीयं तेज इत्यर्थः । कीदृशं विश्वं रोचनं दीप्यमानं त्वत्प्रकाशेनेति भावः । कीदृशस्त्वम् तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः अश्यावितृभ्योऽनिरिति ( उणा० २,९८ ) तरतेरनिप्रत्ययः विश्वदर्शतः विश्वस्य दर्शतो दर्शनीयः दृशेरतच्॥३६॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । तरणिः हे सूर्य त्वं तरणिः असि तूर्णं वर्त्तसे विश्वदर्शनीयः ज्योतिष्कृत् ज्योतिषः कर्तासि रोचनं दीप्तं विश्वमाभासि आदीपयसि अग्निविद्युन्नक्षत्रग्रहतारकादि त्वदीयमेव ज्योतिरित्यर्थः ॥ ३६ ॥

तत् सूर्य॑स्य दे॒व॒त्वं तन्म॑हि॒त्वं म॒ध्या कर्तो॒र्वित॑तꣳ सं ज॑भार । य॒देद॑युक्त ह॒रितः॑ स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते सि॒मस्मै॑ ॥ ३७ ॥

(१)तत्सूर्यस्य । द्वे त्रिष्टुभौ तदेव सूर्यस्य देवत्वम् । तच्च महित्वम्महाभाग्यम् तत्किमित्यत आह । मध्या कर्तोर्विततं सञ्जभार मध्या मध्ये इत्यर्थः । कर्तोः कर्मण इत्यर्थः । मध्ये यत्कर्मणाङ्क्रियमाणानां देवासुरमनुष्यसंबन्धिनां विततं रश्मिजालम् अहर्लक्षणम् सञ्जभार । अयमेव संहरते नान्य एतत्तनितुं शक्नोति नचोपसंहर्तुमित्यभिप्रायः । किञ्च यदा इत् अयुक्त यदा प्रयुङ्क्ते आत्मसंस्थान्करोति हरितः हरितवर्णान् रश्मीन् । ते ह्यस्तमनकाले लोहितायन्ति सधस्थात् सहस्थानादाहृत्य पृथिव्यादिलोकत्रयं तेषां सहस्थानम् । तत्र हि ते निपतन्ति । आद्रात्रीवासस्तनुते । आत् अथानन्तरं रात्री तमोमयं वासः तनुते विस्तारयति । सिमस्मै सर्वस्मै जगति एकत्रादित्यसहितं

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई्मु०पुं० नास्ति तद्यथा तत्सूर्यस्य द्वे त्रिष्टुभौ तदेव सूर्यदेवत्वं तच्च महित्वं महाभाग्यं सौभाग्यं तत्किमित्यत आह मध्या मध्ये इत्यर्थः कर्मणामित्यर्थः मध्ये यत्कर्मणां क्रियमाणानां देवासुरमनुष्यसम्बन्धिनां मध्ये विततं रश्मिजालं सञ्जभार सञ्जहार संहरते नान्य एत्तानितुं शक्नोति न चोपहर्तुमितिभावः किञ्च यदा इत् यदैव सधस्थात् सहस्थानात् हरितः हरितवर्णान् रश्मीन् अयुक्त युङ्क्ते आत्मनि आत्मसंस्थान् करोति रश्मयो हि अस्तमनकाले लोहितायन्ते अतो हरित इत्युक्तं पृथिव्यादिलोकत्रयं तेषां सहस्थानं तत्र हि ते निपतन्ति आत् अनन्तरमेव रात्री सिमस्मै सर्वस्मै जगते वासः आच्छादनं तनुते विस्तारयति यस्मिन्नस्तमिते तमः सर्वं व्याप्नोतीत्यर्थः ॥ ३७ ॥

ज्योतिरेकत्र तम आदित्यप्रभावात्प्रभ्रमतीत्ययमभिप्रायः ॥ ३७ ॥

कुत्सदृष्टे द्वे त्रिष्टुभौ मरुत्वतीययोः पुरोरुचौ । सूर्य्यस्य तत् देवत्वं देवतानुभावः तच्च महित्वं महाभाग्यमैश्वर्य्यम् तत् किम् कर्त्तोः ईश्वरे तोसुन्कसुनाविति ( पा० ३, ४, १३ ) करोतेस्तोसुन्प्रत्ययः कार्य्यश्रेष्ठस्य जगद्रूपस्य मध्या मध्ये विततं विस्तारितमंशुजालं सञ्जभार संजहार संहरते न ह्यन्य एतादृशमंशुजालं । प्रसारयितुं संहर्तुं वा शक्नोतीत्यर्थः । किञ्च यदा इत् यदेव हरितः हरितवर्णान् रश्मीनयुक्त युङ्क्ते आत्मनि आरोपयति सधस्थात् सह तिष्ठन्त्यंशवो यत्र तत् सधस्थं व्योममण्डलम् सध मादस्थयोश्छन्दसीति ( पा० ६, ३, १६ ) सहस्य सधादेशः सन्ध्याकाले पीतवर्णानंशून् यदा व्योममण्डलात् स्वास्मिन् योजयति । आत् अनन्तरमेव रात्री निशा सिमस्मै वासः तनुते सर्वं वस्तु तमसाच्छादयतीत्यर्थः सूर्य्यास्तादनन्तरं रात्रिसद्भावात् । सिमशब्दः सर्वपर्य्यायः ॥ ३७ ॥

तन्मित्रस्य वरु॑णस्याभिचक्षे सूर्यो॑ रूपं कृ॑णुते द्योरुपस्थे॑ । अनन्तमन्यद्रुश॑दस्य पाजः॑ कृष्णमन्यद्धरि॑तः सम्भ॑रन्ति ॥ ३८ ॥

(१) तन्मित्रस्य । सूर्यः तद्रूपं ज्योतिः कृणुते कुरुते द्यो-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । तन्मित्रस्य सूर्यः द्योः द्युलोकस्य उपस्थे उत्सङ्गे मित्रस्य वरुणस्य च अभिचक्षे अभिदर्शनाय तद्रूपं कृणुते कुरुते । कृते मित्रो हि सुकृतिनो गृह्णाति वरुणो दुष्कृतिनः मित्रवरुणरूपेण-जगदनुगृह्णातीत्यर्थः किञ्च अस्य सूर्यस्य अनन्तमपर्यन्तं कालतो देशतश्च रुशत् शुक्लं जरामरणवियुक्तं विज्ञानघनमानन्दम् अन्यत् एकं पाजः रूपमस्तीति शेषः पाज इति बलनाम । इह तु रूपमुच्यते तत्तु अद्वैतम् अन्यत् कृष्णं द्वैतलक्षणं रूपं हारिणा इन्द्रियवृत्तयः सम्भरन्ति निदानभूता भवन्ति ॥ ३८ ॥

लोकस्य उपस्थे उत्सङ्गे । मित्रस्य वरुणस्याभिचक्षे अदर्शनाय । मित्रो हि सुकृतिनो गृह्णाति वरुणः दुष्कृतिनो गृह्णाति एवमनेन प्रकारेण जगदनु गृह्णातीत्यभिप्रायः किञ्च अनन्तम् अपर्यन्तं कालतः देशतश्च । अन्यत् एकम् रुशत् शुक्लं जरामरणादिभिर्वियुक्तम् । विज्ञानघनमानन्दः अस्य सूर्यस्य पाजः । पाज इति बलनाम इह तु रूपमुच्यते रूपम् अस्तीति शेषः । तच्चाद्वैतलक्षणम् कृष्णं द्वैतलक्षणं अन्यत् अपरं रूपम् हरितः हरिणा इन्द्रियवृत्तयः संभरन्ति निदानभूता भवन्ति ॥ ३८ ॥

सूर्यो द्योः द्युलोकस्योपस्थे उत्सङ्गे मित्रस्य वरुणस्य च तद्रूपं कृणुते कुरुते येन रूपेण जनानभिचक्षे अभिचष्टे पश्यति मित्ररूपेण जनानभिचक्षे अभिचष्टे पश्यति मित्ररूपेण सुकृतिनोऽनुगृह्णाति वरुणरूपेण दुष्कृतिनो निगृह्णातीत्यर्थः । अस्य सूर्यस्य अन्यत् एकं पाजो रूपमनन्तम् कालतो देशतश्चापरिच्छेद्यम् रुशत् शुक्लं दीप्यमानं विज्ञानघनानन्दं ब्रह्मैव । अन्यत् कृष्णं द्वैतलक्षणं रूपं हरितः दिशः इन्द्रियवृत्तयो वा सम्भरन्ति धारयन्ति । इन्द्रियग्राह्यं द्वैतरूपमेकम् एकं शुद्धं चैतन्यमद्वैतमिति द्वे रूपे सूर्यस्य सगुणनिर्गुणं ब्रह्म सूर्य एवेत्यर्थः ॥ पाज इति बलनाम ( निघ० २, २ ) इह रूपमुच्यते । रोचत इति रुशत् औणादिकेऽति प्रत्यये चकारस्य शकारो गुणाभावश्च निपात्यते यद्वा रुश हिंसायाम् रुच्यर्थे वर्त्तमानाद्स्माल्लटः शतरि रुशदिति रूपम् ॥ ३८ ॥

बण्महाँ२॥ ॲसि सूर्य्य बडादित्य महाँ२॥ ॲसि । महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ२॥ ॲसि ॥३९॥

(१) बण्महान् । प्रगाथः द्वाभ्याम् पूर्वा बृहती उत्तरा स-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । बण्महान् प्रगाथः द्वाभ्यां पूर्वा बृहती उत्तरा सतोबृहती । हे सूर्य बट् सत्यं त्वं महान् परब्रह्मासि हे आदित्य ब-

तोबृहती । बट् सत्यम् महान् परब्रह्म असि हे सूर्य बट् हे आदित्य तेजसामादानादादित्यः । महानसि किञ्च महः महतः ते तव सतः महिमा महाभाग्यं सर्वेषु देवेष्ववस्थितम् । पनस्यते पूज्यते सर्वैः प्राणिभिः । अद्धा सत्यं हे देव दानादिगणयुक्त महान् असि । अभ्यासे भूयांसमर्थं मन्यन्ते यथा अहो दर्शनीयाहो दर्शनीया इति ॥ ३९ ॥

जमदग्निदृष्टे द्वे बृहतीसतोबृहत्यौ । आद्या माहेन्द्रपुरोरुक् । बडित्यव्ययं सत्यार्थम् । हे सूर्य्य ! सुवति प्रेरयति कार्य्येषु जगदिति सूर्य्यः राजसूयसूर्य्येत्यादिना ( पा० ३, १, ११४ ) क्यबन्तो निपातः । वट् सत्यं त्वं महान् असि श्रेष्ठोऽसि । आदत्तेऽशूनित्यादित्यः हे आदित्य । वट् त्वं महानसि । किञ्च महः महतः सतः नित्यस्य तव महिमा पनस्यते लोकैः स्तूयते । हे देव । दीप्यमान । अद्धा सत्यं त्वं महानसि अभ्यासे भूयांसमर्थं मन्यन्त इति ( निरु० १०, ४२ ) पुनरुक्तिरादरार्था ॥ ३९ ॥

**बट्सूर्य्य श्रवसा महाँ२॥ असि सत्रा देव महाँ२॥ असि । मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ ४० ॥**

वट् सूर्य । वट् सत्यम् हे सूर्य श्रवसा श्रवणीयेन धनेन

---

ट् महानसि । तेजसामादानादादित्यः किञ्च महः महतः सतः ते तव महिमा महाभाग्यं पनस्यते पूज्यते सर्वप्राणिभिः स्तूयते च । हे देव अद्धा सत्यं त्वं महानसि अभ्यासे भूयांसमर्थं मन्यन्ते अहो दर्शनीयः अहो दर्शनीयः इतिवत् ॥ ३९ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । वट् सूर्यः । हे सूर्य वट् सत्यं श्रवसा धनेन त्वं महानसि हे देव सत्रा सत्य त्वं महानसि किञ्च मह्ना निजसत्त्वेन देवानां मध्ये त्वमेव महान् असुर्यः असवः प्राणा येषां सन्तीति असु-

महानसि । सत्रासत्यम् हे देव महानसि । किञ्च मह्ना स्वकीयेन महत्त्वेन त्वमेव देवानां मध्ये असुर्यः । असवः प्राणाः सन्ति येषां ते असुराः रो मत्त्वर्थीयः तेभ्यो हितः असुर्यः उपगवादित्वाद्यत् प्राणिभ्यो हित इत्यर्थः। पुरोहितश्च पुर एनं दधाति सर्वेषु कार्येष्विति पुरोहितः । किञ्च विभु व्यापि । ज्योतिः विज्ञानघनानन्दम् अदाभ्यम् अनुपहिंसितम् ॥ ४० ॥

आदित्यग्रहप्रथमग्रहणम् । हे सूर्य्य ! वट् सत्यं श्रवसा धनेन यशसा वा त्वं महानसि । हे देव ! सत्यं त्वं महानसि देवानां मध्ये श्रेष्ठोऽसि । केन मह्ना महत्त्वेन । कीदृशः त्वम् असुर्यः असवः प्राणा येषां सन्ति तेऽसुराः तेभ्यो हितोऽसुर्यः प्राणिहितः। पुरोहितः पुरोऽग्रे हितः स्थापितः सर्वकार्येषु पुरः पूज्यः सर्वदेवानां सूर्य्यार्घदानानन्तरमेव पूजाधिकारात् । विभु व्यापकमदाभ्यमनुपहिंस्यं ज्योतिः तेजस्त्वमेव तेजोरूप इत्यर्थः ॥ ४० ॥

श्रा॒यन्त॑ इव॒ सूर्य्यं॒ विश्वेदिन्द्र॑स्य भक्षत । वसू॑नि जा॒ते जन॑मान॒ ओज॑सा॒ प्रति॒ भा॒गं न दी॑धिम ॥ ४१ ॥

(१)श्रायन्त इव । बृहती । यथा आश्रयन्त आश्रिताः सूर्यं

राः रो मत्त्वर्थे तेभ्यो हितः असुर्यः उगवादिभ्यो यत् प्राणिनो हित इत्यर्थः । पुरोहितः पुर एनं दधाति सर्वकार्येषु इति पुरोहितः। किञ्च विभु व्यापि अदाभ्यमनुपहिंस्यं विज्ञानघनानन्दं ते ज्योतिः ॥ ४० ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति तद्यथा । श्रायन्त इव बृहती सूर्यं श्रायन्तः श्रयन्तः श्रयन्त इव यथा सूर्यमाश्रिताः रश्मयः विश्वा विश्वानि धनानि वृष्टिलक्षणानि इत्यादपूरणः इन्द्रस्य सम्बन्धीनि इन्द्रानुज्ञातानि भक्षत विभक्षते विभजन्ते भज भागे सूर्यावष्टम्भात् एवं वयमपि सूर्यं समाश्रिता । इन्द्रस्य वसूनि धनानि जाते पुत्रपौत्रादौ जनमाने जनिष्यमाणे भविष्यत्कालविषये च ओजसा बलेन ज्ञानकर्मसमुच्चयकारितया प्रति पुरुषं भागं न भागमिव दीधिम स्थापयाम दधातेरेतद्रूपं न तु ध्यायतेरर्थपौष्कल्यात् ॥ ४१ ॥

रश्मयः विश्वानि धनानि इदिति निपातः पादपूरणार्थः । इन्द्रस्य संबन्धीनि इन्द्रानुज्ञातानि । भक्षत आख्यातमेतत् अनुदात्तत्वात् विभक्षन्ते विभजन्ते एवं वयमपि समाश्रिताः सूर्यं विश्वानीन्द्रस्य धनानि विभक्षामः । किञ्च वसूनि धनानि जाते पौत्रादौ जनमाने जनिष्यमाणे च भविष्यत्कालविषये । ओजसा बलेन ज्ञानकर्मसमुच्चयकारितया । प्रति पुरुषं भागन्न भागमिव दीधिम । निधीमहि स्थापयाम दधातेरेतद्रूपं नतु ध्यायतेरर्थपौष्कल्यात् ॥ ४१ ॥

नृमेधदृष्टा बृहती । आदित्यस्य पुनर्ग्रहणम् । श्रयन्त इति श्रायन्तः श्रिञ् सेवायाम् अतः शतरि शपि गुणे प्राप्ते व्यत्ययेन वृद्धिः इव एवार्थे । सूर्य्यं श्रयन्तः आश्रयन्तः एव अर्थाद्रश्मयः इन्द्रस्य विश्वा इत् विश्वानि सर्वाण्येव वसूनि धनानि वृष्टिधान्यनिष्पत्त्यादीनि भक्षत अभक्षत भजन्ते विभजन्ते प्राणिभ्यो विभज्य ददतीत्यर्थः भज भागसेवयोः अस्य लुङि तङि प्रथमबहुवचने रूपम् अडभाव आर्षः आत्मनेपदेष्वनत इति ( पा० ७, १, ५ ) झस्यादादेशः । सूर्य्यकिरणा इन्द्रदत्तां वृष्टिं भूमौ विभजन्तीत्यर्थः । किञ्च वयं तान्येव वसूनि जाते पुत्रे जनमाने उत्पद्यमाने च ओजसा तेजसा सह प्रतिदीधिम धारयाम स्थापयामेत्यर्थः । किमिव भागं न भागमिव यथा स्वभावं पुत्रादिषु धारयामस्तथेत्यर्थः । धि धृतौ लङ् व्यत्ययेन शपः श्लुः द्वित्वम् तुजादित्वादभ्यासदीर्घः ॥ ४१ ॥

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात् । तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ४२ ॥

(१) अद्या देवाः । द्वे त्रिष्टुभौ अद्यास्मिन्नहनि हे देवाः

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०ना०

रश्मयः उदयकाले सूर्यस्य । निरंहसः पिपृत निष्पिपृत निर्मुञ्चत अंहसः पापात्सकाशात् । अंहतिश्चांहश्चांहुश्च हीतनिगूढोपधाद्विपरीतात् । निरवद्यात् निष्पिपृत च निर्मुञ्च च अवद्यात् अवदनीयात् । येन दुर्यशो भवति तदवद्यम् । तदेतदुच्यमानम् नः अस्माकम् मित्रावरुणः मामहन्ताम्पूजयन्तु अदितिः सिन्धुः नदी । पृथिवी उत अपि च द्यौः ॥ ४२ ॥

कुत्सदृष्टा त्रिष्टुप् द्व्यादित्यग्रहश्रयणे विनियोगः । दीव्यन्ति दीप्यन्ते इति देवाः रश्मयः हे देवाः ! नोऽस्मानंहसः पापात् निःपिपृत निर्मुञ्चत अवद्यात् दुर्यशसोऽपि निःपिपृत पृथक् कुरुत अस्माकं पापानि दुर्यशांसि च नाशयतेत्यर्थः । क्व अद्यास्मिन् दिने सूर्य्यस्य उदिता उदिते उदये अद्य सूर्य्योदयेऽस्मान् शुद्धान् कुरुतेत्यर्थः । अद्येत्यत्र द्व्यचोऽतस्तिङः निपातस्य चेति ( पा० ६,३, १३५, १३६ ) दीर्घः । अन्येषामपि दृश्यत इति (पा० ६, ३, १३७) दीर्घः पिपृतेत्यत्र । किञ्च मित्रादयः तत् ( नः ) अस्मद्वचनं मामहन्तां पूजयन्तु अङ्गीकुर्वन्त्वित्यर्थः । के मित्रः वरुणः अदितिः देवमाता सिन्धुः समुद्रो नदी वा पृथिवी उतापि च द्यौः स्वर्गः ॥ ४२ ॥

आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ४३ ॥

(१)आकृष्णेन । आवर्तमानः पुनः पुनर्भ्रमणं कुर्वन् कृष्णेन

---

तद्यथा । देवाः अद्या द्वे त्रिष्टुभौ । अद्य सूर्यस्य उदिता उदयकाले देवाः रश्मयः अंहसः पापात् निष्पिपृत निर्मुञ्चत अवद्यात् अवदनीयात् निः पिपृत येनाभाष्यो भवति तदवद्यं नः अस्माकं तदुच्यमानं मित्रः वरुणः अदितिः सिन्धुर्नदी पृथिवी उत अपि द्यौः मामहतां पूजयन्तु ॥ ४२ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । आकृष्णेन सविता देवः हिरण्ययेन हिरण्मयेन रथे-

रजसा रात्रिलक्षणेन सह। निवेशयन् स्वेषु स्वेषु प्रदेशेषु स्थापयन् अमृतं देवादिकम् मर्त्यं च मनुष्यादिकं च। हिरण्ययेन हिरण्मयेन सविता रथेन। आदेवो याति आयाति देवः दानादिगुणयुक्तः। भुवनानि भूतजातानि पश्यन् कानि कानि साधु कुर्वन्ति कानि वा असाध्विति। स्वरूपानुवादः॥ ४३॥

हिरण्यस्तूपदृष्टा त्रिष्टुप् सावित्रपुरोरुक्। सविता देवः हिरण्ययेन हिरण्मयेन रथेन आयाति आगच्छति। किं कुर्वन् कृष्णेन रजसा रात्रिलक्षणेन सह आवर्त्तमानः पुनर्भ्रमणं कुर्वन् अमृतं देवादिकं मर्त्यं मनुष्यादिकं च निवेशयन् स्वस्वप्रदेशेषु स्थापयन् भुवनानि पश्यन् कानि साधु कुर्वन्ति कान्यसाध्विति विचारयन्॥ तृतीयं सूर्य्यस्तुदुक्थ्यमहः समाप्तम्॥ ४३॥

प्रवा॑वृजे सुप्र॒या ब॒र्हिरे॑षामा वि॒श्पती॑व बीरि॑ट इयाते। वि॒शाम॒क्तोरु॒षसः॑ पू॒र्वहू॑तौ वा॒युः पू॒षा स्व॒स्तये॑ नि॒युत्वा॑न्॥ ४४॥

(१ प्रवावृजे। त्रिष्टुप्। वैश्वदेवस्तुतिः चतुर्थेऽहनि सर्वमेध

---

न आयाति किं कुर्वन् कृष्णेन रजसा रात्रिलक्षणेन सह आवर्तमानः पुनः पुनर्भ्रमणं कुर्वन् अमृतं देवादिकं मर्त्यं मनुष्यादिकं च निवेशयन् स्वेषु प्रदेशेषु स्थापयन् भुवनानि भूतजातानि पश्यन् कानि-साधु कुर्वन्ति कानि वा असाध्विति स्वरूपानुवादः॥ ४३॥

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा। प्रवावृजे त्रिष्टुप्। वैश्वदेवस्तुतिः। चतुर्थेऽहनि सर्वमेधं वैश्वदेव्यः पुरोरुचः एषां येषामिति सर्वनामव्यत्ययः। येषां यजमानानां बर्हिः सुप्रयाः सुप्रयाणं सुप्रगमनं प्रवावृजे प्रवृज्यते प्रस्तीर्यते तेषां स्वस्तये नियुत्वान् अश्ववान् वायुः पूषा च आ इयाते आगच्छतः कस्मिन् काले अक्तोः रजन्याः अवसाने उषसः पूर्वहूतौ पूर्वस्मिन्नाह्वानकाले काविव विश्पती इव यथा विशां पती राजानौ विशां मनुष्याणां वीरिटे गणे आ इयाते वीरिटशब्दो गणवचनः॥४४॥

वैश्वदेव्यः पुरोरुचः । प्रवावृजे प्रवृज्यते प्रच्छिद्यते । सुप्रयाः सुप्रयाणं सुगमनं बर्हिः एषाम् येषामिति सर्वनामव्यत्ययः । येषां यजमानानाम् । आ इयाते आगच्छतम् अश्विनौ । कथमिव । विश्पती इव । सर्वस्य पती इव वीरिटशब्दो गणवचनः । यथा विशां मनुष्याणां पती राजानो विशां मनुष्यां गणे अवस्थितौ कस्मिन्काले । अक्तोः रात्र्याः अवसाने । उषसः आगमनकाले । पूर्वहूतौ पूर्वस्मिन् आह्वानकाले । किञ्च वायुः नियुत्वान् अश्ववान् । पूषा च स्वस्तये स्वस्त्ययनाय अविनाशाय आ इयाते ॥ ४४ ॥

अथ चतुर्थमहः वैश्वदेवस्तुत् । तथा च श्रुतिः ( १३, ७, १, ६ ) वैश्वदेवश्चतुर्थमहर्भवति वैश्वदेवा ग्रहा भवन्ति वैश्वदेव्यः पुरोरुच इति । वैश्वदेवस्तुतिः चतुर्थेऽह्नि एकादश पुरोरुचः षट् प्रतीकोक्ताः इति सप्तदश ऐन्द्रवायवादिसावित्रान्तग्रहाणां पुरोरुचो ग्रहणमन्त्राः ॥ वसिष्ठदृष्टा त्रिष्टुप् ऐन्द्र ( वायव ) पुरोरुक् । एषां यजमानानां स्वस्तये कल्याणाय वीरिटेऽन्तरिक्षे वर्त्तमानौ वायुः पूषा च आ इयाते आगच्छतः ई कान्त्यसनगतिव्याप्त्यादौ ( धातुः २४, ३९ ) व्यत्ययेन तङ् । कीदृशो वायुः नियुत्वान् नियुतो नियुत्संज्ञा अश्वाः सन्त्यस्य सः नियुतो वायोरित्युक्तेः ( निघ० १, १५, १० ) । कस्मिन् काले अक्तोः रात्रेः उषसः दिनस्य पूर्वहूतौ पूर्वा चासौ हूतिश्च पूर्वहूतिस्तस्याम् प्रथमाह्वानकाले अग्निहोत्रहोमकाले इत्यर्थः : उषसः पूर्वाह्वाने पूषा रविरायाति रात्रौ वायुः वायुना वायुसखत्वादग्निर्लक्ष्यते रात्रिहोमस्याग्निदेवत्यत्वात् । तत्र दृष्टान्तः काविव विश्पतीव यथा विशां पती द्वौ राजानौ विशां वीरिटे मनुष्याणां गणे आगच्छतस्तद्वत् तावपि तेषां स्वस्तये इयाते । एषां केषाम् येषां बर्हिः प्रवावृजे प्रवृज्यते प्रस्तीर्यते वृजी वृतित्यागयोः लिट् अभ्यासदीर्घः संहितायाम् । कीदृशं बर्हिः सुप्रयाः शोभनं प्रयः प्रगमनं प्रस्तरणं यस्य तत् सुप्रयः दीर्घश्छान्दसः सम्यक् विधिना प्रस्तीर्णमित्यर्थः । वीरिटशब्दो गणवाचकः तथा च

यास्कः ( निरु० ५, २८ ) प्रवृज्यते सुप्रायणं बर्हिरेषामियाते सर्वस्य पातारौ वा पालयितारौ वा वीरिटमन्तरिक्षं भियो वा भासो वा ततिरिति गणाभिधानं वा स्यात् सोऽपि भीतननो भासस्तनयश्च अन्तरिक्षे निरालम्बने भयं भासो नक्षत्राणां तननम् गणमपि दृष्ट्वा योद्धारो बिभ्यति भियो वी आदेशो तनोतेः रिट इति ॥ ४४ ॥

इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम्। आदित्यान्मारुतं गणम् ॥ ४५ ॥

(१)इन्द्रवायू बृहस्पतिम्।तिस्रो गायत्र्यः।इन्द्रवायू बृहस्पतिम्। मित्रा मित्रमिति प्राप्ते आकारः। मित्रम् अग्निम् पूषणम् भगम्। आदित्यान् मारुतं च गणम् आह्वयामीति शेषः ॥४५॥

मेधातिथिदृष्टे द्वे गायत्र्यौ आद्या ऐन्द्रवायवस्य पुनर्ग्रहणे द्वितीया मैत्रावरुणग्रहणे। इन्द्रवायू बृहस्पतिं मित्रा विभक्तेराकारः अग्निं पूषणं भगम् आदित्यान् मारुतं मरुत्सम्बन्धिनं गणम् एतानाह्वयामि ॥ ४५ ॥

वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसः ॥ ४६ ॥

(२) वरुणः प्राविता।वरुणः प्राविता प्रकर्षेण अविता रक्ष-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। इन्द्रवायू। तिस्रो गायत्र्यः इन्द्रवायू बृहस्पतिमित्रा मित्रम् अग्निं पूषणं भगमादित्यान् मारुतं गणं च आह्वयामीति शेष ॥ ४५ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। वरुणः वरुणः प्राविना प्रकर्षेण अविता रक्षकः भुवत् भवतु मित्रश्च काभिः विश्वाभिः ऊतिभिः सर्वैः अवनैः पालनैः किञ्च नोऽस्मान् सुराधसः शोभनधनान् करतां कुरुताम् ॥ ४६ ॥

कः भुवत् भवतु । मित्रश्च । विश्वाभिः सर्वाभिः ऊतिभिः अवनैः पालनैः । किञ्च करतां कुरुतां च नः अस्मान् सुराधसः शोभनधनान् ॥ ४६ ॥

वरुणः मित्रश्च विश्वाभिः सर्वाभिः अवनैः रक्षणप्रकारैः प्राविता प्रकर्षेण रक्षको भुवत् भवतु भवतेर्व्यत्ययेन तुदादित्वात् शप्रत्ययः इतश्च लोप इति ( पा० ३, ४, ९७ ) तिप इलोपः धातोरुवङ् । किञ्च मित्रावरुणौ नोऽस्मान् सुराधसः शोभनधनान् करतां कुरुताम् शोभनं राधो येषाम् ॥ ४६ ॥

अधि न इन्द्रैषां विष्णो सजात्यानाम् । इता मरुतो अश्विना ॥ तं प्रत्नथा । अयं वेनः । ये देवासः । आ न इडाभिः । विश्वेभिः सोम्यं मधु । ओमासश्चर्षणीधृतः ॥ ४७ ॥

(१)अधि नः । अधि इत् अध्यागच्छति नोऽस्माकम् एषां च सजात्यानामृत्विजाम् । हे इन्द्र हे विष्णो हे मरुतः हे अश्विनौ । अथ प्रतीकोक्ताः । तम्प्रत्नथा । अयं वेनः । ये देवासः । आ न इडाभिः । विश्वेभिः सोम्यं मधु ओमासश्चर्षणी धृतः ॥ ४७ ॥

कुसीदिदृष्टा गायत्र्याश्विनपुरोरुक् । हे इन्द्र ! हे विष्णो ! हे मरुतः ! हे अश्विना ! अश्विनौ ! नोऽस्माकमेषां सजात्यानां समानजातीयानामधि सजात्यमध्ये यूयमित आगच्छत ॥ अत्र प्रतीको-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । अधि नः । हे इन्द्र हे विष्णो हे मरुतः हे अश्विनौ नोऽस्माकम् एषां सजात्यानां ऋत्विजां च अति इत् अत्यागच्छत अथ प्रतीकोक्ताः तत्प्रत्नथा अयं वेनः ये देवासः अन्न इडाभिः विश्वेभिः सोम्यं मधु ओमासश्चर्षणी धृतः षट् ॥ ४७ ॥

काः तं प्रत्नथा ( ७, १२ ) शुक्रग्रहे अयं वेनः ( ७, १६ ) मन्थिग्रहे ये देवासः ( ७, १९ ) आग्रयणस्य आ न इडाभिः ( ३३, ३४ ) ध्रुवस्य विश्वेभिः सोम्यं मधु ( ३३, १० ) ऐन्द्राग्नस्य ओमासश्चर्षणीधृतः ( ७, ३३ ) वैश्वदेवस्य ग्रहणे ॥ ४७ ॥

**अग्न इन्द्र वरुण मित्र देवाः शर्धः प्रयन्त मारुतोत विष्णो । उभा नासत्या रुद्रो अध ग्नाः पूषा भगः सरस्वती जुषन्त ॥ ४८ ॥**

(१)अग्न इन्द्र । त्रिष्टुप् हे अग्ने हे इन्द्र हे मित्र हे देवाः । शर्द्धः बलं संगृह्य । प्रयन्त प्रगच्छत सोमिनो गृहं सोमं पातुम् । हे मारुतगण उत अपि हे विष्णो । प्रत्यक्षकृतोऽयमर्द्धर्चः । द्वितीयस्तु परोक्षकृतः वाक्यभेदात् । उभा नासत्या उभौ नासत्यौ रुद्रः अध ग्नाः देवपत्न्यः पूषा भगः सरस्वती च जुषन्त सेवन्त यज्ञं सोमपानाय ॥ ४८ ॥

प्रतिक्षत्रदृष्टा त्रिष्टुप् मरुत्वतीयपुरोरुक् । हे अग्ने ! हे इन्द्र । हे वरुण । हे मित्र । देवाः । हे देवाः । हे मारुत । मरुद्गण । उतापि हे विष्णो । यूयं शर्धः बलं प्रयन्त प्रयच्छत दत्त यमेः शपो लुक् । एवं प्रत्यक्षमुक्त्वा परोक्षमाह उभा नासत्या उभौ नासत्यावश्विनौ रुद्रः अध अथ ग्नाः देवपत्न्यः पूषा भगः सरस्वती च जुषन्त जुषन्तां सेवन्तां हवींषि ॥ ४८ ॥

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा अग्न इन्द्र । त्रिष्टुप् । हे अग्ने हे इन्द्र हे वरुण हे मित्र हे देवाः हे मारुतगण उत हे विष्णो शर्द्धः बलं संगृह्य प्रयन्त प्रगच्छत सोमिनो गृहं सोमं पातुं प्रत्यक्षकृतोऽयमर्धर्चः द्वितीयस्तु परोक्षकृतः अतो वाक्यभेदः उभौ नासत्यौ रुद्रः अध अथ ग्नाः देवपत्न्यः पूषा भगः सरस्वती च जुषन्त सेवन्ताम् ॥ ४८ ॥

इन्द्राग्नी मित्रावरुणादितिꣳ स्वः पृथिवीं द्यां मरुतः पर्वताँ२॥ अपः । हुवे विष्णुं पूषणं ब्रह्मणस्पतिं भगं नु शꣳसꣳ सवितारमूतये ॥ ४९ ॥

(१)इन्द्राग्नी मित्रावरुणा। जगती । इन्द्राग्नी च मित्रावरुणौ च अदितिश्च स्वः आदित्यं च पृथिवी च द्याश्च मरुतश्च पर्वतांश्च अपश्च । हुवे आह्वयामि । विष्णुश्च पूषणं च ब्रह्मणस्पतिश्च नु क्षिप्रं शंसं शंसितव्यं सवितारश्च हुवे । ऊतये अवनाय ॥ ४९ ॥

वत्सारदृष्टा जगती सशास्त्रमरुत्वतीयपुरोरुक् । इन्द्राग्नी मित्रावरुणौ अदितिम् स्वः आदित्यम् पृथिवीम् द्यां द्युलोकम् मरुतः पर्वतान् अपः विष्णुम् पूषणम् ब्रह्मणस्पतिम् भगम् शंसं स्तुत्यं सवितारम् एतान् नु क्षिप्रमूतयेऽवनायाहं हुवे आह्वयामि ॥ ४९ ॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः । यः शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२॥ अवन्तु देवाः ॥ ५० ॥

(२)अस्मे रुद्राः।त्रिष्टुभः पश्च अस्मे अस्माकं रुद्राः मेहनाः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । इन्द्राग्नी मित्रावरुणा जगती इन्द्राग्नी मित्रावरुणौ अदितिं स्वः आदित्यं पृथिवीं द्यां मरुतः पर्वतान् अपः विष्णुं पूषणं ब्रह्मणस्पतिं भगं शंसयितव्यं सवितारम् एतान् उ क्षिप्रम् ऊतये अवनाय हुवे आह्वयामि ॥ ४९ ॥

(२)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा अस्मे रुद्राः त्रिष्टुभः पश्च अस्मे अस्माकं मेहना सेचना जस आकारः । यद्वा महनीयाः पूजनीयाः रुद्राः पर्वताश्च वृत्रह-

सेचनाः यद्वा महनीयाः पूजनीयाः पर्वतासः पर्वताश्च वृत्रहत्ये वृत्रवधे भरहूतौ संग्रामाह्वाने च सजोषाः समानजोषणाः समानप्रीतयः एकाभिप्रायाः भवन्त्विति शेषः । यश्च शंसते शस्त्राणि स्तुवते स्तौति च स्तोत्राणि धायि दधाति हवींषि । पज्रः प्रार्जितधनः सन् तस्मै च रुद्रा सजोषाः भवन्तु । किञ्च इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषां ते तथोक्ताः अस्मान् अवन्तु पालयन्तु देवाः ॥ ५० ॥

पञ्च त्रिष्टुभः आद्या प्रगाथदृष्टा माहेन्द्रवुरोरुक् । यो नरः शंसते शस्त्राणि शंसति स्तुवते स्तौति स्तोत्राणि प्रकर्षेण जपति पज्रः प्रार्जितधनः सन् धायि दधाति हवींषि तान् अस्मांश्च यजमानान् देवा अवन्तु पान्तु पज्रः पृषोदरादिः । कीदृशा देवाः अस्मे अस्मासु मेहना जस आकारः मेहन्ति सिञ्चन्ति मेहनाः धनादिसेक्तारः । रोदयन्ति शत्रूनिति रुद्राः । पर्वतासः पर्वाणि उत्सवा विद्यन्ते येषां ते पर्वताः उत्सववन्तः पर्वमरुद्भ्यां तबिति ( पा० ५, २. १२२ वा० ११ ) तप्प्रत्ययः । वृत्रहत्ये वृत्रासुरवधाय भरहूतौ भरे संग्रामे हूतिराह्वानम् तत्र सजोषाः समाना जोषः प्रीतिर्येषां ते एकमतय इत्यर्थः । इन्द्रज्येष्ठाः इन्द्रो ज्येष्ठो येषां ते । ईदृशा देवा नोऽवन्तु ॥ ५० ॥

अर्वाञ्चो अद्या भवता यजत्रा आ वो हार्दि भयमानो व्ययेयम् । त्राध्वं नो देवा निजुरो वृकस्य त्राध्वं कर्त्तादवपदो यजत्राः ॥ ५१ ॥

त्ये वृत्रहननाय भरहुतौ संग्रामाह्वाने सजोषाः समानजोषणः समानप्रीतयः एकाभिप्राया भवन्त्विति शेषः यश्च शंसते शस्त्राणि स्तुवते स्तौति स्तोत्राणि यश्च प्रकर्षेण अर्जयति पज्रः प्रार्जितधनः सन् यः धायि दधाति हवींषि तस्मै च रुद्रादयः सजोषाः सन्तु किञ्च इन्द्रो ज्येष्ठो येषां ते इन्द्रज्येष्ठाः देवा अस्मान् अवन्तु पान्तु॥५०॥

(१) अर्वाञ्चो अद्य । अर्वागञ्चनाः अद्य भवत हे यजत्राः हे यजनीयाः किञ्च आवो हार्दि भयमानो व्ययेयम् । आव्ययेयम् व्ययतिर्गत्यर्थः आगमेयम् अभिमुखमापादयेयम् वः युष्माकं हार्दि हृदयम् भयमानः बिभ्यत् । विभेतेर्विकरणव्यत्ययेन शानचि शप् । यत एवमतो ब्रवीमि त्राध्वं पालयत नः अस्मान् हे देवाः निजुरः नितरां यो भक्षितं जरयति स निजूः बुभुक्षितादित्यः वृकस्य वृकादिति विभक्तिव्यत्ययः । त्राध्वञ्च कर्तात् कूपात् । अवपदः अवाचीनानि यत्र पादानि स तथोक्तः तस्मात् सोपानैर्यत्रोत्तरितुं न शक्यते इत्यर्थः । हे यजत्रा यष्टव्याः ॥ ५१ ॥

कूर्मदृष्टादित्यस्य प्रथमा पुरोरुक् । यजन्तं त्रायन्ते यजत्राः यष्टव्या वा हे यजत्राः देवाः ! अद्य यूयमर्वाञ्चः अस्मदभिमुखाः भवत दीर्घौ संहितायाम् ! यतो भयमानः बिभ्यत् अहं वो युष्माकं हार्दि हृदि भवं मनः आव्ययेयम् आगमयेयमभिमुखं सम्पादयेयमित्यर्थः । व्यय गतौ णिजन्तः । भिञो व्यत्ययेन शपि भयमानः । किञ्च हे यजत्राः देवाः ! नोऽस्मान् वृकस्य वृकात् त्राध्वम् पालयत कर्त्तात् कूपाच्च त्राध्वम् । कीदृशात् वृकात् निजुरः जूरी बधे नितरां जूर्य्यते हिनस्ति निजूः क्विप् तस्मान्निजुरः हिंसकात् । कीदृशात् कर्त्तात्

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । अर्वाञ्चो अद्य हे यजत्राः यष्टव्याः अद्य अवाञ्चः अर्वागञ्चनाः भवत किञ्च भयमानाः बिभेतेर्विकरणव्यत्ययेन शानचि शप् । बिभ्यन् सन् वो युष्माकं हार्दि हृदयम् अव्ययेयं व्ययतिर्गत्यर्थः आगमयेयम् आभिमुख्यं सम्पादयेयम् । हे देवाः निजुरः नितरां यो भक्षितं जरयति स निजूः तस्य निजुरः अतिबुभुक्षितस्य वृकस्य वृकादिति विभक्तिव्यत्ययः नोऽस्मान् त्राध्वं पालयत हे यजत्राः यजनीयाः यजन्तं त्रायन्त इति कर्तात् कूपात् त्राध्वं किम्भूतात् अवपदः अवाचीनानि पदानि यत्र तस्मात् सोपानैर्यत्रोत्तरितुं न शक्यते इत्यर्थः ॥ ५१ ॥

अवपदः अवाचीनाः पादन्यासा यत्र सः अवपात तस्मादवपदः सोपानैर्यत्रोत्तरीतुं न शक्यत इत्यर्थः ॥ ५१ ॥

विश्वे अद्य मरुतो विश्वं ऊती विश्वे भवन्त्वग्नयः समिद्धाः । विश्वे नो देवा अवसागमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥ ५२ ॥

(१) विश्वे अद्य इति व्याख्यातम् ॥ ५२ ॥

लुशाद्दृष्टादित्यपुनर्ग्रहणे । व्याख्याता ( १८, ३१ ) ॥ ५२ ॥

विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ । ये अग्निजिह्वा उतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥ ५३ ॥

(२) विश्वे देवाः । हे विश्वे देवाः शृणुत इमं हवम् आह्वानं मे मम । ये अन्तरिक्षे स्थ भवथ । ये च उपद्यवि द्युलोके स्थ भवथ । ये च अग्निजिह्वा अग्निमुखाः । उत वा अपि च यजत्रा यष्टव्याः श्रुत्वा च आह्वानम् आसद्य स्थित्वा अस्मिन् बर्हिषि मादयध्वं तृप्यध्वम् ॥ ५३ ॥

सुहोत्रदृष्टादित्यग्रहस्य दध्ना श्रयणे विनियुक्ता । हे विश्वे देवाः! ये यूयमन्तरिक्षे स्थ भवथ ये च द्यवि उप स्वर्गसमीपे स्थ ये चाग्निजिह्वाः वह्निमुखाः उत वा अपि च यजत्राः यजनीयाः ते सर्वे यूयमि-

---

(१) अत्र वाराणसी० लि०पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । विश्वे अद्येति व्याख्यातम् ॥ ५२ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । विश्वेदेवाः । इमं हवम् आह्वानं मे मम शृणुत ये च अन्तरिक्षे स्थ भवथ ये उपद्यवि द्युलोके स्थ ये च अग्निजिह्वाः अग्निमुखाः उत वा अपि च यजत्राः यष्टव्याः हवं श्रुत्वा च अस्मिन् बर्हिषि आसद्य स्थित्वा मादयध्वं तृप्यध्वम् ॥ ५३ ॥

मं मे मत्कृतं हवमाह्वानं शृणुत श्रुत्वा चास्मिन् बर्हिषि आसद्योप-
विश्य मादयध्वं तृप्यध्वम् ॥ ५३ ॥

देवेभ्यो हि प्रथमं यज्ञियेभ्योऽमृतत्वᳪं सुवसि भागमुत्तमम् । आदिद्दामानᳪं सवितर्व्यूर्णुषेऽनूचीना जीविता मानुषेभ्यः ॥ ५४ ॥

( १ ) देवेभ्यो हि । यस्माद्देवेभ्यः प्रथमं यज्ञियेभ्यः यज्ञार्हेभ्यः अमृतत्वं सुवसि अभ्यनुजानासि भागश्चोत्तमं सुवसि आत् इत् अथानन्तरमेव दामानम् दातारमुत्पत्तिस्थितिलयानाम् स्वकीयं रश्मिजालम् हे सवितः व्यूर्णुषे विवृणोषि विस्तारयासि। रश्मीनामुद्गमे हि विप्रोऽकम्पितमनसाग्निहोत्रादीनि कर्माणि कुर्वीत । किञ्च अनूचीना अन्वश्चितानि तदनुगतानि जीविता जीवितानि जीवनहेतूनि कर्माणि मानुषेभ्यः ददासि तस्मात् त्वामेव स्तुम इति वाक्यशेषः ॥ ५४ ॥

वामदेवदृष्टा जगती सावित्रग्रहस्य पुरोरुक् । हे सवितः ! हि निश्चितं प्रथममुदयसमये यज्ञियेभ्यः यज्ञार्हेभ्यो देवेभ्यः त्वमुत्तमं भागमग्निहोमरूपं सुवसि प्रेरयसि षू प्रेरणे तुदादिः अभ्यनुजानासीत्यर्थः । कीदृशं भागममृतत्वममृतप्रदमित्यर्थः कार्य्यकारणयोरभेदेन निर्देशः । आत् इत् अनन्तरमेव उदयानन्तरम् ददाति प्रकाशमिति दामा रश्मिसमूहः तं व्यूर्णुषे विवृणोषि विस्ता-

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । देवेभ्यो हि । हे सवितः हि यस्मात् यज्ञियेभ्यः यज्ञहेतुभ्यः देवेभ्यः त्वं प्रथमम् उदयसमये अमृतत्वं सुवसि अभ्यनुजानासि उत्तमं भागं च सुवसि आत इत् अनन्तरमेव दामानम् उत्पत्तिस्थितिलयानां दातारं स्वकीयरश्मिसमूहं व्यूर्णुषे विवृणोषि विस्तारयसि अनूचीना अनूचीनानि अन्वाश्रितानि तदनुगतानि जीविता जीवितानि जीवितहेतूनि कर्माणि मानुषेभ्यो ददासि तस्मात् त्वामेव स्तुम इति वाक्यशेषः ॥ ५४ ॥

रयसि। ततो मानुषेभ्यः ( जीविता ) जीवितानि जीवनहेतूनि कर्माणि व्यूर्णुषे सूर्य्योदयानन्तरमेव प्राणिनां कर्मसु प्रवृत्तेः। कीदृशानि जीवितानि ( अनूचीना ) अनूचीनानि अन्वञ्चन्ति तान्यनूचीनानि रश्मिसमूहानुगतानि तमसि तदभावात्। लौकिकवैदिकव्यवहारप्रवर्त्तयिता त्वमेवेत्यर्थः॥ इति वैश्वदेवस्तुच्चतुर्थमहः। समाप्तोऽयं सर्वमेधः॥ ५४॥

**प्र वायुमच्छा बृहती मनीषा बृहद्रयिं विश्ववारꣳ रथप्राम्। द्युतद्यामा नियुतः पत्यमानः कविः कविमियक्षसि प्रयज्यो॥ ५५॥**

(१)समाप्तं सार्वमेधिकं कर्म। इदानीं त्रयोऽनुवाकाः पुरोरुचामनारभ्याधीताः व्याख्येयाः। आदित्यस्य वा याज्ञवल्क्यस्य वा आर्षमापितृमेधात्। प्रवायुम् त्रिष्टुप्। चतुर्थः पूर्वं व्याख्यायते वाक्यवशात्। हे प्रयज्यो प्रकर्षेण यजनशील अध्वर्यो यस्त्वं कविः क्रान्तदर्शनः वायुम् अच्छ आभिमुख्येन प्र इयक्षसि प्रकर्षेण यष्टुमिच्छासि। यजतेरेतद्रूपम् बृहती मनीषा बृहत्या मनीषया। किम्भूतं वायुम्। बृहद्रयिम् महाधनम्।

---

(१) अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। समाप्तं सार्वमेधिकं कर्म इदानीं त्रयोऽनुवाकाः पुरोरुचामनारभ्याधीताः व्याख्येयाः आदित्यस्य याज्ञवल्क्यस्य वा आर्षमापितृमेधात् प्रवायुं चतुर्थः पादो व्याख्यायते त्रिष्टुप् हे प्रयज्योः प्रकर्षेण यज्ञशील अध्वर्यो यः त्वं कविः क्रान्तदर्शनः वायुं प्र प्रकर्षेण इयक्षसि यष्टुमिच्छसि यजतेरेतद्रूपं कथम् अच्छाभिमुखो न बृहती मनीषा बृहत्या मनस इच्छया किं वायुं बृहद्रयिं महाधनं विश्ववारं विश्वेन व्रियते इति सर्वस्य वरणीयं रथप्रां रथपूरणं पितृशत्रुधनैरसौ रथं पूरयति द्युतद्यामा द्योतते इति द्युतत् याम यमनं नियनं यस्य स द्युतद्यामा द्युतद्यामानमिति विभक्तिव्यत्ययः कविं विज्ञानिनम्॥ ५५॥

विश्ववारं सर्वस्य वरणीयम् रथप्रां रथपूरणम् शत्रुधनैरसौ रथं पूरयति । द्युतद्यामा द्योतनं यमनं यस्य स तथोक्तः । द्युतद्यामानमिति विभक्तिव्यत्ययः वायुविशेषणत्वात् । नियुतः पत्यमानः अत्रापि पत्यमानमिति पदयोर्विकारो वाक्यवशात् नियुद्भिरश्वैरुत्पतन्तम् कविं क्रान्तदर्शनम् ॥ ५५ ॥

अथ पञ्चदशपञ्चदशत्रयोदशर्चास्त्रयोऽनुवाकाः पुरोरुचोऽनारभ्याधीताः श्रौतकर्मण्यविनियुक्ताः ब्रह्मयज्ञार्हा आदित्ययाज्ञवल्क्यदृष्टाः पितृमेधपर्यन्तम् ॥ ऋजिश्वदृष्टा त्रिष्टुप् वायुदेवत्या । प्रकर्षेण यजति प्रयज्युः हे प्रयज्यो अध्वर्यो ! बृहती मनीषा महत्या बुद्ध्या कृत्वा अच्छ आभिमुख्येन त्वं वायुं प्रइयक्षसि प्रकर्षेण यष्टुमिच्छसि । कीदृशः त्वम् कविः ज्ञानी । कीदृशं वायुं बृहद्रयिम् बृहन् रयिर्यस्य तम् महाधनम् । विश्ववारम् विश्वेन व्रियते तम् सर्वस्य वरणीयम् विश्वं वृणोतीति वा सर्वव्यापकम् । रथप्राम् रथं प्राति पूरयति रथप्राः तम् यजमानाय दातुं धनैः रथं पूरयति । द्युतद्यामा व्यत्ययः द्युतद्यामानम् द्युतत् दीप्यमानं याम यमनं नियमनं यस्य तम् । नियुतः पत्यमानः उभयत्र विभक्तिव्यत्ययः नियुद्भिरश्वैः पत्यमानं गच्छन्तम् । कविं क्रान्तदर्शनम् । ईदृशं वायुं यजेत्यर्थः ॥५५॥

इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒राग॑तम् । इन्द्र॑वो वामु॒शन्ति॒ हि । उ॒प॒या॒मगृ॑हीतोऽसि वा॒यवे॑ इन्द्र॒वायु॒भ्यां त्वा । ए॒ष ते॒ योनि॑ः । स॒जोषो॑भ्यां त्वा॥५६॥

(१) इन्द्रवायू इमे व्याख्यातम् ॥ ५६ ॥

व्याख्याता ( ७, ८ ) ॥ ५६ ॥

मि॒त्रꣳ हु॑वे पू॒तद॑क्षं॒ वरु॑णं च रि॒शाद॑सम् । धियं॑ घृ॒ताची॒ꣳ साध॑न्ता ॥ ५७ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । इन्द्रवायू इमे व्याख्याते ॥ ५६ ॥

(१) मित्रꣳहुवे । द्वे गायत्र्यौ मित्रमाह्वयामि पूतदक्षम् पूतस्य शुद्धस्य प्राणिन उद्धरणे दक्षं सोमम् । वरुणश्च रिशादसम् हिंसकादिविनाशने शक्तिङ्कुर्वाणम् हुवे । कीदृशो । धियं कर्मघृताचीम् येन कर्मणा धृतमच्यते हूयते तत्कर्म साधन्ता साधयन्तौ । नहि देवतामन्तरेण कर्मसिद्धिः ॥ ५७ ॥

द्वे मधुच्छन्दोदृष्टे गायत्र्यौ आद्या लिङ्गोक्तदेवत्या । मित्रं वरुणं चाहं हुवे आह्वयामि । कीदृशं पूतदक्षम् पूतं पवित्रं सदाचारं दक्षयति धनपुत्रादिभिर्वर्धयति पूतदक्षस्तम् दक्ष कम्पृद्ध्योरित्यस्माणिजन्तात् कर्मण्यण् । रिशादसम् रिशन्ति हिंसन्ति रिशा दुष्टाः तान् समन्ताद्दसति नाशयति रिशादसः तम् रिश हिंसायाम् दस उपक्षये । द्वयोर्विशेषणे । कीदृशावुभौ धियं कर्म साधन्ता साधयन्तौ । कीदृशीं धियं घृताचीम् घृतमच्यते हूयते यत्र तम् ॥ ५७ ॥

दस्रा॑ यु॒वाक॑वः सु॒ता नास॑त्या वृ॒क्तब॑र्हिषः । आया॑तꣳ रुद्रवर्तनी ॥ तं प्रत्नथा । अ यं वे नः ॥ ५८ ॥

(२) दस्रा युवाकवः । द्वयोराश्विनोरेकस्य दस्र इति

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । मित्रꣳहुवे द्वे गायत्र्यौ मित्रं वरुणं च हुवे आह्वयामि कीदृशं पूतदक्षं पूतस्य शुद्धस्य प्राणिनः उद्धरणे दक्षं सोत्साहं रिशादशं रिशतिर्हिंसाकर्मा दसु उपक्षये रिशन्तं दस्यति रिशादाः तं कीदृशौ उभौ घृताचीं धियं कर्मसाधन्ता । येन कर्मणा घृतमच्यते हूयते तत्कर्मसाधयन्तौ नहि देवमन्तरेण कर्मसिद्धिः ॥५७॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । दस्रा युवाकवः द्वयोरश्विनोरेकस्य दस्र इति नाम अपरस्य नासत्य इति हे दस्रौ दर्शनीयौ हे नासत्यौ न असत्यौ सत्यावित्यर्थः युवाकवः युवां कामयमानाः अहमहमिकया मां पिबन्त मां पिबतामिति ईदृशाः सोमाः सुताः अभिषुताः वृक्तबर्हिषः प्रस्तीर्ण बर्हिषः अतो ब्रवीमि हे रुद्रवर्तनी युवाम् आया-

नाम अपरस्य नासत्य इति । तत्रायं विभक्त्यर्थे आकारो विरूपैकशेषे वर्तते । गुणो यङ्लुकोरिति च पणिनिर्दर्शयति । हे दस्रौ दर्शनीयौ हे नासत्यौ न असत्यौ सत्यावेव नभ्राण्नपादिति प्रकृतिभावः युवाकव युवाङ्कामयमानः अहमहमेकया मां पिबतं मां पिबतमिति सुता अभिषुताः वृक्तबर्हिषः प्रस्तीर्णबर्हिषः । यतः अतो ब्रवीमि आयातम् आगच्छतम् हे रुद्रवर्तनी । रुद्रस्येव वर्तनिर्ययोस्तौ तथोक्तौ रुद्रपन्थानौ । तम्प्रत्नथायं वेन इति प्रतीकोक्तौ ॥ ५८ ॥

आश्विनी द्वयोरश्विनोरेकस्य दस्र इति नामापरस्य नासत्य इति हे दस्रौ ! दर्शनीयौ ! हे ( नासत्या ) नासत्यौ न असत्यौ सत्यवादिनावित्यर्थः । युवामायातमागच्छतम् यतः सुताः अभिषुताः सोमा इति शेषः । कीदृशाः सोमाः ! युवाकवः युवां कामयन्ते ते युवाकवः मां पिबतमितीच्छन्तः यद्वा युवन्ति अग्नौ मिश्रीभवन्ति युवाकवः कटिकुषिभ्यां काकुरिति ( उणा० ३, ७६ ) बहुलग्रहणात् काकुप्रत्ययः । वृक्तबर्हिषः वृक्तं बर्हिर्यत्र ते । कीदृशौ युवां रुद्रवर्त्तनी रुद्रस्येव वर्त्तनिः पन्था ययोस्तौ रुद्रवद्गमनशीलौ ॥ तं प्रत्नथा ( ७, १२ ) अयं वेनः ( ७, १६ ) एते द्वे प्रतीकोक्ते ॥ ५८ ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्र्यक्कः । अग्रं नयत् सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥ ५९ ॥

(१) आग्रयणं गृह्णाति । विदद्यदि त्रिष्टुप् । इह वाक्प्र-

---

तम् आगच्छन्तं रुद्रस्येव वर्तनीः पन्था ययोस्तौ तं प्रत्नथा अयं वेनः प्रतीकोक्तौ ॥ ५८ ॥

(१) अत्र वारणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । विदद्यदि त्रिष्टुप् आग्रयणं गृह्णाति इह वाक् प्रकटीभवति सोच्यते सरमा त्रयीलक्षणा वाक् सा हि अभिषवे समानं रमते इति सरमा यदि विदन् जानीयात् तर्हि पाथः सोमल-

कटीभवेति सोच्यते विदत् जानीयात् यदि । सरमा वाक् त्र-यीलक्षणा। सा हि अभिषवे समानं रमते। रुग्णं चूर्णीकृतम् अद्रेः सोमाभिषवस्य कर्तुः। अद्रिभिश्च सोमोऽभिषूयते। महि महत् पाथः सोमलक्षमन्नम् पूर्व्यम् उपांश्वन्तर्यामैन्द्रवायवादिषु गृहीतम्। सध्र्यक् समानाश्चनम् सहस्य सध्रिः अश्चतेरुत्तरम्। कः कु-र्यात्। किञ्च अग्रन्नयत् यज्ञाग्रन्नयति सापाथः। सुपदी शोभ-नानि पदानि यस्या वाचः सा तथोक्ता। नहि पदानि प्रत्या-

क्षणमन्नम् एवंविधं कः कुर्यात् करोतेरूपं किम्भूतं पाथः अद्रेः सो-माभिषवकर्तुः अद्रिभिः रुग्णम् अद्रिभिः सोमोऽभिषूयते महि म हत् पूर्व्ये पूर्वे उपाश्वन्तर्यामेन्द्रवायवादिषु गृहीतं सध्र्यक्-समानाश्चनम् सहस्य सध्रिः अञ्चतेः क्विप् किञ्च अग्रं नयत् सापाथः यज्ञाग्रं नयति सुपदी शोभनानि पदानि यस्याः वाचः सा नहि पदानि प्रत्याख्याय वाक्यं स्यात् अक्षराणामकारादीनां रवं शब्दं जानती प्रथमा अच्छ आभिगात् गच्छति। एवमाधियज्ञ-मयं मन्त्रो व्याख्यायते बह्वृचानां तु संवादसूक्तं तत्र देवशुनी-न्द्रेण प्रहिता गोधने पणिभिरसुरैर्हृते तदभिप्रायेण व्याख्यायते विदन् यदि यदि यदा सरमा शुनीन्द्रेण गवान्वेषणार्थं प्रेषिता अद्रेः रुग्णं भग्नं द्वारं विदन् अलभत तदानीमिन्द्रः महि महत् पूर्व्ये पूर्वे प्रेषणकाले अन्नादिनीं ते प्रजां करिष्यामीति प्रतिज्ञा-तं सध्र्यक् इतरैरपि भोज्यं सध्रीचीनं पाथो गव्यादिलक्षणमन्नं कः अकार्षीत् तस्मै दत्तवान् ततः सुपदी शोभनपादयुक्ता सा सरमा अक्षराणां क्षयरहितानां गवामग्रं प्रान्तं नयत् प्राप्नोत् कुत इत्यत आह यतो रवं गवां हम्भारवं प्रथमा प्रथमं जानती सती अच्छ आभिमुख्येन गात् जगाम विदत् विदॢ लाभे इत्यस्य लुङि पुषा-दीत्यादिना च्लेरङादेशः अडागमाभावस्त्वार्षः। सरमा सुगतौ औ-दिकौमप्रत्ययः सरतीति सरमा सरमा सरणिरिति यास्कः रुग्णं रुजो भङ्गे इत्यस्य निष्ठायाम् ओदितश्चेति नत्वं पाथः पा रक्षणे अन्ने वेत्यसुप्रत्ययः सुडागमः पातीति पाथः कः करोतेः अङि रू-पम् सुपदी पादोऽन्यतरस्यामिति ङीप्॥ ५९॥

ख्याय वाक्यं स्यात् । अक्षराणामकारादीनां रवं शब्दं जानती प्रथमा अच्छ आभिमुख्येन अगात् । गच्छति एवमधियज्ञं मन्त्रो व्याख्यायते । बह्वृचान्तु संवादसूक्तम् । तत्र सरमा देवशुनी इन्द्रेण प्रेषितान्वेषणार्थम् गोधने पणिभिरसुरैर्हृते तदभिप्रायेण व्याख्यायते । तत्रासुराणां पर्य्यालोचनवाक्यम् । विदद्यादि विदत् अलभत् यदा सरमा देवशुनी । रुग्णं भग्नं गवां संबन्धिभिः खुरैः । अद्रेः पर्वतस्य द्वारम् । अथानन्तरं महि महत् गोलक्षणं पाथः अन्नम् । पूर्व्यम् पूर्वेषु कालेषु अपहृतम् । सध्र्यक् देवान् प्रति सहाञ्चनम् कः करोतेः रूपं करिष्यति । अग्रम् गवामग्रमवस्थाय नयत् नेष्यति । सुपदी शोभनपादयुक्ता पदेन यान्वेषयति नष्टं सैवमुच्यते । अक्षराणामस्मदीयवाक्यसंबन्धिनाम् अच्छ अभिरवमुच्चारणम् प्रथमा जानती अगात् आगमिष्यति ॥ ५९ ॥

कुशिकदृष्टा त्रिष्टुप् इन्द्रदेवत्या । सह रमन्ते देवा विप्रा वा यस्यां सा सरमा वाक् । प्रथमा आद्या सरमा त्रयीलक्षणा वाक् अच्छ यज्ञाभिमुखं गात् आगच्छति यज्ञं प्रतिपादयतीत्यर्थः । कीदृशी सरमा सुपदी शोभनानि पदानि सुप्तिङन्तानि यस्यां सा । अक्षराणामकारादीनां रवं शब्दं जानती ज्ञापयन्ती अन्तर्भूतणिजर्थः । तां सरमां यदि चेत् विदत् जनीयात् अध्वर्युः तर्हि पाथः सोमलक्षणमन्नं कः कुर्य्यात् ! वेदानभिज्ञस्य सोमकण्डनानधिकारात् । कीदृशं पाथः अद्रेः रुग्णम् विभक्तिव्यत्ययः आद्रिणा सोमाभिषवग्राव्णा रुग्णमाभिषुतम् । महि महत् । पूर्व्यं पूर्वगृहीतमुपांश्वन्तर्यामैन्द्रवायवादिपात्रेषु । सध्र्यक् सहाञ्चति सहस्य सध्रिः सहैव हवनाय गच्छत् । अग्रं नयत् अग्रं मुख्यत्वं यजमानं प्रापयत् यज्ञेन यजमानो मुख्यो भवति ॥ एवमधियज्ञं मन्त्रो व्याख्यातः । बह्वृचानां तु संवादसूक्तमिदम् । तत्र पणिभिरसुरैर्देवगोधनेऽपहृते इन्द्रेण देवशुनी तद्वीत्यै प्रेरिता तदभिप्रायेण व्याख्यातं । सरमा देवशुनी इन्द्रेण गवान्वेषणाय प्रहिता सती यदि यदा अद्रेः गिरेः रुग्णं भग्नम्

द्वारम विदत् अविदत् अलभत तदा इन्द्रः पाथः हविरन्नं कः अकार्षीत् तस्यै दत्तवान् । ततः सुपदी शोभनपादयुक्ता सा सरमा अक्षराणां क्षरणेन नाशेन रहितानामनुपद्रुतानां गवाम् अग्रं प्रान्तं नयत् अनयत् प्राप्नोत् । प्रथमा प्रथमं रवं गवां हम्भारवं जानती सती अच्छ गवामभिमुखं गात् अगात् जगाम । कीदृशं पाथः ? महि महत् । पूर्व्यं पूर्वं प्रेषणकाले अन्नादिनीं ते प्रजां करिष्यामीति प्रतिज्ञातम् । सध्र्यक् सध्रीचीनमितरैरपि सह भोज्यम् ॥ विदत् विद्लृ लाभे पुषादीत्यादिना ( पा० ३, १, ५५ ) च्लेरङादेशः अडभाव आर्षः । सरमा सृ गतौ औणादिकोऽमप्रत्ययः सरमा सरणिरिति यास्कः । रुग्णम् रुजो भङ्गे निष्ठायामोदितश्चेति (पा० ८,२,४५) नत्वम् । पाथः पातीति पा रक्षणे अन्नम् असुन्प्रत्ययस्य थुडागमः । कः करोतेर्लुङि मन्त्रे घसह्वरेत्यादिना ( पा० २, ४, ८० ) च्लेर्लोपे रूपम् । सुपदी पादोऽन्यतरस्यामिति ( पा० ४, १, १, ८ ) ङीप् । गात् इणो गा लुङि ॥ ५९ ॥

नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात् पुरएतारमग्नेः । एमेनमवृधन्नमृता अमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः ॥ ६० ॥

(१)नहि स्पशम् । तिष्टुप् । नहिशब्दः प्रतिषेधवचनः स्पशम् स्पशः प्रणिधिरुच्यते । अविदन् अन्यम् अस्मात् वैश्वानराद‌ग्नेः । पुर एतारम् सर्वेषु कार्येषु अग्रगन्तारञ्च नहि अविदन् ।

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । नहि स्पशम् । त्रिष्टुप् नहिशब्दः प्रतिषेधवचनः स्पशः प्रणिधिरुच्यते देवाः अस्मात् वैश्वानरात् अग्नेः अन्यं स्पशं सर्वकार्येषु पुरः एतारं गन्तारं च नहि अविदन् आ ईम् निपातौ अथ शब्दार्थे अथ एनं वैश्वानरम् अमृताः देवाः अवृधन् वर्द्धितवन्तः किमर्थं क्षेत्रजित्याय क्षेत्रजयाय यजमानक्षेत्रजयनिमित्तं किम्भूतम् अमर्त्यम् अमरणधर्माणम् ॥ ६० ॥

आ ईम् द्वौ निपातौ अथशब्दस्यार्थे वर्तेते अथ एनं वैश्वानरम् अवृधन् वर्द्धितवन्तः अमृता अमरणधर्माणो देवाः अमर्त्यम् अमरणधर्माणं वैश्वानरम् । क्षैत्रजित्याय यजमानस्य देवयजनक्षेत्रजयनिमित्तम् ॥ ६० ॥

विश्वामित्रदृष्टा त्रिष्टुब्वैश्वानरी । देवाः वैश्वानरात् विश्वेभ्यो हितात् अग्नेः अन्यं स्पशं दूतं पुर एतारं सर्वकार्य्येषु पुरःसरं च नहि अविदन् नालभन्त नहिशब्दो निषेधवाची । स्पशः प्रणिधिरुच्यते । पुर एति गच्छति पुर एता तम् । आ ईम् । निपातौ अथार्थौ अथामृता देवाः एनं वैश्वानरमवृधन् अवर्द्धयन् । कीदृशमाग्निम् अमर्त्यममरणधर्माणम् । किमर्थमवृधन् ? क्षैत्रजित्याय क्षेत्रमेव क्षैत्रं तस्य जित्यं जयस्तस्मै यजमानस्य क्षेत्राप्त्यै ॥ ६० ॥

उग्रा विघनिना मृधं इन्द्राग्नी हवामहे । ता नो मृडात ईदृशे ॥ ६१ ॥

(१)उग्रा विघनिना । द्वे गायत्र्यौ उग्रा उग्रौ उद्गूर्णौ । विघनिना हन्तेर्घत्वम् विहन्तारौ मृधः संग्रामस्य संग्रामकारिणां वा । इन्द्राग्नी हवामहे आह्वयामः । तौ च आहूतौ नः अस्मान् मृडातः मृडयतः सुखयतः ईदृशे कर्मणि ॥ ६१ ॥

भरद्वाजदृष्टा ऐन्द्राग्नी गायत्री । वयमिन्द्राग्नी हवामहे आह्वयामः । कीदृशाविन्द्राग्नी ? उग्रौ उद्गूर्णबलौ । मृधो हिंसकान् विघनिनौ विशेषेण हन्तो नाशयतस्तौ विघनिनौ हन्तेर्घः । ता तौ आहूतौ इन्द्राग्नी नोऽस्मान् ईदृशे भयानके संग्रामे कर्मणि वा मृडातः मृडयतः सुखयतः ॥ ६१ ॥

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । उग्रा विघनिना द्वे गायत्र्यौ वयम् इन्द्राग्नी हवामहे किम्भूतौ उग्रा उद्गूर्णौ मृधः संग्रामस्य संग्रामकारिणां वा विघनिना विहनिनौ हन्तेर्घत्वं हन्तारौ ता तौ आहूतौ ईदृशे कर्मणि नोऽस्मान् मृडातः मृडयतः सुखयतः ॥ ६१ ॥

उपा॑स्मै गायता नरः॒ पव॑माना॒येन्द॑वे । अ॒भि दे॒-
वाँ२॥ इय॑क्षते ॥ ६२ ॥

(१)उपास्मै । उपगायत हे नरः ऋत्विजः अस्मै पवमानाय।
दशापवित्रा द्रोणकलशम्प्रतिगच्छते । इन्दवे सोमाय अभि इ
यक्षते यष्टुमिच्छते सनि यकारलोपः । देवान् ॥ ६२ ॥

देवलदृष्टा सोमदेवत्या गायत्री । हे नरो ! यज्ञनेतारः ऋत्विजः !
अस्मै इन्दवे सोमाय उपगायत उद्गातृशास्त्रमनुसृत्योपशब्दयत
स्तोत्राणि कुरुतेत्यर्थः । कीदृशायेन्दवे ! पवमानाय पव गतौ पवते
दशापवित्राद्द्रोणकलशं गच्छति पवमानस्तस्मै । देवान् यष्टव्या
नभि संमुखमियक्षते यष्टुमिच्छते यजेः सनि छान्दसोऽभ्यासय-
कारलोपः ॥ ६२ ॥

ये त्वा॑हिह॒त्ये म॑घव॒न्नव॑र्धन्ये शा॑म्बरे ह॑रिवो॒ ये
गवि॑ष्टौ । ये त्वा॑ नू॒नम॑नु॒ मद॑न्ति॒ विप्राः॒ पिबे॑न्द्र॒ सोम॒ᳶ
सग॑णो म॒रुद्भिः॑ ॥ ६३ ॥

(२)ये त्वा।द्वे त्रिष्टुभौ ये मरुतः त्वाम् अहिहत्ये अहिर-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०
नास्ति तद्यथा । उपास्मै । हे नरः ऋत्विजः अस्मै इन्दवे सोमाय
उपगायत । किम्भूताय पवमानाय दशापवित्रात् द्रोणकलशं गच्छ-
ते देवान् अभि इयक्षते सनि यकारलोपः यष्टुमिच्छते ॥ ६२ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०
नास्ति तद्यथा । ये त्वा द्वे त्रिष्टुभौ । हे मघवन् ये मरुतः त्वा
त्वाम् अहिहत्ये अहिरसुरः अहिबधे कर्तव्ये अवर्द्धन् वर्द्धितवन्तः ।
हे हरिवः हरिवन् ये च शाम्बरे बधे कर्तव्ये त्वामवर्द्धन् गविष्टौ
गवामपामेषणायोपस्थितं त्वामवर्द्धन् । ये च विप्रा मेधाविनः म-
रुतः नूनं निश्चयेन त्वामनुमदन्ति उत्कर्षयन्ति वा । हे इन्द्र सगणः
समानगणः त्वं तैर्मरुद्भिः सोमं पिब ॥ ६३ ॥

सुरः । अहिवधे कर्त्तव्ये हे मघवन् अवर्द्धन्वार्द्धितवन्तः । ये च शाम्बरे बधे कर्तव्ये हे हरिवन् । ये च गविष्टौ गवामपामेषणायोपस्थितं सन्तं त्वामवर्द्धन् । ये च त्वा त्वाम् नूनं निश्चयेन अनुमदन्ति उत्कर्षयन्ति तर्प्पयन्ति वा । विप्रा मेधाविनः ।पिब हे इन्द्र सोमं सगणः समानगणः तैः मरुद्भिः ॥ ६३ ॥

विश्वामित्रदृष्टाद्या द्वे त्रिष्टुभौ इन्द्रदेवत्यास्तिस्रः । हे मघवन् ! धनवन् ! ये मरुतो गणदेवाः अहिहत्ये वृत्रहननरूपे कर्मणि त्वा त्वामवर्धन् जहि वीरयस्वेत्यादिवचोभिस्ते वृद्धिमकुर्वन् । हे हरिवः ! हरिनामकाश्वयुक्त ! शाम्बरे शम्बरसम्बन्धिनि युद्धे ये च मरुतो गविष्टौ गवां पण्यसुरहृतानामिष्टौ प्रत्याहरणेच्छायां ये त्वामवर्धयन् । ये च विप्राः मेधाविनो मरुतो नूनं निश्चितं त्वामनु मदन्ति उत्कर्षयन्ति तर्पयन्ति वा । हे इन्द्र तैर्मरुद्भिः सगणः गणसहितः सन् सोमं पिब मरुत्वतीयादिग्रहं पिबातृप्तेः ॥ अहिहत्ये हन्तेर्भावे हनस्त चेति ( पा० ३, १, १०८ ) क्यप् कृदुत्तरपदसमासः । अवर्धन् झेः सार्वधातुकत्वेऽपि छन्दस्युभयथेति ( पा० ३, ४, ११७ ) आर्धधातुकत्वे णिलोपः यद्वृत्तयोगान्निघाताभावः ( पा० ८, १, ६६ ) । गवामिष्टिर्यस्मिन् रणे इति बहुव्रीहौ प्रकृत्या पूर्वपदमिति ( पा० ६,-२, १ ) पूर्वपदस्वरः । अनुमदन्ति झेर्लसार्वधातुकानुदात्तत्वे धातुस्वरः तिङि चोदात्तवतीति ( पा० ८, १, ७१ ) गतेर्निघातः ॥ ६३ ॥

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः । अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्धनिष्ठा ॥ ६४ ॥

(१)जनिष्ठा उग्रः । जातः उग्रः उद्गूर्णः । सहसे बलाय

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । जनिष्ठा उद्गूर्णः । इन्द्रः तुराय त्वरमाणाय सहसे बलाय जनिष्ठाः उत्पन्नः जनेर्लुङि मध्यमैकवचनं पुरुषव्यत्ययः बहुलं

तुराय त्वरणाय । वचनविशेषणम् । मन्द्रः मन्दनीयः ओजिष्ठः अतिशयेन ओजसा युक्तः । बहुलाभिमानः अचिन्त्याभिमानः बहुप्रकाराभिमानो वा । अभिमानः ज्ञानम् यत् तस्मात् । अवर्द्धन् अवर्द्धयन् इन्द्रं मरुतश्चित् मरुतोऽपि अत्र परमपदे स्थितम् । माता अदितिः यत् यस्मात् वीरश्च । दधनन् दधातेरेतद्रूपम् नकार उपजनः धारितवती । धनिष्ठा अतिशयेन धन्या धनवती तस्माच्च मरुतः अवर्द्धन्निति संबन्धः॥६४॥

गौरीवितिदृष्टा । हे इन्द्र ! त्वं सहसे बलाय जनिष्ठा अजनिष्ठाः जातोऽसि लुङ् अडभावः । कीदृशाय सहसे ! तुराय त्वरमाणाय वेगवते । कीदृशः त्वम् । उग्रः उत्कृष्टः । मन्द्रः स्तुत्यः ओजिष्ठः अत्यन्तमोजस्वी ओजिष्ठः विन्मतोर्लुगिति ( पा० ५, ३, ६५ ) विनो लुक् बहुलाभिमानः सर्वं जगन्मद्विभूतिरिति भूयिष्ठाभिमानः । अत्र वृत्रवधे ईदृशमिन्द्रं मरुतश्चित् मरुतोऽपि अवर्धन् स्तुतिसहायाभ्यामिति शेषः । इदं चेन्द्रसौभाग्यं गर्भकालीनमित्याह यत् यस्मात् मातादितिः धनिष्ठान्या वीरमिन्द्रं दधनत् गर्भे धारितवती नकार उपजनः ॥ ६४ ॥

**आ तू नं इन्द्र वृत्रहन्नस्माकमर्धमागंहि महान् महीभिंरू तिभिः ॥ ६५ ॥**

(१)आ तू नः। आ तू नः इति त्रयो निपाताः छन्दःपरि-

---

छन्दस्यमाङ्योगे ऽपीति अडागमाभावः । बहुलाभिमानः बहुलः अभिमानः अभिमननं ज्ञानं यस्य सः जातं सन्तम् अत्र परमपदे- स्थितं इन्द्रं मरुतः तमिन्द्रं मरुतः चित् मरुतोऽपि अवर्द्धन् अवर्द्धयन् माता अदितिः यत् यस्मात् वीरमिन्द्रं दधत् विन्मतोलुगिति विनेर्लुग् धारितवती दधातेरेतद्रूपं नकार उपजनः धनिष्ठा अतिशयेन- धन्वा धनवती च तस्मान्मरुतो वर्द्धन् ॥ ६४ ॥

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । आ तूनः। गायत्री आ तू नः इति त्रयो निपाताः कर्म-

पूर्तिकराः । हे इन्द्र हे वृत्रहन् वृत्रस्य हन्तः । अस्माकमर्द्धम् अस्मदीयं पक्षम् आगहि आगच्छ । एत्य च अस्मान् पालयेति शेषः । महान् सन् महीभिर्महतीभिः ऊतिभिरवनैः पालनैः॥६५॥

वामदेवदृष्टा गायत्री । तु इति निपातः क्षिप्रवचनः ऋचि तुनुघे-त्यादिना ( पा० ६, ३, १३३ ) तस्य संहितायां दीर्घः । वृत्राणामाव-रकाणां पाप्मनां हन्ता वृत्रहा हे वृत्रहन् ! हे इन्द्र ! त्वं नोऽस्मान् प्रति तु क्षिप्रम् आ आगच्छेत्यर्थः आगत्य चास्माकमर्धमस्मन्निवा-सदेशमागहि देवयजनदेशं प्राप्नुहीत्यर्थः कीदृशस्त्वम् ! महीभिः महतीभिः ऊतिभिः अवनैः रक्षाभिः महान् योऽन्यं रक्षति स महानु-च्यते ॥ ६५ ॥

त्वमि॑न्द्र प्र॒तूर्ति॑ष्व॒भि विश्वा॑ असि॒ स्पृधः॑ । अ॒श॒स्ति॒हा ज॑नि॒ता वि॑श्व॒तूर॑सि॒ त्वं तू॑र्य तरुष्य॒तः ॥६६॥

(१) त्वमिन्द्र । बृहती । त्वमेव हे इन्द्र । प्रतूर्तिषु प्रतरणेषु शत्रुषु निमित्तभूतेषु । अभिविश्वा असि । अभ्यसि अभिभवासि विश्वाः सर्वाः स्पृधः संग्रामान् किञ्च अशस्तिहा अभेरादि-शेषः । अभिशस्तिहा । जनयिता च सुखानाम् । विश्वतूः स-र्वतूरणश्चासि अतो ब्रवीमि । त्वमेव तूर्य्य जहि मारय । तरुष्य-तः हनिष्यतः शत्रून् ॥ ६६ ॥

---

पूर्त्तिकराः हे इन्द्र हे वृत्रहन् अस्माकमर्द्धं पक्षम् आगहि आगच्छ महान् सन् महीभिः महतीभिः ऊतिभिः अवनैः अस्मान् पालयेति शेषः ॥ ६५ ॥

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । त्वमिन्द्र । बृहती । इन्द्र त्वं प्रतूर्त्तिषु प्रतरणेषु शत्रुषु निमित्तभूतेषु विश्वाः सर्वाः स्पृधः संग्रामान् अभि असि अभिभवासि किञ्च अशस्तिहा असि अभेरादिलोपः अभिशस्तिहा जनिता जन-यिता सुखानां विश्वतूः सर्वतरणश्चासि अतो ब्रवीमि त्वमेव तरु-ष्यतः शत्रून् तूर्य जहि मारय ॥ ६६ ॥

नृमेधदृष्टे द्वे ऐन्द्रयौ पथ्याबृहतीसतोबृहत्यौ। प्रकृष्टा तूर्तिर्हिंसा येषां यत्र वा ते प्रतूर्तयः शत्रवः संग्रामा वा तेषु प्रतूर्तिषु हे इन्द्र! त्वं विश्वाः सर्वाः स्पृधः स्पर्धमाना शत्रुसेनाः अभि असि अभिभवसि। किञ्च यतः त्वं विश्वतूरसि विश्वान् सर्वान् रिपून् तूर्यते हिनस्ति विश्वतूः ततः तरुष्यतः हनिष्यतः शत्रून् तूर्य जहि मारय। कीदृशस्त्वम्? अशस्तिहा नास्ति शंसा प्रशस्तिर्येषां ते अशस्तयः दुष्टास्तान् हन्तीत्यशस्तिहा। जनिता जनयिता स्वपक्षप्रशंसोत्पादकः॥ ६६॥

**अनु॑ ते॒ शुष्मं॑ तु॒रय॑न्तमीयतुः॒क्षोणी॒ शिशुं॒ न मा॒तरा॑। विश्वा॑स्ते॒ स्पृधः॑ श्नथयन्त म॒न्यवे॑ वृ॒त्रं यदि॑न्द्र॒ तूर्व॑सि॥ ६७॥**

(१) अनुते। सतोबृहती। चतुर्थः पादः प्रथमं व्याख्यायते यच्छब्दयोगात्। हे इन्द्र यत् यस्मात्कारणात् वृत्रमसुरं तूर्वसि। तुर्वतिर्हिंसाकर्मा हंसि। अतः कारणात्। अनुते शुष्मं तुरयन्तमीयतुः। अन्वीयतुः अनुजग्मतुः अनुगतवत्यौ त्वामेव। ते तव शुष्मं बलम् किंकुर्वाणम् तुरयन्तम् तूर्णं गच्छन्तम् क्षोणी क्षोण्यौ द्यावपृथिव्यौ। शिशुं न शिशुमिव पुत्रमिव। मातरा मातृपितरौ विरूपैकशेषः। किं च विश्वाः सर्वाः स्पृधः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा। अनुते। सतोबृहती चतुर्थः पादो व्याख्यायते हे इन्द्र यत् यस्मात् त्वं क्षत्रं तूर्वसि हंसि तूर्वतिर्वधकर्मा अतः कारणात् क्षोणी क्षोण्यौ द्यावापृथिव्यौ ते तव शुष्मं बलमन्वीयतुः। अनुजग्मतुः अनुगतवत्यौ किम्भूतं शुष्मं तुरयन्तं तूर्णं गच्छन्तं शिशुं न मातरा मातापितरौ शिशुं पुत्रमिव अन्वितः विश्वाः सर्वाः स्पृधः संग्रामाः ते तव मन्यवे मन्योः भयात् स्वयमेव श्नथयन्त लङ् अडभावः श्नथयन्ते विशीर्यन्ते यो हि वृत्रं हन्ति द्यावापृथिव्यौ यस्य बलमन्वीयतुः। तेन सर्वं हतमिति॥ ६७॥

संग्रामाः ते वत मन्यवे मन्योःभयात् श्रथयन्ति विशीर्यन्ति । यो हि वृत्रं हन्ति यस्य च द्यावापृथिव्यौ बलमीयतुः ॥ ६७ ॥

हे इन्द्र ! क्षोणी द्यावापृथिव्यौ ते तव शुष्मं बलमन्वीयतुः अनुगच्छतः द्यावापृथिवीस्था लोकास्त्वद्बलं बहु मन्यन्ते इति भावः । कीदृशं शुष्मम् ? तुरयन्तं शत्रुषु त्वरामाविष्कुर्वन्तम् । अनुगमने दृष्टान्तः मातरौ मातापितरौ शिशुं न शिशुमिव यथा पितरौ बालमनुगच्छतः यस्य बलाद् द्यावापृथिव्यावप्यबिभीतामिति ( निरु० १०, १० ) यास्कः । तदेव प्रपञ्चयति विश्वा इति विश्वाः सर्वाः स्पृधः स्पर्धमानाः शत्रुसेनाः ते तव मन्यवे पञ्चम्यर्थे चतुर्थी तव क्रोधात् श्रथयन्त अश्रथयन्त श्रथिताः खिन्ना भवन्ति तव क्रोधदर्शनादुद्विजन्त इत्यर्थः युक्तमेतत् यत् यस्मात् युद्धे इन्द्र ! त्वं वृत्रं देवासुराबध्यं तूर्वसि हंसि तूर्वतिर्हिंसार्थः ॥ ६७ ॥

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आवोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तरासत् । आदित्येभ्यस्त्वा ॥ ६८ ॥

(१) यज्ञो देवानामिति व्याख्यातम् ॥ ६८ ॥

कुत्सदृष्टा त्रिष्टुप् । व्याख्याता ( ८, ४ ) ॥ ६८ ॥

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परिपाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥ ६९ ॥

(२)अदब्धेभिः सवितः। जगती । हे सवितः अनुपहिंसितैः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । यज्ञो देवानाम् । व्याख्यातम् ॥ ६८ ॥

(२) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । अदब्धेभिः । जगती हे सवितः अदब्धेभिः अनुपहिंसितैः शिवेभिः शान्तैः पायुभिः पालनैः अद्य त्वं नोऽस्माकं गयं

पायुभिः पालनैः त्वं शिवेभिः शान्तैः अद्य परिपाहि परिपालय नोऽस्माकम् गयं गृहम् हिरण्यजिह्वः सत्यवाक् भूत्वा । सुविताय सुप्रसूताय कर्मणे नव्यसे नवतराय । भवेति वाक्यशेषः । रक्ष च सर्वथा । माकिः मा कश्चन नोऽस्माकम् अघशंसः अघं पापं यः शंसति स अघशंसः । ईशत इष्टा ईशिता भवतु ॥६९॥

भरद्वाजदृष्टा जगती सवितृदेवत्या । हे सवितः ! सर्वस्य प्रसवितः ! पायुभिः पालनैः नोऽस्माकं गयं गृहं धनं वा त्वमद्य परिपाहि रक्ष गयः कृदर इति गृहनामसु ( निघ० ३, ४, १ ) मीळ्हं गय इति ( निघ० २, १०, १२ ) धननामस्वपि पाठात् गृहधनयोर्गयशब्दः । कीदृशैः पायुभिः ? अदब्धेभिः अदब्धैरनुपहिंसितैः । शिवेभिः शान्तैः सुखरूपैः । कीदृशस्त्वम् ? हिरण्यजिह्वः हिरण्यवदविचला जिह्वा यस्य सत्यवाक् यद्वा हिरण्या हितरमणीया जिह्वा ज्वाला यस्येति वा हिरण्यं कस्मादित्यादि हितरमणीयं भवतीति वेति ( निघ० २, १३, १२ ) यास्कोक्तेः । किञ्च नव्यसे नवीयसे नवतराय सुविताय सु इताय सुखाय अस्मान् रक्ष पालय । किञ्च माकिः मा कश्चनाघशंसः पापमाशंसमानः शत्रुः नोऽस्माकमीशत ऐश्वर्य्यं कुर्य्यात् त्वत्प्रसादात् पाप्मास्माकमीशिता मा भूदित्यर्थः । ईशत लङ् बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुगभावः आडभावश्च ॥ ६९ ॥

प्र वी॒रया॒ शुच॑यो दद्रिरे वामध्व॒र्युभि॒र्मधु॑मन्तः सु॒तासः॑ । वह॑ वायो नि॒युतो॑ या॒ह्यच्छा॒ पिबा॑ सु॒तस्या॒न्धसो॒ मदा॑य ॥ ७० ॥

---

गृहं परिपाहि हिरण्यजिह्वः सत्यवाक् भूत्वा सुविताय प्रसूताय नव्यसे नवीयसे नव्यतराय कर्मणे भवेति शेषः रक्ष च मा किः मा कश्चन नोऽस्माकम् अघशंसः अघं पापं शंसतीति अघशंसी ईशत इष्टा लङ् बहुलं छन्दसीति शपो लुगभावः आडभावश्च ईशिता भवतु ॥ ६९ ॥

(१)प्रवीरया । अन्यः पुरोरुग्गणः । त्रिष्टुप् । प्रवीरया बहुवचनस्य स्थाने यादेशः । प्रकृष्टवीराः सोमाः शुचयः स्वभावादेव शुद्धाः । दद्रिरे दृ विदारणे । विदीर्णाः कणीभूताः । वां युवयोः संबन्धिनः । हे यजमानौ जायापती । कथं दद्रिरे इति चेत् । वाम् अध्वर्युभिः मधुमन्तः उदकवन्तः सुतासः अभिषुताः ग्रावभिः । एवमनेनार्द्धर्चेन यजमानौ संबोध्य अथेदानीं संबोधयति वायुम् । वह वायो नियुतः । वह प्रापय हे वायो नियुद्गणकानश्वान् । याहि च अच्छ सोममभि । सोमं वा प्राप्तुम् । पिब च सुतस्याभिषुतस्य अन्धसः सोमस्य । मदाय तृप्तये मदजननार्थं वा ॥ ७० ॥

वशिष्ठदृष्टा त्रिष्टुप् । वायुदेवत्याः पञ्चदश ऋचः द्वे प्रतीकोक्ते एवं सप्तदशकः पुरोरुचां समूहः । वामिति द्विवचनं पत्नीयजमानविषयम् । हे पत्नीयजमानौ ! वां युवयोः स्वभूताः सोमाः दद्रिरे विदीर्णाः चूर्णीभूताः दृ विदारणे कर्मकर्त्तरि लिट् । कीदृशाः ? प्रवीरया प्रकृष्टा वीरा ज्ञानोद्भवा ऋत्विजो येषां सोमानां ते प्रवीराः सुपां सुलुगिति ( पा० ७, १, ३९ ) जसो यादेशः । शुचयः निर्मलाः । अध्वर्युभिः सुतासः सुताः अभिषवधर्मेण ग्रावभिः द्रवीभावमापादिताः अभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यादिति ( का० ९, ५, १ ) कात्यायनस्मरणादध्वर्युभिरिति बहुवचनम् अध्वरनेतृभिर्ऋत्विग्विशेषैः सुता इत्यर्थः । मधुमन्तः मधु निग्राभ्यारूपमु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । प्रवीरया । अन्यः पुरोरुग्गणः त्रिष्टुप् । हे यजमान दम्पती वां युवयोः प्रवीरया प्रहृष्टवीराः प्रवीराः सोमाः जसो यादेशः शुचयः शुद्धाः मधुमन्तः उदकवन्तः अध्वर्युभिः सुतासः अभिषुताः सन्तः दद्रिरे स्वयमेव विदीर्णाः चूर्णीभूताः दृ विदारणे एवं यजमानौ सम्बोध्य वायुमाह । हे वायो नियुतः वह अश्वान् प्रापय अच्छ अभिसोमं याहि मदाय तृप्तये मदजननार्थं वा सुतस्याभिषुतस्यान्धसः सोमस्य पिब सोमं पिब ॥ ७० ॥

वक्रम् तद्वन्तः । एवं पूर्वार्धे पत्नीयजमानौ सम्बोध्य वायुमाह वाति सर्वत्र गच्छति वायुः हे वायो ! नियुतोऽश्वान् त्वं वह देवयजनदेशं प्रापय अच्छ याहि अच्छाभेरर्थे आप्तुमिति वा सोमाभिमुखं सोममाप्तुं वा याहीत्यर्थः । यात्वा च मदाय तृप्तये मत्तताये वा सुतस्याभिषुतस्यान्धसः सोमस्य स्वमंशं पिब ॥ ७० ॥

गाव उपावतावतं मही यज्ञस्य रप्सुदा उभा कर्णा हिरण्ययां ॥ ७१ ॥

(१) गाव उपेति व्याख्यातम् ॥ ७१ ॥

व्याख्याता ( ३३, १९ ) ॥ ७१ ॥

काव्ययोराजानेषु क्रत्वा दक्षस्य दुरोणे । रिशादसा सधस्थ आ ॥ ७२ ॥

(१) काव्ययोराजानेषु । गायत्री । काव्ययोः कवीनां हितयोः । आजानेषु आजन्मभूमिषु उत्पत्तिस्थानेषु । क्रत्वा कर्मणा अग्निष्टोमादिकया क्रियया । दक्षस्य उत्साहवतो यजमानस्य दुरोणे यज्ञगृहे । रिशादसा । रेसितव्यस्योपलक्षयितारौ । सधस्थ आ । सहस्थाने आगच्छन्तं हे मित्रावरुणाविति शेष ॥ ७२ ॥

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । गाव उपेति व्याख्यातम् ॥ ७१ ॥

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । काव्ययोराजानेषु गायत्री कवीनां हि तयोः भवतोरेव आजानेषु आजन्म भूमिषु उत्पत्तिस्थानेषु देवयजनादिषु क्रत्वा कर्मणा अग्निष्टोमादिक्रियया दक्षस्य उत्साहवतो यजमानस्य दुरोणे यज्ञगृहे रिशादसौ रेशितव्यस्योपक्षयितारौ सधस्थे सहस्थाने हे मित्रावरुणौ आगच्छतामिति शेषः ॥ ७२ ॥

दक्षदृष्टा गायत्री मैत्रावरुणी । कवीनां क्रान्तदर्शिनां ज्ञानसमुच्चयकारिणां हितौ काव्यौ तयोः । रिशन्ति हिंसन्ति रिशाः ताना समन्ताद्दस्यतो नाशयतः तौ रिशादौ द्विवचनं मित्रावरुणविषयम् । हे रिशादसौ शत्रूपक्षयितारौ मित्रावरुणौ ! यजमानस्य सधस्थे देवमनुष्याणां सहसोमपानस्थाने युवाम् आ आगच्छतम् । कीदृशस्य यजमानस्य ! काव्ययोः कविहितयोर्युवयोः आजानेषु आ समन्ताज्जन्मसु सोमपानार्थमाविर्भूतभूमिषु देवयजनादिषु दुरोणे यज्ञगृहे च क्रत्वा क्रतुना यज्ञकर्मणा कृत्वा दक्षस्य उत्साहवतः यज्ञं समर्धयत इत्यर्थः । दक्षस्येति विशेषणात् यजमानपदमध्याहर्तव्यम् आ इत्युपसर्गेण गच्छतमिति क्रियाध्याहारः ॥ ७२ ॥

दैव्यावध्वर्यू आगतꣳ रथेन सूर्यत्वचा । मध्वा यज्ञꣳ समञ्जाथे ॥ तं प्रत्नथा । अयं वेनः ॥ ७३ ॥

(१) दैव्यावध्वर्यू व्याख्यातम् तं प्रत्नथा अयं वेन इति द्वे प्रतीकोक्ते ॥ ७३ ॥

व्याख्याता ( ३३, ३३ ) । तं प्रत्नथा ( ७, १२ ) अयं वेनः ( ७, १६ ) इति द्वे प्रतीकोक्ते ॥ ७३ ॥

तिरश्चीनो विततो रश्मिरेषामधः स्विदासी३दुपरि स्विदासी३त् । रेतोधा आसन् महिमान आसन् स्वधा अवस्तात् प्रयतिः परस्तात् ॥ ७४ ॥

(२)तिरश्चीनो विततः । त्रिष्टुप् । आग्रयणेऽनया गृह्यते तद-

(१) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति तद्यथा । दैवावध्वर्यू । व्याख्यातं तं प्रत्नथा अयं वेनःप्रतीके॥७३॥

(२) अत्र वाराणसी० लि० पु० समतोऽयं पाठक्रम मुम्बई मु०पु० नास्ति तद्यथा । तिरश्चीनः त्रिष्टुप् । आग्रयणोऽनया गृह्यते तदभिप्रायेण प्रधार्यते प्रसारितः उद्गातृभिः तस्मिन् दशापवित्रे सोमः प्रक्षिप्तः दशापवित्रात् अधः स्वित् अधश्च आसीत् उपरि च आसीत्

भिप्रायेण प्रधार्यते आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानः ततो ग्रहग्रहणम् । तिरश्चीनो विततो रश्मिरेषाम् एषां सोमानाम् अन्तरादशापवित्रलक्षणात् । रश्मिः तिरश्चीनः विततः प्रसारितः । उद्गातृभिः तस्मिन्दशापत्रे सोमः प्रक्षिप्तः दशापवित्रात् अधः स्वित् अधश्च आसीत् उपरिस्वित् उपरि च आसीत् आसीदित्युभयत्र विचारे प्लुतिः । किञ्च रेतोधा आसन् । रेतः सोमः स हि जगदुत्पत्तिबीजम् । तस्य धारयितार आसन् ग्रहचमसाधवनीयद्रोणकलशादयः । महिमानश्च आसन् । सोमैकादशाः सोमस्य महिमानः । किञ्च । स्वधा अवस्तात् स्वधा अन्नम् अवस्तात् । शुक्रो द्रोणकलश इत्येतदुक्तं भवतिः प्रयतिः परस्तात् प्रयतनम्प्रयतिः परस्तादुपरिष्टात् । आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानो वनयति इत्येतदुक्तं भवति ॥ ७४ ॥

प्रजापतिदृष्टा त्रिष्टुप् भाववृत्तदेवत्या भावेषु पदार्थेषु वृत्तः स्थितो भाववृत्तः परमात्मा सोऽस्या देवता । आग्रयणग्रहे विनियोगः क्रमपाठाल्लभ्यते ततोऽधियज्ञं तावद् व्याख्यायते । आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानस्ततो ग्रहग्रहणमाध्रुवादिति ( का० ९, ५, १७ ) कात्यायनेनोक्तम् तदभिप्रायेणोच्यते । एषां पूयमानसोमानां रश्मिः यमनात् ऋजीषादिकल्कनियामको दशापवित्रलक्षणः तिरश्चीनः तिर्यङ् एव विततो विस्तारितः उद्गातृ-

उपरिस्विदासीदिति चेति श्रुतिः किञ्च रेतोधाः रेतः सोमः स हि जगदुत्पत्तिबीजं तस्य धारयितार आसन् ग्रहचमसाधवनीयद्रोणकलशादयः महिमानश्च आसन् सोमैकदेशाः सोमस्य महिमानः किञ्च स्वधा अन्नम्अवस्तात् शुक्रो द्रोणकलश इत्येतद्भवति प्रयतिः प्रयतिः प्रयतनं प्रयतिः परस्तात् उपरिष्टात् आधवनीयात् उन्नेता निग्राभ्यासु आसिञ्चति ताः पवित्रे यजमानो वनयति इत्येतदुक्तं भवति ॥ ७४ ॥

भिरिति शेषः । तस्मिन् दशापवित्रे सोमः प्रक्षिप्तः सन् दशापवित्राद्धश्च आसीत् उपरि च आसीत् स्वित्शब्दौ चार्थौ उपरि स्विदासीदितीकारः प्लुतः । किञ्च तत्रैके पदार्था ग्रहचमसाधवनीयद्रोणकलशादयो रेतोधा आसन् रेतो जगदुत्पत्तिबीजं सोमं दधति धारयन्ति ते रेतोधाः सोमाधारभूताः आसन् यज्ञाद्वै प्रजाः प्रजायन्त इति श्रुतेर्जगद्बीजत्वं सोमस्य । तथापरे पदार्थाः सोमरसरूपास्तत्राधेयाः सन्तो महिमानः महान्तः उत्कृष्टा आसन् । आधाराधेयभावेन सर्वोऽयं यज्ञात्मैव स्थित इति भावः ब्रह्मार्पणं ब्रह्म हविरिति स्मृतेः । किञ्च स्वधान्नं तद्रूपः अवस्तात् अवरो होमात् प्राक् नीच आसीत् प्रयतिः प्रयतते प्रयतिः प्रयत्नवान् होमानन्तरं लब्धफलकः सन् परस्तात् परः उत्कृष्टः आसीत् ॥ अथाधिदैवतं व्याख्या । एषां प्रसिद्धानां सूर्य्यरश्मीनां मध्ये एकः सुषुम्णाख्यो रश्मिः तिरश्चीनः विततः विस्तृतः सन् किम् द्युलोकादधः स्वित् आसीत् उतोपरि स्विदासीत् स्विदिति वितर्के विचार्य्यमाणानामिति ( पा० ८, २, ९७ ) प्लुतः । किञ्च स रश्मिः रेतोधाः रेतसो विश्वबीजस्योदकस्य धारयिता आसीत् व्यत्ययेनैकवचनम् । तथा च श्रुतिः सूर्य्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्तीति । अन्ये रश्मयो महिमानः माहात्म्याधायका आसन् विश्वप्रकाशत्वेन । किञ्च स्वधान्ननिष्पादकः स एव रश्मिः अवस्तात् अवरो भूम्यभिमुखः प्रयतिः प्रयत्नात्सोर्ध्वमुखः सन् परस्तात् परः उत्कृष्टः दर्शनमात्रेण देवानां तृप्तिदः । तथोक्तं छान्दोग्यश्रुतौ ( छान्दोग्योपनिष० ५, १—६ ) असौ वा आदित्यो देवमध्वित्युपक्रम्य न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्तीति ॥ अथाध्यात्मपक्षे व्याख्या । नासदासीदिति सप्तर्चेऽध्यात्मप्रतिपादके सूक्ते (अष्ट० ८, ७, १७ मण्ड० १०, ११, १) बह्वृच इमामृचं पठन्ति तत्र नासदासीदिति निरस्तसमस्तप्रपञ्चां प्रलयावस्थामनूद्य विश्वबीजमविद्योक्ता । कामस्तदग्रे समवर्तताति पादेन च काम उक्तः । मनसो रेतः प्रथमं यदासीदिति पादेन पुण्यापुण्यात्मकं कर्मोक्तम् । एवमविद्याकामकर्माणि सृष्टिहेतून्युक्त्वा तेषां स्वकार्य्ये जनने शैघ्र्यमाह तिरश्चीन इति । एषामविद्याकामकर्मणां रश्मिरिव रश्मिः कार्य्यवर्गो वियदादि विततः विस्तृतः सन् तिरश्चीनः तिर्य्यगवस्थितो मध्ये स्थितःअधश्चा-

सीदुपरि चासीत् सूर्य्यरश्मिवद्युगपत् सर्वं व्याप्येत्यर्थः । तदेव वि-भज्यते रेतोधा इति। सृष्टे कार्य्यवर्गे केचन रेतोधाः रेतसो बीजभूतस्य कर्मणो विधातारः कर्त्तारो भोक्तारश्च जीवाः आसन् अन्ये महि-मानः महान्तो विपुला वियदादयो भोग्या आसन् महिमान इति स्वार्थे इमनिच् । एवं मायायामीश्वरः सर्वं जगत् सृष्ट्वा स्वयं चानु-प्रविश्य भोक्तृभोज्यरूपेण विभागं कृतवानित्यर्थः । तयोर्भोक्तृभो-ग्ययोर्मध्ये स्वधान्नं भाग्यप्रपञ्चोऽवस्तादवरो निकृष्ट आसीत् प्रय-तिः प्रयतिता भोक्ता परस्तात् परः उत्कृष्टः भोक्तृ प्रपञ्चाधीनं भो-ग्यप्रपञ्चं कृतवानित्यर्थः । विभाषा परावराभ्यामिति ( पा० ५, ३, २९ ) प्रथमार्थेऽस्तातिप्रत्ययः अस्ताति चेति ( पा० ५, ३, ४० ) अ-वरशब्दस्यावादेशः । एतद्वा इद॑ᳬ सर्वमन्नं चैवान्नादश्चेति श्रुतेः ॥ ७४॥

आ रोद॑सी अपृणदा स्व॑र्म॒हज्जा॒तं यदे॑नम॒पसो॒ अ-धा॑रयन् । सो अ॑ध्व॒राय॒ परि॑णीयते क॒विरत्यो॒ न वा-ज॑सातये॒ चनो॑हितः ॥ ७५ ॥

(१) आ रोदसी । जगती वैश्वानर उच्यते । आ अपृणत् आपूरयति रोदसी द्यावापृथिव्यौ । आस्वः आपूरयति च स्वः आदित्यम् महत्मदान्तम् । कदा आपृणत् यत् यदा जातं जा-तमात्रम् एनं वैश्वानरम् अपसः अपस्विनः कर्मवन्तः अधारयन्

(१) अत्र वाराणसी लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । आ रोदसी । जगती वैश्वानर उच्यते अपसः अपस्वि-नः कर्मवन्तः यत् यदा जातं जातमात्रम् एनमग्निम् अधारयन् कर्म-णि स्थापितवन्तः तदा अयमग्निः रोदसी द्यावापृथिव्यौ आ अपृण त् महत् महान्तं स्वः आदित्यं च आ अपृणात् आपूरितवान् स एवाग्निः अध्वराय यज्ञार्थं परिणीयते कविः क्रान्तदर्शनः अत्यो न अश्व इव वाजसातेय अन्नसम्भजनाय चनोहितः चनसि अन्ने स्थापितः अश्वो हि घृतादिभिरभिधारितेनान्नेन पोष्यते अतस्ते-नोपमीयते ॥ ७५ ॥

कर्मणि स्थापितवन्तः । सो अध्वराय स एवायमग्निः अध्वराय यज्ञार्थं परिणीयते कविः क्रान्तदर्शनः । कथमिव अत्यो न अश्व इव । वाजसातये अन्नसंभजनाय । चनोहितः चनसि अन्ने स्थापितः । अश्वो हि घृतादिभिरभिधारितेनान्नेन पोष्यते अतस्तेनोपमीयते ॥ ७५ ॥

तमेव वैश्वानराख्यं भोक्तारं परमात्मानं स्तौति । विश्वामित्रदृष्टा जगती वैश्वानरदेवत्या । यत् यदा जातमरणीत उत्पन्नमात्रमेनं वैश्वानरमपसोऽपस्विनः कर्मवन्तो यजमाना अधारयन् कर्मणि स्थापितवन्तः । तदा स रोदसी द्यावाभूमी आ सर्वतः अपृणत् पूरयति स्म स्थावराणां प्रस्तरादौ तदुपलब्धेः । न केवलं रोदसी किन्तु महत् प्रभूतं स्वः अन्तरिक्षमापृणन् सूर्य्यात्मना । त्रैलोक्यं जाठरात्मना पूरितमित्यर्थः । गार्हपत्यादीनां लोकत्वं श्रुत्योक्तम् अयं वै लोको गार्हपत्यो द्यौराहवनीय इति । उक्तार्थमेव विवृणोति स इति सोऽग्निरध्वराय यागाय परिणीयते सर्वतोऽतिप्रणीताग्नीध्रीयादिधिष्ण्यादिषु प्रकर्षेण प्रापय्यते । नयने दृष्टान्तः अत्यो न यथाश्वो वाजसातयेऽन्नलाभाय सर्वतो नीयते । राजाश्ववान् भोगजातं लभते यथा तद्वद्विप्रोऽग्निं सेवमानो ब्रह्मलोकान्तभोगानिति भावः । कीदृशोऽग्निः ? कविः सर्वज्ञः । चनोहितः चन इत्यन्ननामेति ( निरु० ६, १६ ) यास्कः चनसेऽन्नाय भोग्याय हितः सर्वभोगसम्पादक इत्यर्थः ॥ ७५ ॥

उ॒क्थेभि॑र्वृत्र॒हन्त॑मा॒ या म॑न्दा॒ना चि॒दा गि॒रा ।
आ॒ङ्गू॒षैरा॑वि॒वास॑तः ॥ ७६ ॥

(१) उक्थेभिर्वृत्रहन्तमा । द्वे गायत्र्यौ । यौ इन्द्राग्नी ।

---

(१) अत्र वाराणसी० लि०पु० समतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । उक्थेभिः उक्थैः स्तुतौ सन्तौ वृत्रहन्तमौ वृत्रस्यातिशयेन हन्तारौ वयं तौ स्तोमैः स्तुमः या चित् यौ च गिरा वाचा स्तुतौ आमन्दानौ मोदमानौ स्तः यौ च आङ्गूषैः आघोषैः

उक्थेभिः उक्थैः स्तुतौ सन्तौ। वृत्रहन्तमा वृत्रस्यातिशयेन हन्तारौ स्तः। याचित् यौ च गिरा वाचा स्तुतौ आमन्दाना मोदमानौ स्तः यौ च आङ्गूषैः स्तुतौ आविवासतः परिचरतः स्तोतॄन्। तौ उक्थैः गिरा आङ्गूषैश्च स्तुमः सर्वकामाप्त्यर्थम् ॥ ७६ ॥

वसिष्ठदृष्टैन्द्राग्निदेवत्या गायत्री। या यौ इन्द्राग्नी आङ्गूषैः आघोषैः चित् लौकिकवाक्स्तोमैरपि स्तुतौ आ आगच्छतः आङ्गूष स्तोम आघोष इति ( निरु० ५, ११ ) यास्कः तौ उक्थेभिः उक्थैः गिरा स्तोत्रात्मिकया स्तुत्या आविवासतः आविवस्येते परिचर्येते यजमानैरिति शेषः व्यत्ययेन कर्त्तरि लट् विवासतिः परिचर्यायामिति ( निरु० ११, २३ ) यास्कः। कीदृशौ तौ? वृत्रहन्तमा वृत्राणामावरकाणां पाप्मनां हन्तृतमौ नाद्घस्येति (पा० ८, २, १७) नुम्। मन्दाना मन्दानौ मोदमानौ स्वभावतः। सर्वत्र विभक्तेर्डादेशः ॥ ७६ ॥

उप॑ नः सू॒नवो॒ गिरः॑ शृ॒ण्वन्त्व॒मृत॑स्य॒ ये। सु॒मृ॒डी॒का भ॑वन्तु नः ॥ ७७ ॥

(१)उप नः। उपशृण्वन्तु नोऽस्माकम् गिरः वाचः सूनवः पुत्राः अमृतस्य प्रजापतेः ये विश्वे देवाः श्रुत्वा च। सुमृडीकाः अतिशयेन सुखयितारः भवन्तु नः अस्माकम् ॥ ७७ ॥

सुहोत्रदृष्टा वैश्वदेवी गायत्री। ये अमृतस्य मरणहीनस्य प्रजापतेः सूनवः पुत्राः विश्वे देवाः ते नोऽस्माकं गिरः उपशृण्वन्तु स-

---

स्तोमैः स्तुता आविवासतः परिचरितः स्तोतॄन् तौ उक्थैर्गिरा आङ्गूषैः स्तोमैश्च स्तुमः सर्वकामाप्तये ॥ ७६ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। उपनः। अमृतस्य प्रजापतेः सूनवः। पुत्रा विश्वेदेवास्ते नोऽस्माकं गिरो वाचः उपशृण्वन्तु श्रुत्वा च नोऽस्माकं सुमृडीकाः सुतरां सुखयितारो भवन्तु ॥ ७७ ॥

मीपमागत्यावधारयन्तु श्रुत्वा च नोऽस्माकं सुमृडीकाः सुखकरा भवन्तु शोभनं मृडीकं सुखं येभ्यस्ते ॥ ७७ ॥

ब्रह्माणि मे मतयः शꣳ सुतासः शुष्मं इयर्ति प्रभृतो मे अद्रिः । आशासते प्रतिहर्यन्त्युक्थेमा हरी वहतस्ता नो अच्छ ॥ ७८ ॥

(१)ब्रह्माणि मे तिस्रस्त्रिष्टुभः । इन्द्रमरुत्संवादे इन्द्रस्यैतद्वाक्यम् । ब्रह्माणि स्तुतयः हवींषि वा । मे मतयः मम मतीः इयर्तिउद्गमयन्ति । शं सुखम् सुतासः अभिषुताः सोमाः मम उद्गमयन्ति । शुष्म इयर्तिप्रभृतो मे अद्रिः । शुष्मः बलम् इयर्ति । ऋ गतौ णिचो लोपश्छान्दसः आरयति उद्गमयति । प्रभृतः हृग्रहोर्भश्छन्दसि हस्येति हकारस्य भकारः प्रहृतः सोमाभिषवनिमित्तम् । मे मम अद्रिः ग्रावा । यत्र च आशासते यजमानाः मदीयमागमनमिच्छन्ति । यत्र च प्रतिहर्यन्ति । हर्यतिः प्रेप्साकर्मा । प्रतिकामयन्ति उक्था उक्थानि । इमानि इन्द्रः शृणोत्विति । इमा इमौ हरी अश्वौ वहतः प्रापयतः ता तानि

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । ब्रह्माणि मे तिस्रस्त्रिष्टुभः इन्द्रमरुत्संवादे इन्द्रस्यैतद्वाक्यं ब्रह्माणि स्तुतयो हवींषि वा मे मतयः मतीः इयर्ति अर्थवशाद्वचनपरिणामः ऋ गतौ ह्वादिः णिचो लोपः उद्गमयन्ति सुतासः अभिषुताः सोमः शं सुखमुद्गमयन्ति प्रभृतः प्रहृतः हृग्रहोर्भश्छन्दसि सोमाभिषवनिमित्तं प्रहृतः अद्रिः ग्रावा मे मम शुष्मः बलम् इयर्त्ति उद्गमयति यत्र च आशासते यजमाना मदीयागमनमिच्छन्ति यत्र उक्थ उक्थानि प्रति हर्यन्ति हर्यतिः प्रेप्साकर्मा प्रतिकामयन्ते ता तानि उक्थानि अच्छ आभिमुख्ये न इमा इमौ हरी अश्वौ नोऽस्मान् वहतः इति मरुद्गणं प्रतीन्द्रस्योक्तिः ॥ ७८ ॥

स्थानानि नः अस्मान् अच्छ आभिमुख्येन ॥ ७८ ॥

तिस्रस्त्रिष्टुभः द्वे इन्द्रमरुत्संवादे इन्द्रमरुद्देवत्ये आद्येऽगस्त्यदृष्टे । इन्द्रो मरुतः सहचरानाह हे मरुतः ! ब्रह्माणि मन्त्रवाक्यात्मकानि स्तुतिवचांसि हवींषि वा सांमाज्यादीनि मे मम स्वभूतानि चोदनावाक्येऽग्न्यादिदेवतान्तरसम्बन्धेन प्रतीयमानान्यपि सर्वदेवताप्राणात्मनो ममेन्द्रस्यैव तानीति भावः । मतयः मननयुक्ताः स्तुतयोऽपि शं मम सुखोत्पादिकाः अतो यज्ञे गन्तव्यमिति भावः । किञ्च मे मया प्रभृतः प्रकर्षेण धृतः अद्रिः वज्रः इयर्ति गच्छत्येव लक्ष्यं प्रति न प्रतिहन्यत इत्यर्थः कीदृशः शुष्मः ? शोषयति शत्रुमिति शुष्मः अत एव गमने राक्षसाद्युपद्रवो नास्तीत्यर्थः । न केवलं हविरादीनां मदीयत्वेन गन्तव्यम् अपि तु आशासते प्रार्थयन्ते यजमाना यानि उक्थानि ता तानि स्तोत्रशस्त्राणि मां प्रतिहर्यन्ति कामयन्ते हर्यतिः प्रेप्साकर्मेति यास्कः । किञ्च नोऽस्माकमिमा इमौ हरी अश्वौ अच्छ यज्ञाभिमुखं वहतः मां प्रापयतः अत एवास्माभिर्गन्तव्यमिति भावः । यद्वार्थान्तरम् ब्रह्माणि मतयः सुताः सोमाः प्रहृतः अद्रिः सोमाभिषवग्रावा शुष्मः सुखरूपः एतत् सर्वं मम शं सुखमियर्त्ति अर्पयति उद्गमयति णिजन्तभूतः समानमन्यत् ॥ शुष्मः अर्विसिविशुषिभ्यः किदिति ( उणा० १, १४२ ) मन्प्रत्ययः कित्त्वाद् गुणाभावः नित्त्वादाद्युदात्तः । अत्ति भक्षयति रिपूनित्यद्रिः अदिशदिभूशुभिभ्यः ( उणा० ४, ६६ ) क्रिन्निति क्रिन्प्रत्ययः आद्युदात्तः ॥ ७८ ॥

अनु॑त्तमा ते॑ मघवन्नकि॒र्नु न त्वावाँ॑२॥ अस्ति दे॒वता॒ विदा॑नः । न जाय॑मानो॒ नश॑ते॒ न जा॒तो यानि॑ करि॒ष्या कृ॑णुहि॒ प्र॑वृद्ध ॥ ७९ ॥

(१) अनुत्तमा ते । एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः । अनु-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । अनुत्तमा ते । एवमिन्द्रेणोक्ता मरुतः प्रत्याह हे

त्तम् णुद प्रेरणे अस्य निष्ठाप्रत्यये ऽनुत्तप्रतूर्तेत्यादिना सिद्धिः । अनुत्तम् अप्रच्युतस्वभावं महाभाग्यम् । आ आस्ते । ते तव । हे मघवन् धनवन् । नाकिर्नु । नवा कश्चित् प्रच्यावको महाभागस्य किञ्च । नत्वावान् मतुप्सादृश्यार्थे । अस्ति देवता देवः विदानः सर्वज्ञ इत्यर्थः । किञ्च न जायमानः नशते । नशिर्व्याप्त्यर्थश्छन्दसि । व्याप्नोति । नच जातः तानि करिष्यति । तानि कानि । यानि त्वं कृणुहि करोषीति लकारव्यत्ययः हे प्रवृद्ध ॥ ७९ ॥

एवमिन्द्रेणोक्ता मरुतः प्रत्याहुः । नुद प्रेरणे अस्य निष्ठायां नसत्तनिषत्तेत्यादिना ( पा० ८, २, ६१ ) अनुत्तमिति निपातः । आ इति स्मरणे स्मृतवन्तो वयम् हे मघवन् ! धनवन् ! इन्द्र ! ते तव अनुत्तं न केनापि नुत्तं नाशितं महाभाग्यमिति शेषः । नु निश्चये न किः न कोऽपि त्वन्महाभाग्यनाश इति शेषः । न केवलं तवैश्वर्यमात्रं किन्तु सर्वज्ञत्वमपीत्याह न त्वेति वतुरत्र सादृश्ये त्वावान् त्वत्सदृशो विदानः विद्वान् देवता देवो नास्ति स्वार्थे तल् विदेः शानन् नित्वादाद्युदात्तः । किञ्च हे प्रवृद्ध । प्रकर्षेण वृद्ध ! पुराणपुरुष ! यानि कर्माणि वृत्रबधादीनि त्वं कृणुहि करोषि व्यत्ययेन लोट् तानि कर्माणि जायमानः वर्त्तमानः जातो भूतपूर्वश्च देवमनुष्येषु कश्चित न नशते न व्याप्नोति न करोतीत्यर्थः नशतिर्व्याप्तिकर्मा । न करिष्या न च करिष्यति उत्पत्स्यमान इति शेषः ति-

मघवन् आ इति विस्मये अनुत्तं णुद प्रेरणे अस्य निष्ठाप्रत्यये नसत्तनिसत्तानुत्तप्रतूर्त्तेत्यादिना सिद्धिः अनुत्तम् अप्रच्युतस्वभावं महाभाग्यं ते तव नकिः न कश्चित्प्रच्यावकोऽस्य महाभाग्यस्य किञ्च त्वावान् त्वावान् त्वादृशः मतुप् सादृश्यार्थे देवता देवः विदानः जानानः सर्वज्ञः न अस्ति किञ्चन जायमानः नशते नशते नश व्याप्त्यर्थश्छन्दसि व्याप्नोति नच जातः तानि करिष्यति लोपो दीर्घश्छान्दसः करिष्यति हे प्रवृद्ध त्वं यानि कृणुहि करोषि इति लकारव्यत्ययः ॥ ७९ ॥

लोपो दीर्घश्च छान्दसः । कालत्रये त्वादृशो नास्तीत्यर्थः अतो यशशास्त्वम् ॥ ७९ ॥

तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः । सद्यो जज्ञानो निरिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ ८० ॥

(१) तदित् । तत् इत् आस । इच्छब्द एवार्थे आसीदिति लकारव्यत्ययः । तदेवासीत् भुवनेषु भूतजातेषु ज्येष्ठं वृद्धतमम् । यतो यज्ञे जातः उग्रः उद्गूर्णः वज्रहस्त इन्द्रः । त्वेषनृम्णः तेजो धनो वा महाधनो वा । कार्यं दृष्ट्वा कारणानुमानं कुरुते नहि यतः कुतश्चिदिन्द्रो जायत इति । किं च । यश्च सद्यो जज्ञानः । जायमानः बाल्यमनपेक्ष्य । निरिणाति निहन्ति शत्रून् । पुनरपि विशिनष्टि । अनुयं विश्वे मदन्ति यं अनुमदन्ति अनुतृप्यन्ति विश्वे सर्वेदेवाः ऊमाः । अवितारः अवनीया वा । नास्ति यतः कुतश्चिज्जायत इति विशेषः ॥ ८० ॥

बृहद्दिवदृष्टा माहेन्द्री त्रिष्टुप् । भुवनेषु भूतजातेषु तत् इत् तदेव ज्येष्ठं श्रेष्ठमास बभूव छन्दस्युभयथेति ( पा० ३, ४, ११७ )

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु०ना० तद्यथा । तदित् । भुवनेषु भूतजातेषु ज्येष्ठं वृद्धतमं तत् । इत् आसत देवासीत् यतः उग्रः उद्गूर्णवज्रः इन्द्रः जज्ञे जातः किम्भूतः त्वेषनृम्णः त्वेषस्तेज एव नृम्णं धनं यस्य स त्वेषनृम्णः तेजोधनः कार्यं दृष्ट्वा कारणानुमानं क्रियते । नहि यतः कुतश्चिदिन्द्रो जायते । किञ्च यश्च सद्यो जज्ञानः जायमानः बाल्यमनपेक्ष्य जन्ममात्रतः शत्रून् निरिणाति निहन्ति री हिंसार्थः । पुनरपि विशिनष्टि समाः अवितारः अवनीया वा विश्वेदेवाः यमिन्द्रमनुमदन्ति अनुतृप्यन्ति नासौ यतः कुतश्चिज्जायत इत्यर्थः ॥ ८० ॥

लिटः सार्वधातुकत्वादस्तेर्भूभावो न सर्वोत्कृष्टं ब्रह्मैवासीत् यतो ज्ये-ष्ठात् उग्रः उत्कृष्टः इन्द्रो जज्ञे जातः कीदृशः त्वेषनृम्णः त्वेषः का-न्तिः नृम्णं धनं यस्य तेजोधनः कार्य्यं दृष्ट्वा कारणमहत्त्वं कल्पते । किञ्च य इन्द्रो जज्ञानः जायमान एव सद्यः तत्क्षणं शत्रून्निरिणाति नितरां हन्ति री वधे क्रयादिः प्वादित्वाद्ध्रस्वः । किञ्च विश्वे सर्वे देवाः यमिन्द्रमनुमदन्ति अनुतृप्यन्ति अनुर्लक्षण इति ( पा० १, ४, ८४ ) द्वितीया यद्वृत्तान्नित्यमिति ( पा० ८, १, ६६ ) मदन्तीत्यत्र निघातो न । कीदृशा ? विश्वे ऊमाः अवन्ति रक्षन्ति ऊमाः रक्षकाः अवतेर्मन्प्रत्ययः छ्वोः शूडिति ( पा० ६, ४, १९ ) ऊठ् ॥ ८० ॥

**इमा उ त्वां पुरूवसो गिरो वर्धन्तु या मम । पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ ८१ ॥**

(१) इमा उ त्वा द्वे बृहत्यौ । तृतीयः पादः पूर्वं व्याख्याय-ते सामर्थ्यात् । यन्त्वाम्पावकवर्णा अग्निवर्णाः ऋषयः शुचयः य-मनियमपराः । विपश्चितः त्रिकालदर्शिनः । अभ्यनूषत अभि-ष्टुवन्तः । स्तोमैः स्तोत्रैः । तं त्वा इमा उः पादपूरणः । याः मम गिरः हे पुरूवसो प्रभूतधन ता वर्द्धन्तु वर्द्धयन्तु ॥ ८१ ॥

मेधातिथिदृष्टे आदित्यदेवत्ये द्वे बृहत्यौ । पुरु बहु वसु धनं य-स्य स पुरुवसुः संहितायां छान्दसो दीर्घः पुरुशब्दस्य हे पुरुवसो ! बहुधनादित्य ! या मम गिरः शस्त्ररूपा वाचः इमाः त्वा त्वां वर्धन्तु वर्धयन्तु । किञ्च विपश्चितो विद्वांसः तव स्वरूपाभिज्ञा उद्गातारश्च स्तोमैः स्तोत्रैः बहिष्पवमानादिभिः त्वामभ्यनूषत अस्तुवत नू स्तु-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । इमा उत्त्वा । द्वे बृहत्यौ हे पुरुवसो पुरूणि वसूनि यस्य स पुरुवसुः पुरुशब्दस्य दीर्घः छान्दसः हे प्रभूतधन याः मम-गिरः इमा त्वा त्वां वर्द्धन्तु उ पादपूरणः यं त्वां पावकवर्णाः अग्निव-र्णाः शुचयः यमनियमपराः विपश्चितः त्रिकालदर्शिनः ऋषयः स्तोमैः अभ्यनूषत आभवन्ति णु स्तुतौ लुङ् ॥ ८१ ॥

तौ लुङ् कुटादित्वाद्गुणाभावः ( पा० १, २, १ )। कीदृशा विपश्चितः ? पावकवर्णाः अग्नितुल्यतेजसः ब्रह्मवर्चसवन्तोऽत एव शुचयः शुद्धागमाः स्तोत्रशस्त्ररूपा गिरस्त्वां स्तुवन्तीत्यर्थः ॥ ८१ ॥

यस्यायं विश्व आर्यो दासः शेवधि पा अरिः। तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत् सो अज्यते रयिः ॥ ८२ ॥

(१) यस्यायम्। यस्येन्द्रस्य अयं विश्वः सर्वः आर्यः दासः। वर्णाश्रमविहितकर्मानुष्ठानाद्दास इव। सेवधिपा अरिः सेवधि निधिः। निधिमिव यः धनं रक्षति न वर्णाश्रमविहितकर्मानुष्ठानं करोति सः यस्य शत्रुभूतः। किञ्च। तिरश्चित् प्राप्तेऽपि अर्ये ईश्वरे रुशमे। रुशातिर्हिंसाकर्मा। हिंस्रे। पवीरवि। पवीरमायुधं तद्वति। आयुधवति युद्धकर्मणि। शत्रुः। हे यजमान तुभ्य इत् तुभ्यमेव। स इन्द्रः अज्यते। धातूनामनेकार्थत्वादजिर्दानार्थः विकरणव्यत्ययश्च अनक्ति ददाति रयिः धनम् अत्रापि रयिमिति विभक्तिव्यत्ययः ॥ ८२ ॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा ! यस्यायम्। अयं विश्वः सर्वः सर्वः आर्यः यस्येन्द्रस्य दासः वर्णाश्रमविहितकर्मानुष्ठानाद्दास इव शेवधिपाः शेवधिं पातीति शेवधिर्निधिः शेवधिमिव यो द्रव्यं रक्षति न विहितं कर्म करोति स यस्य अरिः शत्रुभूतः किञ्च तिरश्चित् प्राप्तेऽपि अर्ये ईश्वरे रुशति हिंसाकर्मा सिंस्रे पवीरवि पवीरमायुधं तद्वति आयुधवति युद्धदुर्मदे य इन्द्रः अरिः हे यजमान स इन्द्रः तुभ्य इत् तुभ्यमेव रयिः रयिं विभक्तिव्यत्ययः रयि धनम् अज्यते ददाति धातूनामनेकार्थत्वादजिर्दानार्थः विकरणव्यत्ययश्च ॥ ८२ ॥

हे आदित्य ! यस्य तवायं विश्वः सर्वोऽपि आर्य्यः वर्णाश्रमविहितकर्मानुष्ठाता सन् दासः दासवत् सर्वदा रक्षणीयः शेवधिपाः निधिरक्षकः कृपणो यस्य तवारिः शत्रुः निधिः शेवधिरिति ( निरु० २, ४ ) यास्कः । किञ्च एवं विधे कृपणे अर्ये धनस्वामिनि वैश्ये वा तिरश्चित् तिरोऽन्तर्धौ चिदप्यर्थे अन्तर्भूतो भूमिगर्तादौ निक्षिप्तोऽपि तस्य रयिर्धननिचयः तुभ्य इत् मलोपश्छान्दसः तुभ्यमेव त्वदर्थमेवाज्यते व्यक्तो भवति कर्मकर्त्तरि यक् । कृपणस्य धनं त्वदर्थमेवोपयुज्यते पक्षहरणादिना न तु कृपणभोगाय भवतीत्यर्थः । कीदृशेऽर्ये रुशमे रुशतिर्हिंसाकर्मा औणादिकोऽमप्रत्ययः रुशति हिनस्तीति रुशमः तस्मिन् धनापहर्तृणां हिंसके आतिथ्यादितिरस्कारेणात्मनोऽपि हिंसके । पवीरवि पविः शल्यमस्यास्ति पवीरमायुधम् रो मत्वर्थीयः पवीरं वाति गच्छति पवीरवाः तस्मिन् धनरक्षार्थमायुधधारके तथा यास्कः ( निरु० १२, ३१ ) पविः शल्यो भवति यद्विपुनाति कायं तद्वत् पवीरमायुधं तद्वानिन्द्रः पवीरवानिति । धनिनातियत्नेन गुप्तमपि धनं तत आच्छिद्य धर्मिष्ठाय ददातीति भावः ॥ ८२ ॥

अयꣳ सहस्र॒मृषि॑भिः॒ सह॑स्कृतः समु॒द्र इ॑व पप्रथे । स॒त्यः सो अ॑स्य महि॒मा गृ॑णे॒ शवो॑ य॒ज्ञेषु॑ विप्र॒राज्ये॑ ॥ ८३ ॥

(१) अयꣳसहस्रम् । सतोबृहती । योऽयमिन्द्रः सहस्रं सहस्रकृत्वः । ऋषिभिः । सहस्कृतः । सह इति बलनाम । बलं कृत्वा स्तुतः सन् समुद्र इव पप्रथे प्रथते । तस्यास्य सत्यः

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा अयꣳसहस्रम् । सतोबृहती योऽयमिन्द्रः सहस्रं सहस्रकृत्वः ऋषिभिः सहस्कृतः सह इति बलनाम बलं कृत्वा स्तुतः सन् समुद्र इव पप्रथे प्रथते तस्यास्य सः सत्यः महिमा शवः बललक्षणः गृहे गीर्यते अस्माभिः क यज्ञेषु विप्रराज्ये यज्ञेषु विप्राः ब्राह्मणाः स्वतन्त्राः राजान इव भवन्ति ॥ ८३ ॥

सः महिमा शवः बललक्षणः गृणे गीर्यते अस्माभिर्यज्ञेषु । विप्रराज्ये । यज्ञे हि ब्राह्मणाः स्वतन्त्रा राजान इव भवन्ति॥८३॥

मेधातिथिदृष्टादित्यदेवत्या सतोबृहती । अयमादित्यरूप इन्द्रः समुद्र इव उदधिवत् पप्रथे प्रथितो विस्तीर्णो व्यापकोऽभूत् । कीदृशोऽयम् ? ऋषिभिरतीन्द्रियार्थदर्शिभिः सहस्कृतः सहसा बलेन युक्तः कृतः स्तुत्या हि देवताबलं वर्धते । किञ्च अस्यादित्यस्य स महिमा सत्योऽवितथः । शवो बलं च सत्यम् । यज्ञेषु विप्रराज्ये विप्राणां राज्ये स्तोत्रशस्त्रसन्देहे गृणे स्तौमि तं महिमानमिति शेषः । यज्ञेषु विप्राः स्वतन्त्राः राजान इव भवन्ति राज्ञां कर्म राज्यम् । स्तोत्रशस्त्राणां संसदि पठनेन सोऽयं स्तूयत इत्यर्थः ॥ ८३ ॥

अदब्धेभिः सवितः पायुभिष्ट्वँ शिवेभिरद्यपरि पाहि नो गयम् । हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशंँस ईशत ॥ ८४ ॥

(१)अदब्धेभिः सवितरिति व्याख्यातम् ॥ ८४ ॥

व्याख्याता ( ३३, ६९ ) । षष्ठः पुरोरुग्गणः समाप्तः ॥ ८४ ॥

आ नो यज्ञं दिविस्पृशं वायो याहि सुमन्मभिः । अन्तः पवित्र उपरि श्रीणानोऽयँ शुक्रो अयामि ते ॥ ८५ ॥

(२) आ नः आयाहि नः अस्माकं यज्ञम् । दिविस्पृशं

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । अदब्धेभिः व्याख्यातम् ॥ ८४ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । आ नः इहान्ये पुरोरुग्गणा आद्या नव बृहत्यो द्वादशी च दशम्येकादशीत्रयोदश्यः सतोबृहत्यः हे वायो नोऽस्माकं यज्ञं सुमन्मभिः सुमन्मनैः सङ्कल्पैः आयाहि किम्भूतं यज्ञं दिवि-

द्युलोकयायिनम् । ऋत्विग्यजमानैर्विद्वद्भिरारब्धः दक्षिणादिभिः सम्पन्नः यज्ञः दिवं स्पृशत्येव । हे वायो सुमन्मभिः संकल्पैः । आगतस्य किंफलमिति चेत् अन्तःपवित्रे दशापवित्रस्य उपरि श्रीणानः होतृचमसे निषिच्यमानः सोमो वर्त्तते तत्र तव ग्रहो गृह्यते । अयं च यः शुक्रः सोमः तम् अयामि प्रापयामि ते तव ॥ ८५ ॥

इतोऽध्यायसमाप्त्यन्तं त्रयोदश ऋचः प्रतीकोक्ताश्चतस्रश्चेति ऐन्द्रवायवादिसावित्रान्तानां ग्रहणां ग्रहणमन्त्राः पूर्ववत् ॥ जमदग्निदृष्टा वायुदेवत्या । बृहत्य आद्या नव द्वादशी च दशम्येकादशीत्रयोदश्यः सतोबृहत्यः । हे वायो ! नोऽस्माकं यज्ञमायाहि आगच्छ । कीदृशं यज्ञम् ? दिविस्पृशं द्युलोकव्यापिनम् ऋत्विग्यजमानवैदुष्याद्दाक्षिणासम्पन्नत्वाच्च स्वर्गेऽपि श्रूयमाणमित्यर्थः । आगम्य किं फलमत आह अन्तरिति अन्तः पात्रमध्यस्थः पवित्रे दशापवित्रस्योपरि श्रीणानः श्रयमाणः होतृचमसेन निषिच्यमानोऽयं शुक्रः शुद्धः ऋजीषकल्करहितः सोमो रसात्मा ते तुभ्यं त्वदर्थमयामि नियतः त्वदीयभागत्वेन मया संस्कृतः यम उपरमे कर्मणि चिण् ॥ ८५ ॥

इन्द्रवायू सुसंदृशा सुहवे॒ह हवामहे । यथा नः सर्व इज्जनोऽनमीवः सङ्गमे सुमना असत् ॥ ८६ ॥

(१)इन्द्रवायू सुसंदृशा । इन्द्रवायू । सुसंदृशा । सुतरां सम्य-

---

स्पृशं द्युलोकयायिनम् ऋत्विग्यजमानैर्विद्वद्भिरारब्धो दाक्षिणाभिः सम्पन्नः दिविस्पृक् भवति आगतस्य फलमिति चेत् अन्तःपवित्रे दशापवित्रस्योपरि श्रीणानः होतृचमसे निषिच्यमानः सोमो वर्तते । तत्र तव ग्रहो गृह्यते अयं च यः शुक्रः सोमः तं च अयामि प्रापयामीति तव ॥ ८५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । इन्द्रवायू इह इन्द्रवायू वयं हवामहे आह्वयामः किम्भूतौ सुहवा स्वाह्वानौ तथा सुसंदृशा सुतरां सम्यक्पश्यन्तौ

ग्दर्शनीयौ। सुहवा। स्वाह्वानौ च। इह हवामहे आह्वयामः। तथा चाह्वयामः। यथा येन प्रकारेण नः आस्माकं सर्व इत् सर्व एव जनः। अनमीवः अमीवा व्याधिस्तद्राहितः। सङ्गमे इन्द्रवायुसंगतौ। सुमनाः शोभनमनस्कः। असत् भूयात्॥ ८६॥

तापसदृष्टैन्द्रवायवी। इह यज्ञे वयमिन्द्रवायू हवामहे आह्वयामः उभयत्र वायोः प्रतिषेध इति (पा० ६, ३, २६ वा० १) आनङ्भावः। कीदृशौ? सुसंदृशा सुसंदृशौ सुतरां सम्यक् पश्यतस्तौ। सुहवा सुहवौ शोभनाह्वानौ। तथा हवामहे यथा नोऽस्माकं सर्व इत् सर्व एव जनः पुत्रपौत्रादिरीदृशः असत् भवेत् अस्तेर्लेट्यडागमः कीदृशः? अनमीवः व्याधिरहितः सङ्गमे धनप्राप्तौ बहूनां समागमे वा सुमनाः शोभनचित्तः उदारो वक्ता चेत्यर्थः॥ ८६॥

ऋधगित्था स मर्त्यः शशमे देवतातये। यो नूनं मित्रावरुणावभिष्टय आचक्रे हव्यदातये॥ ८७॥

ऋधगित्था। तृतीयः पादः प्रथमं व्याख्यायते यच्छब्द-

यथा येन प्रकारेण नोऽस्माकं सर्व इत् सर्व एव जनः अनमीवः नीरोगः सङ्गमे इन्द्रवायुसङ्गमे सुमनाः शोभनमनस्कश्च असत् भूयात्॥ ८६॥

(२) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा। ऋधक् सः मर्त्यः मनुष्यः इत्था था हेतौ च छन्दसीति इदमः थाप्रत्ययः। एततौ रथोरिति इदादेशः। इत्थमभिनयेन दर्शयति ऋधक् ऋध्नोतीति समृद्धियुक्तो भवति। शशमे शमु उपशमे लिट्। यमनियमज्ञो भवति देवतातये देवानां कर्म देवतातिः तस्मै यज्ञाय सः कः यः नूनं निश्चयेन अभिष्टये अभीष्टप्राप्तये द्रव्यदातये हविषो दानाय च मित्रावरुणौ आचक्रे सेवते करोतेर्लिटि आत्मनेपदे गन्धनावक्षेपणेत्यादिसूत्रेण॥ ८७॥

योगात् । यः मर्त्यः नूनं निश्चयेन मित्रावरुणौ अभिष्टये स्वाभिष्टप्राप्तये । आचक्रे सेवते हव्यदातये हविषो दानाय । स मर्त्यः ऋधक् समृद्धियुक्तः इत्था । इत्थमित्यभिनयेन दर्शयति । शशमे । शाम्यति यमनियमज्ञो भवति । देवतातये । देवानां कर्म देवतातिः तस्मै यज्ञायेत्यर्थः ॥ ८७ ॥

जमदग्निदृष्टा मैत्रावरुणी । नूनं निश्चितं यो मर्त्यो मनुष्यो मित्रावरुणौ आचक्रे आकुरुते सेवते गन्धनावक्षेपणेत्यादिना ( पा० १, ३, ३२ ) करोतेः सेवनार्थे आत्मनेपदम् । किमर्थम् ? अभिष्टये अभिमतलाभाय पृषोदरादिलोपः हव्यदातये हविषो दानाय च । स नरः इत्था अनेन हेतुना सेवनरूपेण शशमे शाम्यति यमनियमशमदमादियुक्तो भवतीत्यर्थः । कीदृक् सः ? देवतातये देवस्य कर्म देवतातिः तस्मै यज्ञाय ऋधक् ऋध्नोतीति ऋधक् समृद्धिमान् यज्ञसम्पत्तिक्षमधनाढ्यः सन् शान्तो भवतीत्यर्थः । बट् श्रत् सत्रा इत्थेति ( निघ० ३, १०, ) निपातः सत्यवचनो वा सत्यं शाम्यति । एत्वाभ्यासलोपाभाव आर्षः शशमेऽत्र ॥ ८७ ॥

आयातमुपभूषतं मध्वः पिबतमश्विना । दुग्धं पयो वृषणा जेन्यावसू मा नो मर्धिष्टमागतम् ॥ ८८ ॥

(१)आयातम् । आगच्छतम् उपभूषतम् अलं कुरुतं च यज्ञम् । मध्वः मधुरूपस्य स्वमंशं पिबतं च । हे अश्विनौ । किं च ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । आयातम् । हे अश्विनौ हे जेन्यावसू जितं स्वीकृतं वसु धनं याभ्यां तौ जित्यावसू आयातमागच्छतम् उपभूषतम् अलं कुरुतं यज्ञं मध्वः मधुरूपस्य सोमस्य पिबतं किञ्च पयः दुग्धं क्षारितं महावीरसेचनार्थं हे वृषणौ सेक्तारौ नोऽस्मान् प्रति मा मर्द्धिष्ट सम्प्रहारं मा कुरुतम् । आगतम् आगच्छन्तं च अवश्यम् आदरार्थं पुनर्वचनम् ॥ ८८ ॥

दुग्धं पयः महावीरसेचनार्थम् । हे वृषणौ सेक्तारौ । हे जेन्यावसू जेन्यं जितं स्वीकृतं वसु धनं याभ्यां तौ जैन्यावसू । किंच मा नो मर्द्धिष्टम् मां च मर्द्धिष्टम् संप्रहारं कुरुतम् नः अस्मान्प्रति । आगतम् अवश्यञ्च आगच्छतम् ॥ ८८ ॥

वशिष्ठदृष्टाश्विदेवत्या । हे अश्विनौ ! युवामायातं यज्ञं प्रत्यागच्छतम् आगत्य च उपभूषतमलङ्कुरुतं यज्ञम । मध्वः मधुरं सोमं पिबतम् कर्मणि षष्ठी नुमभावश्छान्दसः । किञ्च हे वृषणा ! वृषणौ ! यज्ञफलस्य सेक्तारौ ! हे जेन्यावसू ! जेन्यं जेतव्यं जितं वा आ समन्तात् वसु धनं याभ्यां तौ जेन्यावसू वशीकृतधनौ तादृशौ ! युवां पयः वृष्ट्युदकम् दुग्धमन्तरिक्षात् प्रक्षारयतम् दुहेर्लोणमध्यमाद्विवचनं दुग्धमिति । किञ्च नोऽस्मान्मा मर्धिष्टं मा हिंस्तम् मृधिर्हिंसार्थः लुङ् । किं बहुना युवामागच्छतम् आदरार्थे पुनर्वचनम् ॥ ८८ ॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ८९ ॥

(१) प्रैतु । अस्मदीयं यज्ञं प्रति आगच्छतु । ब्रह्मणस्पतिः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । प्रैतु । ब्रह्मणस्पतिः बृहस्पतिः । प्रैतु यज्ञं प्रति आगच्छतु सूनृता शोभना सत्यवती च देवी वाक् त्रयीलक्षणा प्र एतु कं प्रति आगच्छतु इत्यत आह वीरं पुत्रम् अच्छ अभि । किम्भूतं नर्यं नरेभ्यो हितम् अन्योऽन्यं मनुषेभ्योऽनुग्राहकं पङ्क्तिराधसं ब्राह्मणपङ्क्तिधनं पावनमित्यर्थः यद्वा धानाकरम्भः परीवापः पुरोडाशः पयस्या । एषा हविः पङ्क्तिः द्विनाराशंसंप्रातः सवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयसवनम् एषा नाराशंसपङ्क्तिः । त्रीणि सवनानि पशुरूपावसथ्यः पशुरबन्ध्यः एषा सवनपङ्क्तिः एताः पङ्क्तीः यो राधयति साधयति स पङ्क्तिराधाः तं देवाश्च नोऽस्माकं यज्ञं नयन्तु ॥ ८९ ॥

बृहस्पतिः । प्रैतु च देवी वाक् । सूनृता शोभना सत्यवती त्रयीलक्षणा । कं प्रत्यागच्छत्वित्यत आह । अच्छ अभि । वीरं पुत्रं । महावीरं वा । नर्यम् नृभ्यो हितम् अनुग्राहकम् । पङ्क्तिराधसम् ब्रह्मपङ्क्तिसाधकम् पङ्क्तिपावनमित्यर्थः । किञ्च देवाः यज्ञं नयन्तु नः अस्माकम् ॥ ८९ ॥

कण्वदृष्टा वैश्वदेवी । ब्रह्मणो वेदस्य पतिः हिरण्यगर्भः नोऽस्माकं यज्ञमच्छ यज्ञाभिमुखं प्रैतु प्रकर्षेणागच्छतु ब्रह्मणस्पतिः ब्रह्मणः पाता पालयिता वेति ( निरु० १०, १२ ) यास्कः । तथा देवी देवतात्मा सूनृता प्रियसत्यस्वरूपा तस्यैव वाक् त्रयीरूपा यज्ञं प्रैतु । किञ्च देवा यष्टव्या नोऽस्मान् यज्ञं नयन्तु प्रापयन्तु यज्ञं कारयन्त्वित्यर्थः । कीदृशं यज्ञम् ? वीरं विशेषेणेरयति वीरस्तम् शत्रूणां विशेषोन्मूलयितारम् वीरो वीरयत्यमित्रानिति ( निरु० १, ७ ) यास्कः । नर्यं नृभ्यो मनुष्येभ्यो हितम् उगवादिभ्य इति ( पा० ५, १, २ ) यत् । पङ्क्तिराधसम् इन्द्रस्य पुरोडाशः हर्योर्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या एषा हविः पङ्क्तिः द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यन्दिनं सवनं सकृन्नाराशंसं तृतीयं सवनम् एषा नाराशंसपङ्क्तिः त्रीणि सवनानि पशुरुपवसथ्यः पशुरनुबन्ध्यः एषा सवनपङ्क्तिः एताभिः पङ्क्तिभिः राधः समृद्धिर्यस्य पङ्क्तयो राध्यन्ते साध्यन्ते यत्रेति वा पङ्क्तिराधाः तम् । ब्रह्मणस्पत्यादयः ईदृशं यज्ञमस्माभिः कारयन्त्विति सर्वार्थः ॥ ८९ ॥

चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि । रयिं पिशङ्गं बहुलं पुरुस्पृहꣳ हरिरेति कनिक्रदत् ॥ ९० ॥

(१) चन्द्रमा अप्सु । आहुतिपरिणामोऽत्रोच्यते । योऽसौ

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । चन्द्रमा अप्सु आहुतिविपरिणामोऽत्रोच्यते योऽसौ चन्द्रमाः सतता सोमरूपापन्नः अभिषुतः अन्तर्मध्ये रसरूपेणावस्थितः अग्नौ हुतः सन् सुपर्णः सुपतनः दिवि आधावते ततः पर्जन्यरूपमास्थाय उदकदानद्वारेण पिशङ्गं पीतवर्णं बहुलमसंख्यातं

चन्द्रमाः स तथा सोमरूपापन्नः । अभिष्टुतः अप्स्वन्तः मध्ये रसरूपेण आस्थितः । अग्नौ हुतः सन् सुपर्णः सुपतनः धावते दिवि । तस्मात् पर्जन्यरूपमास्थाय । उदकदानद्वारेण । रयिं-धनम् पिशङ्गं पीतवर्णम् बहुलमसंख्यातं पुरुस्पृहम् बहवो यत्र स्पृहयन्ति । हरिः सोम एति । कनिक्रदत् पर्जन्यरूपेणात्यर्थं स्तनितं कुर्वन् ॥ ९० ॥

त्रितदृष्टाहुतिपरिणामवादिन्यैन्द्री । आहुतेर्होमद्रव्यस्य परिणामो द्युपर्जन्यपृथिवीपुरुषयोषायोषात्मकपञ्चाग्निक्रमेण परिपाकः इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति श्रुत्योक्तः तं वदत्येषा ऋक् । आधियज्ञं तावदर्थः । चन्द्रं देवानामाह्लादं मिमीते करोति चन्द्रमाः लतारूपः सोमोऽभिषुतः सन् अप्सु वसतीवरीनिग्राभ्यादिजलेषु अन्तर्मध्ये रसरूपेण स्थिताग्नौ हुतः सन् सुपर्णः गरुडाकृतिः साधुपतनो भूत्वा दिवि आधावते शीघ्रं गच्छति सृ गतावित्यस्य शीघ्रगतौ धावादेशः तृतीयस्यामितो दिवि सोम आसीदिति श्रुतेः । हरिः सोमो हरितवर्ण इति ( निरु० ४, १९ ) यास्कोक्तेर्हरिः पूर्वोक्तः सोम एव दिवि गतः पर्जन्यरूपमास्थायोदकदानद्वारेण रयिमेति रयिरिति धननामेति ( निरु० ४, १७ ) यास्कः धान्यभावं प्राप्नोति व्रीहियवाद्यन्नरूपो भवतीत्यर्थः । कीदृशं रयिम् ? पिशङ्गम् परिपाकेन व्रीहियवादिकं धान्यं पीतवर्णं भवति । बहुलमसंख्यातं चतुर्विधभूतग्रामजीवनपर्य्याप्तमित्यर्थः । पुरुस्पृहं पुरूणां बहूनामपि स्पृहा लिप्सा यत्र तम् बहवोऽपि यद्धान्यमिच्छन्ति तद्रूपो भवतीत्यर्थः । कीदृशो हरिः ? कनिक्रदत् पर्जन्यरूपेणात्यर्थं स्तनितं कुर्वन् दाधर्तीत्यादि ( पा० ७, ४, ६३ ) निपातः ॥ ९० ॥

देवं देवं वोऽवसे देवं देवमभिष्टये । देवं देवं हुवेम वाजसातये गृणन्तो देव्या धिया ॥ ९१ ॥

पुरुस्पृहं बहवो यत्र स्पृहयन्ति ईदृशं रयिं धनं हरिः सोमः एति कनिक्रदन् पर्जन्यरूपेण अत्यर्थं स्तनितं कुर्वन् ॥ ९० ॥

(१) देवं देवं वः । देवं देवमिति वीप्सार्थोऽभ्यासः । यावन्तो देवास्तावतो देवान् वः युष्माकमवसे पालनाय । हुवेमेत्यनेन संबन्धः आह्वयामः । देवं देवमभिष्टये अभिष्टकामाप्तये आह्वयामः । देवन्देवं हुवेम । वाजसातये अन्नसम्भजनाय । कथं हुवेमेति चेत् । गृणन्तः स्तुतिभिः देव्या धिया । देवतायाथात्म्यचिन्तनपरया बुद्ध्या ॥ ९१ ॥

मनुदृष्टा वैश्वदेवी । वीप्सार्थोऽभ्यासः यावन्तो देवास्तान् वो-युष्मानवसेऽवनाय पालनाय वयं हुवेम आह्वयामः । अभिष्टयेऽभिलषितफलाप्तये देवं देवं हुवेम । वाजसातयेऽन्नलाभाय देवं देवं हुवेम । अभ्यासे भूयांसमर्थं मन्यन्त इति ( निरु० १०, ४२ ) यास्कः । कीदृशा वयम् देव्या देवतायाथात्म्यानुसन्धानपरया धिया बुद्ध्या गृणन्तः स्तुवन्तः यद्वा देव्या स्वरादिसौष्ठवेन दीप्यमानया धिया स्तुत्या गृणन्तः ॥ ९१ ॥

दि॒वि पृ॒ष्टो अ॑रोचता॒ग्निर्वै॑श्वान॒रो बृ॒हन् । क्ष्मया॑ वृधा॒न ओज॑सा॒ चनो॑हितो॒ ज्योति॑षा बाधते॒ तमः॑ ॥९२॥

(२) दिविपृष्टः । योऽग्निर्वैश्वानरः दिविपृष्टः द्युलोके स्थि-

(१) अत्र वाराणसी लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । देवंदेवम् । देवंदेवमिति वीप्सार्थोऽभ्यासः यावन्तो देवास्तान् देवान् वो युष्माकम् अवसे अवनाय पालनाय हुवेम आह्वयामः अभीष्टये अभीष्टकामाप्तये सर्वदेवान् हुवेम वाजसातये अन्नसंभजनाय देवान् हुवेम किं कुर्वन्तः देव्या धिया देवतायाथार्थ्यचिन्तनपरया बुद्ध्या गृणन्तः स्तुवन्तः ॥ ९१ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । दिविस्पृष्टः । योऽग्निर्वैश्वानरः दिविस्पृष्टः द्युलोके स्थितः आदित्यात्मना अरोचत दीप्यते बृहन् महान् सोऽयं क्ष्मया पृथिव्या कारणभूतया ओजसा बलेन च वृधानो वर्द्धमानः चनोहितः चनसि अन्ने हविर्लक्षणे स्थापितः। ज्योतिषा तमः बाधते॥९२॥

तः आदित्यात्मना अरोचते देदीप्यते । बृहन् महान् । सोऽयम् क्ष्मया पृथिव्या कारणभूतया । वृधानः वर्द्धमानः ओजसा बलेन च । चनोहितः चनसि अन्ने हविर्लक्षणे हितः स्थापितः । ज्योतिषा बाधते तमः ॥ ९२ ॥

मेधदृष्टा वैश्वानरी । योऽग्निः दिवि द्युलोके पृष्टः सिक्तः आदित्यात्मना स्थितः सन् अरोचत दीप्यते पृषु सेके निष्ठान्तः सेकः स्थितिरेव । कीदृशोऽग्निः ! वैश्वानरः विश्वेषां नराणां हितः । बृहन् महान । किञ्च सोऽग्निः ज्योतिषा स्वप्रकाशेन तमः नैशं बाधते लोकानुग्रहायान्धकारं निवर्त्तयति । कीदृशः ? क्ष्मया वृधानः क्ष्मा पृथिवी तया तत्स्था मनुष्या उपलक्ष्यन्ते मञ्चाः क्रोशन्तीतिवत् भूमिस्थैर्वर्णाश्रमिभिः नरैर्दत्तेन हविषा वर्धमानः अत एव ओजसा चनोहितः ओषधिपाकक्षमेण तेजसा चनसेऽन्नाय हितः चन इत्यन्ननाम ( निरु० ६, १८ ) अन्ननिष्पादक इत्यर्थः ॥ ९२ ॥

**इन्द्राग्नी अपादियं पूर्वागात् पद्वतीभ्यः । हित्वी शिरो जिह्वया वावदच्चरत्त्रिꣳशत्पदान्यक्रमीत् ॥९३॥**

(१) इन्द्राग्नी आपत् । प्रवल्हिकेयमृक् । यथाप्रज्ञन्तु व्या-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । इन्द्राग्नी अपात् । प्रवह्लिका इयमृक् यथाप्रज्ञं तु व्याख्यायते। मानुषी वागनयोच्यते । उक्तं च अथ यन्मानुष्या वाचाहेतीदं कुरुतेतीदं कुरुतेति तदु ह तया चीयत इति हे इन्द्राग्नी अपात् पादरहिता गद्या इयं वाक् पद्वतीभ्यः पद्यरूपायाः सकाशात् पूर्वा आअगात् आगता शिरः प्रथमं पदं हित्वी हित्वा परित्यज्य अन्यत्करोति नहि लौकिक्या वाचः कश्चित्पदनियमोऽस्ति जिह्वया विदुषः वावदत् वदन्ती चरन् चरति कियन्ति तत्र पदानि त्रिंशत्संख्याकानि पदानि अक्रमीत् यद्वा व्याख्यानान्तरम् उषा वर्ण्यते । हे इन्द्राग्नी अपात् पादरहिता इयम् उषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सती आगात् आगच्छति तथा

ख्यायते । मानुषी वागनयोच्यते । उक्तं च । अथ यन्मानुष्या वाचाह इतीदं कुरुतेतीदं कुरुतेति । तदु ह तया चीयत इति । हे इन्द्राग्नी अपात् पादरहिता गद्या इयं वाक् । पूर्वा आ अगात् आगता । पद्वतीभ्यः पादवतीभ्यः सकाशात् । हित्वी हित्वा परित्यज्य शिरः प्रथमं पदम् अन्यत्करोति । नहि लौकिक्या वाचः कश्चित्पदनियमोऽस्ति । जिह्वया । विदुषः वावदत् वदन्ती । चरत् चरति । कियन्ति तत्र पदानि । त्रिंशत्पदानि । त्रिंशत्संख्याकानि पदानि अक्रमीत् अतिक्रामति । नहि परतः त्राणविषयः ॥ ९३ ॥

सुहोत्रदृष्टा इन्द्राग्निदेवत्या प्रवह्लिका । हे इन्द्राग्नी ? अपात् स्वयं पादरहितापि इयमुषाः पद्वतीभ्यः पादयुक्ताभ्यः सुप्ताभ्यः प्रजाभ्यः पूर्वा प्रथमभाविनी सती आ अगात् आगच्छति सा च तासां प्रजानां शिरो हित्वी निद्रात्याजनेन प्रेरयित्री यद्वा शिरो हित्वी हित्वा त्यक्त्वा स्वयमशिरस्का सती जिह्वया प्राणिनां वागिन्द्रियेण वावदत् यङ्लुगन्तं भृशं शब्दं कुर्वती सती चरत् चरति प्रसरति अडभावः । एवं चरन्ती उषाः एकदिनेन त्रिंशत्संख्यानि पदा पदानि गमनसाधनभूतान् मुहूर्त्तान् नि अक्रमीत् नितरां क्रमते अहोरात्रेण त्रिंशन्मुहूर्तान् क्रामतीत्यर्थः ॥ यद्वा वाक्पक्षेऽर्थः । इन्द्रः प्राणः अग्निः पुरुषः हे इन्द्राग्नी ! युवयोरेवैतत् कर्म यत् अपात् पादरहिता गद्यात्मिका त्रयीलक्षणेयं वाक् पूर्वा प्रथमभाविनी सती आ अगात् पद्वतीभ्यः पादयुक्ताभ्यो रामायणभारतादिश्लोकात्मकवाल्मीकि व्यासादिवाणीभ्यः सकाशात् । वेदवाचः प्राथम्यं श्रुत्योक्तम् ततो ब्रह्मैव प्रथममसृज्यतेति । एवं प्रथमजाया वाचोऽविकृतत्वं निर्णीय मानुष्या वाचो विकृतत्वमाह हित्वी शिर इति शिर इति प्राधान्यादा-

प्राणिनां शिरो हित्वा प्रेरयित्री यद्वा शिरो हित्वा त्यक्त्वा स्वयमशिरस्का सती जिह्वया प्राणिस्थया तदीयेन वागिन्द्रियेण वावदन् शब्दं कुर्वती चरत् एवं चरन्ती उषाः त्रिंशत् पदा पदानि गमनसाधनभूतान् त्रिंशत् मुहूर्तान् अक्रमीत् नितराम् अतिक्रान्तवती ॥९३॥

ख्यातपदमुच्यते अभ्याज गां दण्डेन शुक्लां गां दण्डेनाभ्याजेत्येवं लौकिक्या वाचः पदप्रयोगनियमाभावात् शिरः शिरःस्थानीयमाख्यातपदं हित्वा त्यक्त्वा जिह्वया विदुषो वागिन्द्रियेण वावदत् अतिवदन्ती सती चरति प्रकाशीभवति। एवं चरन्तीः सा त्रिंशत्पदानि न्यक्रमीत् क्रमति अत्र पदशब्दोऽङ्गुलवचनः मूलाधारादारभ्य मुखपर्य्यन्तं त्रिंशदङ्गुलानि क्रामति। एवं वाग्विषयोऽर्थः॥ ९३॥

देवासो हि ष्मा मनवे समन्यवो विश्वेसाकꣳ सरातयः। ते नो अद्य ते अपरं तुचे तु नो भवन्तु वरिवोविदः॥ ९४॥

(१) देवासो हिष्मा। हि स्म निपातौ। ये देवासः मनवे समन्यवः मनुना समानदीप्तयः समानक्रोधा वा। विश्वे सर्वे साकं सह उपास्याः। सरातयः समानदानाश्च। ते विश्वेदेवाः नः अस्माकम् अद्य। ते च अपरम् आगामिकाले। तुचे तुनः। तुगित्यपत्यनाम। अपत्याय च अस्मदीयाय। भवन्तु। वरिवोविदः। वरिवो धनं ये अस्मदर्थे विन्दान्ति ते वरिवोविदः॥ ९४॥

मनुदृष्टा वैश्वदेवी। हि स्म एतौ निपातौ प्रसिद्ध्यतिशयार्थौ छान्दसौ षत्वदीर्घौ ते प्रसिद्धा विश्वे देवासः अद्य वर्त्तमानकाले नोऽस्माकं साकं सहैव वरिवोविदः भवन्तु वरिवो धनं वेदयन्ति लम्भयन्ति वरिवोविदः एकीभूय धनप्रापका भवन्तु। तु पुनः अपरं

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। देवासो हि। हि स्म निपातौ। ये देवासः मनवे समन्यवः मनुना समानदीप्तयः समानक्रोधा वा विश्वे सर्वे साकं सह उपास्याः सरातयः समानदानाश्च ते विश्वेदेवाः नोऽस्माकम् अद्य तु पुनः ते अपरम् आगमनकाले नोऽस्माकं तुचे अपत्याय तुगित्यपत्यनाम वरिवोविदः वरिवो धनं विदन्तीति ईदृशा भवन्तु॥९४॥

भविष्यति काले नोऽस्माकं तुचे अपत्याय पुत्रपौत्रादिकाय ते वरिवोविदः भवन्तु तुगित्यपत्यनाम ( निघ० २, २ ) कीदृशास्ते ? मनवे समन्यवः मनुनामकाय मुनये मन्त्रदर्शिने मह्यं समानो मन्युर्दीप्तिर्येषां ते मन्युर्मनतेर्दीप्तिकर्मण इति ( निघ० १०, २९ ) यास्कः मदर्थकमैकमत्यं प्राप्ताः यद्वा मन्युना क्रोधेन सह वर्त्तमानाः अस्मच्छत्रुहननाय क्रोधयुक्ता इत्यर्थः । तथा सरातयः रातिर्दानं तत्सहिताः दातार इत्यर्थः ॥ ९४ ॥

**अपाधमदभिशस्तीरशस्तिहाथेन्द्रो द्युम्न्याभवत् ।**
**देवास्त इन्द्र सख्याय येमिरे बृहद्भानो मरुद्गण ॥९५॥**

(१) अपाधमत् । प्रथमोऽर्द्धर्चः परोक्षकृतः द्वितीयः प्रत्यक्षकृतः अतो वाक्यभेदः पदसन्नतिर्वैकस्मिन्नर्द्धर्चे । अपाधमत् धमतिर्गतिकर्मा । यद्वा अपगमयति । अभिशस्तीः अभिशापान् अशस्तिहा अभेरादिशेषः । अभिशस्तिहा स्वत एव । अथानन्तरम् इन्द्रद्युम्नी अन्नवान् यशस्वी वा आ अभवत् भवति । एवं स्तुत इन्द्रः प्रत्यक्षीभूतः । इत उत्तरोऽर्द्धर्चः प्रत्यक्षकृतः । देवाः ते तव हे इन्द्र सख्याय सखिभावाय येमिरे आत्मानं संयतं कृतवन्तः हे बृहद्भानो महादीप्ते । हे मरुद्गण एकवाक्ये बहूनां पदानां सन्नतिः कार्या ॥ ९५ ॥

नृमेधदृष्टे द्वे मरुद्गणविशिष्टेन्द्रदेवत्ये । बृहतो महान्तो भा-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रम मुम्बई मु०पु० अपाधमत् । प्रथमोऽर्धर्चः । परोक्षकृतः द्वितीयः प्रत्यक्षकृतः अतो वाक्यभेदः । पदसंनतिर्वैकस्मिन्नर्द्धर्चे इन्द्रः द्युम्नी अन्नवान् यशस्वी वा आअभवत् । भवति एवंस्तुत इन्द्रः प्रत्यक्षकृतः अत उत्तरेऽर्धर्चः प्रत्यक्षकृतः हे इन्द्र हे वृत्रहन् भानो महादीप्ते हे मरुद्गण मरुतां गणा यस्य तत्संबोधनं देवाः ते तव सख्याय सखिभावाय येमिरे आत्मानं संयतं कृतवन्तः यच्छतेर्लिट् एकवाक्ये तु बहूनां पदानां सन्नतिः कार्या ॥ ९५ ॥

नवो दीप्तयो यस्य स बृहद्भानुः मरुतां गणो यस्य स मरुद्गणः हे बृहद्भानो ! हे वरुद्गण ! हे इन्द्र ! देवाः वसुरुद्रादित्याः ते तव सख्याय मैत्र्यै येमिरे कथं नु नामेन्द्रोऽस्मान् सखिभावाय वृणीत इत्यभिप्राया आत्मानं संयतं कृतवन्त इत्यर्थः स भवान् अभिशस्तीः अभिशापान् शत्रुप्रयुक्तानपवादान् अपाधमत् अपगमयति निवर्त्तयति धमतिर्गतिकर्मेति ( निरु० ६, २ ) यास्कः । अथ पश्चात् द्युम्नी अन्नवान् यशस्वी वा आ अभवत सर्वतो धनवान् भवति । कीदृशो भवान् ? अशास्तिहा । शंसनं शस्तिः प्रशंसा सा नास्ति येषां ते अशस्तयः निन्द्या असुरास्तान् हन्तीत्यशस्तिहा । इन्द्रः ऐश्वर्यवान् इन्दतीतीन्द्रः । यो दुष्टहन्ताभिशापनाशको यशस्वी तेजस्वी बहुभृत्यसेव्यस्तस्य सख्यायान्ये यतन्त इति युक्तमिति भावः ॥ ९५॥

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत । वृत्रꣳ हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ ९६ ॥

(१) प्रवः । प्रथमा बहुवचनस्य व आदेशः । प्रार्चत प्रोच्चारयत वः यूयम् स्तुतीः इन्द्राय बृहते महते हे मरुतः । ब्रह्मत्रयीलक्षणीः किमिति चेत् । वृत्रं हनति हन्तीति प्राप्ते शपः श्रवणम् । वृत्रहा वृत्रवधप्रवणः शतक्रतुः बहुकर्मा । वज्रेण शतपर्वणा शतग्रन्थिना ॥ ९६ ॥

हे मरुतः ! वो युष्माकं स्वामिने इन्द्राय यूयं ब्रह्मवेद सामरूपस्तोत्रं प्रार्चत प्रोच्चारयत । कीदृशायेन्द्राय ? बृहते महते । ततो वृत्रहा वृत्रस्यासुरस्य पाप्मनो वा हन्तेन्द्रो वृत्रं हनति हन्तु बहुलं

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । प्रवः । प्रथमा च बहुवचनस्य वः आदेशः हे मरुतः वः यूयं बृहते महते इन्द्राय ब्रह्म श्रुतिलक्षणां स्तुतिं प्रार्चत प्रोच्चारयत किमिति चेत् वृत्रहा वृत्रवधप्रवणः शतक्रतुर्बहुकर्मा इन्द्रः शतपर्वणा शतग्रन्थिना वज्रेण वृत्रं हनति हन्तीति प्राप्ते शपः श्रवणम् ॥ ९६ ॥

छन्दसीति ( पा० २, ४, ७३ ) शपो लुगभावः । केन ? वज्रेण स्वायुधेन । कीदृशेन वज्रेण ? शतपर्वणा शतसंख्याकानि पर्वाणि धारा ग्रन्थयो वा यस्य स शतपर्वा तेन । कीदृशो वृत्रहा ? शतक्रतुः शतं क्रतवो यस्य बहुकर्मा बहुप्रज्ञो वा ॥ ९६ ॥

अस्येदिन्द्रो वावृधे वृष्ण्यꣳ शवो मदे सुतस्य विष्णवि । अद्या तमस्य महिमानमायवोऽनुष्टुवन्ति पूर्वथा ॥ इमा उ त्वा । यस्यायम् । अयꣳ सहस्रम् ऊर्ध्व ऊ षु णः ॥ ९७ ॥

इति माध्यन्दिनीयायां वाजसनेहिसंहितायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

(१) अस्येत् । अस्य इत् इदिति निपातः पादपूरणः । मदे सुतस्य विष्णवि विष्णुर्यज्ञः । यज्ञे अभिषुतस्य मदे संजाते य इन्द्रो वावृधे वृद्धश्च । वृष्ण्यं सेक्तृत्वम् आविष्करोति । शवो बलं च आविष्करोति तस्यास्य इन्द्रस्य अद्य अद्यापि

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । अस्येत् । अस्य इत् इदिति पादपूरणः । सुतस्य अभिषुतस्य विष्णुर्यज्ञः यज्ञे अभिषुतस्य सोमस्य मदे संजाते य इन्द्रो वावृधे वृद्धश्च वृष्णं सोत्कृष्टम् आविष्करोति । शवो बलम् आविष्करोति । तस्यास्य इन्द्रस्य अद्य अद्यापि तं महिमानम् आयवो मनुष्याः अनुष्टुवन्ति । पूर्वथा पूर्वत् । यथा पूर्वमृषिभिः स्तुतः इमा उत्वा यस्यायम् अयं सहस्रम् ऊर्ध्व ऊषुणः चतस्रः प्रतीकोक्ताः व्याख्याताः ॥ ९७ ॥

इति उव्वटकृतौ मन्त्रभाष्ये त्रयस्त्रिंशत्तमोऽध्यायः ॥ ३३ ॥

संमहिमानं तम् आयवः मनुष्याः अनुष्टुवन्ति । पूर्वथा पूर्ववत् यथा पूर्वमृषिभिः स्तुतः । इमा उत्वा यस्यायम् । अयꣳसहस्रम् । ऊदूर्ध्व ऊषुणः इति चतस्रः प्रतीकोक्ता व्याख्याताः ॥९७॥

इति उव्वटकृतौ मन्त्रभाष्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥



मेधातिथिदृष्टा माहेन्द्री सतोबृहती । इन्द्रः अस्य इत् अस्यैव यजमानस्य वृष्ण्यं शवः च वावृधे वर्धयति णिजन्तत्वं बोध्यम् वर्षति सिञ्चति वृषा तस्येदं वृष्ण्यं वीर्य्यम् यप्रत्यये उपधालोपः शवः बलम् । क्व सति सुतस्याभिषुतस्य सोमस्य मदे सति । कीदृशे मदे ? विष्णवि वेवेष्टि व्याप्नोति विष्णुस्तस्मिन् सर्वशरीरव्यापके सप्तम्येकवचने घेर्ङितीति ( पा० ७, ३, १११ ) गुणेऽवादेशः यद्वा विष्णवि विष्णौ यज्ञेऽभिषुतस्येति सम्बन्धः यज्ञो वै विष्णुरिति श्रुतेः । सोमपानेन मत्त इन्द्रो यजमानस्य माहात्म्यं बलं च वर्धयतीत्यर्थः । किञ्च अस्येन्द्रस्य तमुक्तं यज्वनो वीर्य्यादिवर्धनरूपं महिमानमद्यास्मिन् कालेऽपि आयवः मनुष्याः अनुष्टुवन्ति आनुपूर्व्येण स्तुवन्ति । तत्र दृष्टान्तः पूर्वथा पूर्वमिव यथा पूर्वमृषयोऽस्तुवन्नेवमिदानीमपि नराः स्तुवन्तीत्यर्थः । प्रत्नपूर्वविश्वेमात्थाल्छन्दसीति ( पा० ५, ३, १११ ) पूर्वशब्दादिवार्थे थाल्प्रत्ययः ॥ इमा उ त्वा यस्यायम् अयं सहस्रम् ( ३३, ८१-८३ ऊर्ध्व ऊ षुणः ( ११,४२ ) एताः प्रतीकोक्ताः ॥ ९७ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
त्रयस्त्रिंशत्तमोऽध्यायो गतोऽयं सार्वमेधिकः ॥ ३३ ॥



# चतुस्त्रिंशोऽध्यायः ।

यज्जाग्र॑तो दू॒रमु॒दैति॒ दैवं॒ तदु॑ सु॒प्तस्य॒ तथै॒वैति॑ । दू॒र॒ङ्ग॒मं ज्योति॑षां॒ ज्योति॒रेकं॒ तन्मे॒ मनः॑ शि॒वसं॑कल्पमस्तु ॥ १ ॥

(१) यज्जाग्रतः । षट्कण्डिकास्त्रिष्टुभो मनोदेवत्याः । अस्मिन्नध्याये लैङ्गिको विनियोगः । लिङ्गं च सामर्थ्यमुच्यते । अभिधानशक्तिः । यन्मनः जाग्रतः पुरुषस्य दूरम् उदैति उद्गच्छति चक्षुःप्रभृतीन्यपेक्ष्य । यच्च दैवम् देवो विज्ञानात्मा सोऽनेन गृह्यत इति दैवम् । उक्तश्च । मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवमिति । तदु सुप्तस्य तदः स्थाने यदो वृत्तिः । उकारः समुच्चयार्थीयः । यच्च मनः सुप्तस्य तथैव तेनैव प्रकारेण एति । यच्च दूरं गमम् । अतीतानागतवर्तमानव्यवहितविप्रकृष्टग्रहीतृ । ज्योतिषां श्रोत्रादीनां विज्ञाननेतॄणां मध्ये एकमेव ज्योतिः । तत् मे

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । यज्जाग्रतः षट्कण्डिकाः त्रिष्टुभो मनोदेवत्याः । अस्मिन्नध्याये लैङ्गिको विनियोगः । लिङ्गं च सामर्थ्यमुच्यते । अभिधानशक्तिः । यन्मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति । चक्षुः प्रभृतीन्यपेक्ष्य चक्षुरादीनीन्द्रियाणि अतिक्रम्य यच्च दैवं देवो विज्ञानात्मा सोऽनेन मनसा गृह्यत इति दैवम् । उक्तं च मनसैवानु द्रष्टव्यमेतदप्रमेयं ध्रुवमिति । तदु सुप्तस्य यदः स्थाने तदो वृत्तिः उकारः समुच्चयार्थीयः । यच्च मनः सुप्तस्य तथा तेनैव प्रकारेण एति । यच्च दूरं गमं दूरं गच्छति । अतीतानागतवर्तमानव्यवहितविप्रकृष्टस्य ग्रहीतृ ज्योतिषां श्रोत्रादीनां विज्ञातॄणाम् इन्द्रियाणां मध्ये एकमेव ज्योतिः । तन्मनः शिवसंकल्पं शान्तसंकल्पमस्तु भवतु ॥ १ ॥

मनः शिवसंकल्पम् । संकल्पः काममूलपदार्थस्य स्त्र्यादेः सुरूपताज्ञानवतः कामप्रभृति । शान्तसंकल्पम् अस्तु भवतु ॥ १ ॥

अनारभ्याधीतोऽध्यायः आ पितृमेधात् आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः पाठे विनियुक्ताः ॥ षडृचस्त्रिष्टुभो मनोदेवत्याः शिवसङ्कल्पदृष्टाः । ऋषिर्वेदेति । तन्मे मनः शिवसङ्कल्पमस्तु शिवः कल्याणकारी धर्मविषयः सङ्कल्पो यस्य तत् तादृशं भवतु मन्मनासि सदा धर्म एव भवतु न कदाचित्पापमित्यर्थः । तत्किम् ? यत् मनो जाग्रतः पुरुषस्य दूरमुदैति उद्गच्छति चक्षुराद्यपेक्षया मनो दूरगामीत्यर्थः । यच्च दैवं दीव्यति प्रकाशते देवो विज्ञानात्मा तत्र भवं दैवमात्मग्राहकमित्यर्थः मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवमिति श्रुतेः । तत् उ यदः स्थाने तच्छब्दः उकारश्चार्थः । यच्च मनः सुप्तस्य पुंसः तथैव एति यथा गतं तथैव पुनरागच्छति स्वापकाले सुषुप्तावस्थायां पुनरागच्छति । यच्च दूरङ्गमं दूरं गच्छतीति दूरङ्गमम् खश्प्रत्ययः अतीतानागतवर्त्तमानविप्रकृष्टव्यवहितपदार्थानां ग्राहकमित्यर्थः । यच्च मनो ज्योतिषां प्रकाशकानां श्रोत्रादीन्द्रियाणामेकमेव ज्योतिः प्रकाशकं प्रवर्त्तकमित्यर्थः प्रवर्तितान्येव श्रोत्रादीन्द्रियाणि स्वविषये प्रवर्त्तन्ते । आत्मा मनसा संयुज्यते मन इन्द्रियेणेन्द्रियमर्थेनेति न्यायोक्तेर्मनः सम्बन्धमन्तरा तेषामप्रवृत्तेः । तादृशं मे मनः शान्तसङ्कल्पमस्तु ॥ १ ॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः । यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु ॥ २ ॥

(१)येन कर्माणि । येन मनसा सता कर्माणि । अपसः अप

(१) अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । येन कर्माणि । येन मनसा सता कर्माणि अपसः अप इति कर्मनाम अपस्विना कर्मवन्तः मनीषिणो मेधाविनो यज्ञे कृण्वन्ति कुर्वन्ति विदथेषु वेदनेषु यज्ञहविर्विज्ञानेषु धीराः धीमन्तः यच्च

इति कर्मनाम तद्धितलोपः । अपस्विनः कर्मवतः । मनीषिणः मेधाविनः । यज्ञे कृण्वन्ति कुर्वन्ति । विदथेषु वेदनेषु यज्ञविधिविज्ञानेषु धीराः धीमन्तः । यच्च अपूर्वम् । न विद्यते पूर्वमिन्द्रियं यस्मात्तदपूर्वम् यद्वा अपूर्वमनपरम् यच्च अन्तर्मध्ये प्रजानामास्ते । तन्मे मन इति व्याख्यातम् ॥ २ ॥

मनीषिणः मेधाविनः यज्ञे येन मनसा सता कर्माणि कृण्वन्ति कृ करणे स्वादिः मनःस्वास्थ्यं विना कर्माप्रवृत्तेः । केषु सत्सु विदथेषु ज्ञानेषु सत्सु विद्यन्ते ? ज्ञायन्ते तानि विदथानि तेषु वेत्तरौणादिकोऽथप्रत्ययः प्रत्ययोदात्तत्वेन मध्योदात्तं पदम् प्रत्ययः परश्च आद्युदात्तश्चेति पाणिन्युक्तेः ( पा० ३,१, १–३ ) यज्ञसम्बन्धिनां हविरादिपदार्थानां ज्ञानेषु सत्स्वित्यर्थः । कीदृशा मनीषिणः ? अपसः अप इति कर्मनाम ( निघ० २, १, १ ) अपो विद्यते येषां ते अपस्विनः कर्मवन्तः अस्मायामेधास्रजो विनिरिति ( पा० ५, २१२ १ ) विन्प्रत्ययः विन्मतोर्लुगितीष्ठाभावेऽपि छान्दसो विनो लुक् ( पा० ५, ३, ६५ ) सदा कर्मनिष्ठा इत्यर्थः । तथा धीराः धीमन्तः धीर्विद्यते येषां ते धीराः कर्मण्यण् ( पा० ३, २, १ ) । यच्च मनः अपूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात् तदपूर्वम् । इन्द्रियेभ्यः पूर्वं मनसः सृष्टेः यद्वा अपूर्वमनपरमबाह्यमित्युक्तेरपूर्वमात्मरूपमित्यर्थः । यच्च यक्षं यष्टुं शक्तं यक्षम् यजतेरौणादिकः सन्प्रत्ययः ञ्नित्यादिर्नित्यमिति ( पा० ६, १, १९७ ) आद्युदात्तं पदम् । यच्च प्रजायन्ते इति प्रजास्तासां प्राणिमात्राणामन्तः शरीरमध्ये आस्ते इतरेन्द्रियाणि बहिःष्ठानि मनस्त्वन्तरिन्द्रियमित्यर्थः । तत् तादृशं मे मनः शिवसङ्कल्पमास्त्विति व्याख्यातम् ॥ २ ॥

यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु । यस्मान्न ऋते किं चन कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु ॥ ३ ॥

---

अपूर्वं न विद्यते पूर्वमिन्द्रियं यस्मात् तदपूर्वं यद्वा अपूर्वमनपरम् । यच्च यक्षं पूज्यं यच्च अन्तर्मध्ये प्रजानामास्ते तन्मे मन इति व्याख्यातम् ॥२॥

(१)यत्प्रज्ञानम् यन्मनः प्रज्ञानं विशेषप्रतिपत्तिप्रज्ञाम् । उत अपिच चेतः ।सामान्यप्रतिपत्तिचेतः धृतिश्च प्रसिद्धा । यन्मनः अन्तर्ज्योतिरमृतश्च प्रजासु । यस्मान्न ऋते येन च विना न किञ्चन कर्म क्रियते । तन्मे मन इति व्याख्यातम् ॥ ३ ॥

यत् मनः प्रज्ञानं विशेषेण ज्ञानजनकम् प्रकर्षेण ज्ञायते येन तत् प्रज्ञानम् करणाधिकरणयोश्चेति ( पा० ३, ३, ११७ ) करणे ल्युट्प्रत्ययः । उत अपि यत् मनः चेतः चेतयति सम्यक् ज्ञापयति तच्चेतः चिती संज्ञाने अस्मात् ण्यन्तादसुन्प्रत्ययः सामान्यविशेषज्ञानजनकमित्यर्थः । यच्च मनो धृतिर्धैर्य्यरूपम् मनस्येव धैर्योत्पत्तेर्मनसि धैर्य्यमुपचर्य्यते कार्य्यकारणयोरभेदात् । यच्च मनः प्रजासु जनेषु अन्तर्वर्त्तमानं सत् ज्योतिः प्रकाशकं सर्वेन्द्रियाणाम् उक्तमपि पुनरुच्यते आदरार्थम् अभ्यासे भूयांसमर्थं मन्यन्त इति ( निरु० १०, ४२ ) यास्कोक्तेः । यच्चामृतममरणधर्मि आत्मरूपत्वात् । यस्मान्मनसः ऋते यन्मनो विना किञ्चन किमपि कर्म न क्रियते जनैः सर्वकर्मसु प्राणिनां मनः पूर्वं प्रवृत्तेर्मनः स्वास्थ्यं विना कर्माभावादित्यर्थः । अन्यारादितरर्त्ते इत्यादिना ( पा० २, ३, २९ ) यस्मादिति ऋतेयोगे पञ्चमी । तन्मे मन इति व्याख्यातम् ॥ ३ ॥

येनेदं भूतं भुवनं भविष्यत्परिगृहीतममृतेन सर्वम् । येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु ॥ ४ ॥

(२)येनेदम् । येन मनसा इदं भूतं भूतकालम् । भुवनं वर्त्त-

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । यत्प्रज्ञानम् । यन्मनः प्रज्ञानं विशेषप्रतिप्रत्तिः उत चेतः । अपि चेतः सामान्यप्रतिपत्तिः । धृतिश्च प्रसिद्धा यन्मनो अन्वज्योतिः अमृतं च प्रजासु यस्मान्न कृतो येन च विना न किञ्चन कर्म क्रियते तन्मे मन इति व्याख्यातम् ॥ ३ ॥

(२) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०

मानकालम् । भविष्यत्कालश्च । परिगृहीतम् । अमृतेन सर्वम् । येन च मनसा यज्ञस्तायते तन्यते सप्त होता । सप्तहोतारो ह्यग्निष्टोमे भवन्ति । तन्मे मन इति व्याख्यातम् ॥ ४ ॥

येन मनसा इदं सर्वं परिगृहीतम् परितः सर्वतो ज्ञानम् । इदं किम्भूतम् ? भूतकालसम्बन्धि वस्तु । भुवनं भवतीति भुवनम् भवतेः क्युप्रत्ययः वर्त्तमानकालसम्बन्धि । भविष्यत् लृटः सद्वेति ( पा० ३, ३, १४ ) शतृप्रत्ययः तौ सदित्युक्तेः ( पा० ३, २, १२७ )। त्रिकालसम्बद्धवस्तुषु मनः प्रवर्त्तत इत्यर्थः श्रोत्रादीनि तु प्रत्यक्षमेव गृह्णन्ति । कीदृशेन येन ? अमृतेन शाश्वतेन मुक्तिपर्य्यन्तम् श्रोत्रादीनि नश्यन्ति मनस्त्वनश्वरमित्यर्थः । येन च मनसा यज्ञोऽग्निष्टोमादिः तायते विस्तार्यते तनोतेर्यकीति ( पा० ६, ४, ४४ ) आकारः । कीदृशो यज्ञः ? सप्तहोता सप्त होता देवानामाह्वातारो होतृमैत्रावरुणादयो यत्र स सप्तहोता अग्निष्टोमे सप्त होतारो भवन्ति । तन्मे मनः इति व्याख्यातम् ॥ ४ ॥

यस्मिन्नृचः साम यजूᳬंषि यस्मिन् प्रतिं ष्ठिता रथनाभाविंवाराः । यस्मिँश्चित्तᳬं सर्वमोतं प्रजानां तन्मे मनः शि वसंङ्कल्पमस्तु ॥ ५ ॥

यस्मिन्नृचः यस्मिन्मनसि ऋचः प्रतिष्ठिताः । यस्मिन्सा-

नास्ति तद्यथा । येनेदम् । येन मनसा इदं भूतं भूतकालं भुवनं वर्तमानकालं भविष्यत्कालं च परिगृहीतं सर्वतो गृहीतम् अमृतेन सर्वं येन च मनसा यज्ञस्तायते तन्यते सप्तहोता सप्तहोतारोऽग्निष्टोमे भवन्ति तन्मे मन इति तुल्यम् ॥ ४ ॥

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । यस्मिन्मनसि ऋचः प्रतिष्ठिता यस्मिन् सामानि प्रतिष्ठितानि यस्मिन् यजूंषि प्रतिष्ठितानि कथमिव रथनाभौ इव अराः यस्मिन्नृचि तं संज्ञानं सर्वं तस्य तस्यार्थस्य ओतं निक्षिप्तं तन्तुसन्ततमिव कृतं प्रजानां तन्मे मन इति समानम् ॥ ५ ॥

मानि प्रतिष्ठितानि । यस्मिन् यजूंषि प्रतिष्ठितानि । कथमिव । रथनाभौ इव आराः । यस्मिन् चित्तं संज्ञानम् सर्वम् तस्य तस्यार्थस्य । ओतन्निक्षिप्तम् तन्तुसंततमिव कृतम् प्रजानाम् । तन्मे मन इति व्याख्यातम् ॥ ५ ॥

यस्मिन् मनसि ऋचः प्रतिष्ठिताः यस्मिन् साम सामानि प्रतिष्ठितानि यस्मिन् यजूंषि प्रतिष्ठितानि । मनसः स्वास्थ्ये एव वेदत्रयीस्फुर्त्तेर्मनसि शब्दमात्रस्य प्रतिष्ठितत्वम् अन्नमयं हि सोम्य मन इति छान्दोग्ये मनस एव स्वास्थ्ये वेदोच्चारणशक्तिः प्रतिपादिता । तत्र दृष्टान्तः रथनाभौ आराः इव यथा आराः रथचक्रनाभौ मध्ये प्रतिष्ठितास्तद्वच्छब्दजालं मनसि । किञ्च प्रजानां सर्वं चित्तं ज्ञानम् सर्वपदार्थविषयि ज्ञानं यस्मिन् मनसि ओतं प्रोतं निक्षिप्तम् तन्तुसन्ततिः पटे इव सर्वं ज्ञानं मनसि निहितम् मनः स्वास्थ्ये एव ज्ञानोत्पत्तिर्मनोवैयाग्र्ये ज्ञानाभावः । तन्मे मनः शिवसङ्कल्पं शान्तव्यापारमस्तु ॥ ५ ॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव । हृत्प्रतिष्ठं यदजिरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ॥ ६ ॥

(१)सुषारथिः ।यन्मनः मनुष्यान् ।नेनीयते अत्यर्थन्नयति । कथमिव सुषारथिः कल्याणसारथिः अश्वान् इव । यन्मनु-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । सुषारथिः । यन्मे मनो मनुष्यान् नेनीयते मनुष्यानत्यर्थं नयति कथमिव कल्याणसारथिरश्वानिव प्राजकेन यच्च मनः सुसारथिरिव अभीशुभिः प्रग्रहैः वाजिन इव वेजनवतोऽश्वानिव यमयतीति शेषः । द्वे उपमे एकत्र नयनम् अन्यत्र नियमनमर्थः । यच्च हृत्प्रतिष्ठितं तत्रोपलब्धेः यच्चाजिरं जरारहितम् । यज्जविष्ठम् अतिशयेन गन्तृ न वै वातात् किञ्च नाशीयोऽस्ति न मनसः किञ्चनाशीयोऽस्ति इति श्रुतिः तन्मे मन इति तुल्यम् ॥ ६ ॥

ऽयान्। यच्च मनः सुषारथिरिव । अभीशुभिः प्रग्रहैः वाजिन इव वेजनवतोऽश्वानिव । यमयतीति शेषः। द्वे उपमे एकत्र नयनमन्यत्र नियमनमर्थः यच्च हृत्प्रतिष्ठम्। तत्रोपलब्धेः। यच्च अजिरञ्जराराहितम् यच्च जविष्ठम् । अतिशयेन गन्तृ। तन्मे मनः शिवसंकल्पमस्तु ॥ ६ ॥

यत् मनो मनुष्यान्नेनीयते अत्यर्थमितस्ततो नयति नयतेः क्रियासमभिहारे यङ् मनःप्रेरिता एव प्राणिनः प्रवर्त्तन्ते मनुष्यग्रहणं प्राणिमात्रोपलक्षकम्। तत्र दृष्टान्तः सुषारथिः अश्वानिव शोभनः सारथिर्यन्ता यथा कशया अश्वान् नेनीयते। द्वितीयो दृष्टान्तः अभीशुभिर्वाजिन इव यथा सुसारथिरभीशुभिः प्रग्रहैः वाजिनोऽश्वान्नेनीयत इत्यनुषङ्गः रश्मिभिर्नियच्छतीत्यर्थः । उपमाद्वयम् प्रथमायां नयनं द्वितीयायां नियमनम् तथा मनः प्रवर्त्तयति नियच्छति च नरानित्यर्थः। यच्च मनः हृत्प्रतिष्ठं हृदि प्रतिष्ठा स्थितिर्यस्य तत् हृद्येव मन उपलभ्यते। यच्च मनः अजिरं जराराहितम् बाल्ययौवनस्थविरेषु मनसस्तदवस्थत्वात्। यच्च जविष्ठम् अतिजववद्वेगवत् जविष्ठम् न वै वातात्किञ्चनाशीयोऽस्ति न मनसः किञ्चनाशीयोऽस्तीति श्रुतेः। तन्म इत्युक्तम् ॥ ६ ॥

पितुं नु स्तोषं महो धर्माणं तविषीम्। यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥ ७ ॥

(१) पितुन्नु। अन्नस्तुतिः । उष्णिगनुष्टुब्गर्भा। द्विती-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। पितुं नु। अन्नस्तुतिः। उष्णिक् द्वितीयोऽर्धर्चः प्रथमः स्यात् यद्योगात् यस्य पितोः अन्नस्य त्रितः इन्द्रः त्रिस्थानः। ओजसा बलेन वृत्रं विपर्वाणं विगतसंधिबन्धनं कृत्वार्दयन् व्यर्दयन् विविधमर्दितवान् तं पितुमन्नमित्यर्थः । स्तौषं स्तौमि महः महतो धर्माणं धारयितारं तविषीं तविष्या इति विभक्तिव्यत्ययः। तविषीति बलनाम। तवतेर्वृद्धिकर्मणः बलस्य ॥ ७ ॥

योऽर्द्धर्चः प्रथमं व्याख्यायते यच्छब्दयोगात् यस्य पितोः अ-न्यस्य त्रितः त्रिस्थानः इन्द्रः ओजसा बलेन । वृत्रम् । विपर्वं विपर्वाणम् विगतसन्धिबन्धनं कृत्वा । व्यमर्दयत् विविधं म-र्दितवान् । तम् पितुम् अन्नम् नुरनर्थकः । स्तोषं स्तौमि । मह: महतः धर्माणन्धारयितारम् । तविषीम् तविष्याः इति विभक्ति-व्यत्ययः । तविषीति बलनाम । तवतेर्वृद्धिकर्मणः बलस्य ॥ ७ ॥

उष्णिक् अन्नस्तुतिः । तं पितुमन्नं स्तौमि । किम्भूतम् ? महो महसः तविषीं ताविष्याः बलस्य धर्माणं धारयितारम् तविषीति बलनाम ( निघ० २, ९ ) विभक्तिव्यत्ययः अन्नेनैव बलोत्पत्तेः । तं कम् यस्य पितोरोजसा बलेन त्रिस्थान इन्द्रः वृत्रं दैत्यं विपर्वं विगतसम्बन्धनं कृत्वा वि अर्दयत् विविधमर्दितवान् इन्द्रेण वृत्रोऽन्नबलेनैव हत इत्यर्थः ॥ स्तोषं स्तौमि मिपि इतश्च लोपः परस्मैपदेष्विति (पा० ३, ४, ९७) इकारलोपे लेटोऽडाटाविति (पा० ३, ४, ९४ ) अडागमे सिब्बहुलं लेटीति ( पा० ३, १, ३४ ) सिप्प्रत्यये गुणे च रूपम् । महः महच्छब्दस्य ङसि छान्दसष्टिलोपः । धर्माणम् धरतेर्मन् । विपर्वम् विगतानि पर्वाणि यस्य तम् डप्रत्यये टिलोपः । अर्दयत् बहुलं छन्दस्यमाङ्योगेऽपीति ( पा० ६, ४, ७५ ) अडभावः । व्यवहिताश्चेति ( पा० १, ४, ८२ ) वेरुपसर्गस्य व्यवधानम् ॥७॥

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि । क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥ ८ ॥

(१)अन्वित् । चतस्रोऽनुष्टुभः । अनुमन्यासै अनुमन्यस्व ।

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति तद्यथा । अन्वित् । चतस्रोऽनुष्टुभः । हे अनुमते अनुमन्यासै अनुमन्यस्व इदिति निपातः । हे अनुमते त्वं च शं सुखं नः अस्माकं कृधि कुरु क्रत्वे क्रतवे संकल्पाय दक्षाय च तत्समृद्धये च संकल्प सिद्धाय च नः अस्मान् हिनु गमय प्रतारिषः प्रवर्द्धय च नः अस्माकमायूंषि ॥ ८ ॥

इदिति निपातः पादपूरणः । हे अनुमते । त्वम् । शं च सुखं च नः अस्माकम् कृधि कुरु हे अनुमते । क्रत्वे क्रतवे संकल्पाय । दक्षाय तत्समृद्धये संकल्पसिद्धये च । नः अस्मान् हिनु गमय । प्र ण आयूंषि तारिषः । प्रतारिषः प्रवर्द्धय च नः अस्माकमायूंषि ॥ ८ ॥

चतस्रोऽनुष्टुभः द्वयोरनुमतिर्देवता । इत् निपातोऽनर्थकः हे अनुमते ! त्वमनुमन्यासै अनुमन्यस्वास्मदुक्तं बुध्यस्व नोऽस्माकं शं च शमेव सुखमेव कृधि कुरु । च पुनः नोऽस्माकं क्रत्वे क्रतवे सङ्कल्पाय दक्षाय तत्समृद्धये सङ्कल्पसिद्धये च नोऽस्मान् हिनु गमय नोऽस्माकमायूंषि प्रतारिषः प्रतारय वर्धय । लेटोऽडाटाविति ( पा० ३, ४, ९४ ) आट् वैतोऽन्यत्रेति ( पा० ३, ४, ९६ ) ऐकारः । कृधि श्रुशृणुपृकृवृभ्यश्छन्दसीति ( पा० ६, ४, १०२ ) हेर्धिः बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुक् । क्रत्वे गुणाभावे यणादेशः । तारिषः सिब्बहुलं छन्दसि णिद्वक्तव्य इति ( पा०३,२,३४ वा०३ ) वृद्धिः अन्यत् पूर्ववत् प्रपूर्वस्तरतिर्वृद्ध्यर्थः ॥ ८ ॥

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ॥ ९ ॥

(१) अनु नः । अनुमन्यताम् । नः अस्माकम् अद्य अनुमतिः यज्ञम् देवेषु यज्ञियेषु । अग्निश्च अनुमन्यताम् । हव्यवाहनः हविषो वोढा । भवतं भवतामिति पुरुषव्यत्ययः । दाशुषे हवींषि दत्तवते यजमानाय । मयः सुखरूपौ ॥ ९ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । अनु नः । अनुमन्यतां नः अस्माकमद्य अनुमतिर्यज्ञं देवेषु यज्ञियेषु अग्निश्च अनुमन्यतां हव्यवाहनः हविषो वोढा भवतम् भवतामिति पुरुषव्यत्ययः । दाशुषे हवींषि दत्तवते यजमानाय मयः सुखरूपौ अनुमत्यग्नी ॥ ९ ॥

अनुमतिः अद्य नोऽस्माकं यज्ञं देवेषु यज्ञियेषु अनुमन्यताम् अग्निश्च यज्ञं देवेषु अनुमन्यताम् । किम्भूतोऽग्निः ? हव्यवाहनः हविषो वोढा । किञ्च दाशुषे हवींषि दत्तवते यजमानाय मयः सुखरूपौ अनुमत्यग्नी भवतं भवतामिति पुरुषव्यत्ययः । हव्यं वहतीति हव्यवाहनः हव्येऽनन्तः पादमिति ( पा० ३, २, ६६ ) वहेण्र्युट् । दाशुषे दाश्वान् साह्वानिति ( पा० ६, १, १२ ) साधुः ॥ ९ ॥

सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्यमाहुतं प्रजां देवि दिदिड्ढि नः ॥ १० ॥

(१) सिनीवाली । सिनीवालि देवपत्नी । हे सिनीवालि । हे पृथुष्टुके पृथुसंयमितकेशभारे । महास्तुतिर्वा पृथुष्टुका । या त्वं देवानाम् असि भवसि स्वसा भगिनी । तां त्वां ब्रवीमि । जुषस्व प्रीत्या परिगृह्णीष्व हव्यं हविः । आहुतमभिहुत मग्नौ । प्रजां च हे देवि दिदिड्ढि । दिश अतिसृज देहि नः अस्मभ्यम् ॥ १० ॥

सिनीवाली देवता । हे सिनीवालि ! हे पृथुष्टुके ! स्तुकं केशभारः स्तुतिः कामो वा हे पृथुकेशभारे ! महास्तुते वा पृथुकामे वा या त्वं देवानां स्वसा असि भगिनी भवसि सा त्वमाहुतं हव्यं जुषस्व प्रीत्या गृह्णीष्व हे देवि ! नोऽस्मभ्यं प्रजां च दिदिड्ढि दिश देहि बहुलं छन्दसीति ( पा० २, ४, ७६ ) दिशतेः शपः श्लुः ततो द्वित्वादि ॥ १० ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । सिनीवालि । पृथुष्टुके सिनीवाली देवपत्नी हे सिनीवालि हे पृथुष्टुके पृथुकेशं संयमितपृथुकेशभारे महास्तुते वा पृथुष्टुके पृथुकामे वा या त्वं देवानां भवसि सत्या स्वसा भगिनी तां त्वां ब्रवीमि जुषस्व प्रीत्या परिगृह्णीष्व हव्यं हविः आहुतम् आभहुतम् अग्नौ प्रजां च हे देवि दिदिवि दिश अति सृज देहि नः अस्मभ्यम् ॥ १० ॥

पञ्च नद्यः सरस्वतीमपियन्ति सस्रोतसः । सरस्वती तु पञ्चधा सो देशेऽभवत्सरित् ॥ ११ ॥

(१) पञ्च नद्यः सरस्वतीम् । नदी देवतायाः पञ्च नद्यः दृषद्वती शतद्रूश्चन्द्रभागा विपाशेरावतीत्यादिकाः । सरस्वतीम् अपियन्ति अपिगच्छन्ति । सस्रोतसः समानानि स्रोतांसि यासां तास्तथोक्ताः । सरस्वती तु । तुशब्दोऽवधारणार्थः । सरस्वत्येव पञ्चधा । सो सा च स्वदेशेऽभवत् भवति सरित् नदी । तस्यां हि सारस्वतानि सत्राणि भवन्ति ॥ ११ ॥

सरस्वतीनदीदेवत्या । याः दृषद्वत्याद्याः पञ्च नद्यः सरस्वतीमपियन्ति गच्छन्ति किम्भूताः ? सस्रोतसः समानं स्रोतः प्रवाहो यासां ताः । तुरवधारणे सा उ सैव सरस्वत्येव पञ्चधा देशे सरिन्नदी अभवत् पञ्चापि स्वनामानि त्यक्त्वा सरस्वत्येवाभवत् ॥ ११ ॥

त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा । तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥ १२ ॥

(२) त्वमग्ने । चतस्र आग्नेय्यः । द्वे जगत्यौ त्रिष्टुबनु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । पञ्च नद्यः । सरस्वती नदी देवतायाः पञ्च नद्यः दृषद्वती आदिकाः सरस्वतीम् अपियन्ति गच्छन्ति सस्रोतसः समानानि स्रोतांसि यासां तास्तथोक्ताः सरस्वती तु शब्दोऽवधारणार्थः । सरस्वत्येव सो सा पञ्चधा सा च स्वे देशे अभवत् भवति सरिन्नदी तस्यां हि सारस्वतानि सत्राणि भवन्ति ॥ ११ ॥

(२) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । त्वमग्ने । चतस्रः आग्नेय्यः । द्वे जगत्यौ अन्ये त्रिष्टुबनुष्टुभौ । हे अग्ने त्वं च प्रथमः आद्यः अङ्गिरा ऋषिः अभवः त्वं च प्रथमः देवः देवानामभवः शिवः कल्याणः सखा समान-

ष्टुभौ। हे अग्ने त्वम्प्रथम आद्यः अङ्गिराः ऋषिः अभवः। त्वं च प्रथमः देवः देवानामभवः। शिवः कल्याणः सखा समनख्यानः। किञ्च तव व्रते कर्मणि वर्त्तमानाः कवयः क्रान्तदर्शनाः। विद्मना अपसः अप इति कर्मनाम। विदितकर्माणः। अजायन्त संवृताः मरुतः। भ्राजन्त्यः ऋष्टयः खड्गा येषां ते भ्राजदृष्टयः। यो हि शत्रून् जयति भ्राजन्ते तस्यायुधानि ॥१२॥

चतस्र आग्नेय्यः द्वे जगत्यौ अन्ये त्रिष्टुबनुष्टुभौ। हे अग्ने! त्वं देवानां प्रथमः सखा अभवः भूतोऽसि आद्यो मित्रभूतो देवानां त्वमेवेत्यर्थः। किम्भूतस्त्वम्? अङ्गिराः अङ्गानां रसः यद्वा अङ्गिभ्य आत्मभ्यो यजमानेभ्यो राति सुखमित्यङ्गिराः। ऋषिर्द्रष्टा। देवो द्योतमानः। शिवः कल्याणः। किञ्च तव व्रते कर्मणि वर्त्तमाने मरुतः ईदृशा अजायन्त। कीदृशः? कवय क्रान्तदर्शिनः। विद्मनापसः अप इति कर्मनाम ( निघ० २, १, १ ) विद्मना विदितानि अपांसि कर्माणि यैस्ते विद्मनापसः विदितकर्माणः। भ्राजदृष्टयः भ्राजन्त्यः शोभमानाः ऋष्टयः आयुधानि येषां ते तथा शत्रुघातकत्वात्। विद्मनेति वेत्तेः कर्मणि मनिन्प्रत्ययः बहुलग्रहणात् ततो विभक्तेराकारः तस्य चालुक् विद्मनापसः। अजायन्त जनेर्लङ्जादेशश्च श्यन् ॥ १२ ॥

त्वं नो॑ अग्ने॒ तव॑ देव पा॒युभि॑र्म॒घोनो॑ रक्ष॒ तन्व॑श्च

वन्द्य। त्रा॒ता तो॒कस्य॒ तन॑ये॒ गवा॑म॒स्यनि॑मेष॒ꣳ रक्ष॑माण॒स्तव॑ व्र॒ते ॥ १३ ॥

ख्यानः। किञ्च तव व्रते कर्मणि वर्त्तमानाः कवयः क्रान्तदर्शिनो विद्मना अपसः अप इति कर्मनाम विदितकर्माणः। अजायन्त संवृत्ताः मरुतः भ्राजदृष्टयः भ्राजन्त्य ऋष्टयो येषां ते तथोक्ताः। यो हि शत्रुं जयति तस्य भ्राजन्ते आयुधानि ॥ १२ ॥

(१) त्वन्नः । विषमोऽयं मन्त्रः साध्याहारः । त्वं नः अ-स्माकम् हे अग्ने आश्रय इति शेषः । अथैवं सति । तव हे देव । पायुभिः पालनैः । धैर्य्यावलम्बिभिः पालिताः सन्तः आस्महे । किञ्च मघोनो रक्ष धनानि रक्ष । तन्वः शरीराणि च र-क्ष । हे वन्द्य वन्दितव्य । कस्मात्पुनस्त्वमेवमुच्यसे । यतः स्व-भावत एव त्राता तोकस्य पुत्रस्य । तनये तनयस्य पौत्रस्य च । गवां च असि । कथम् । अनिमेषम् रक्षमाणः । प्रमादमकुर्वन् रक्षमाणः । एवं चेत् मृदुहृदयतमोऽसि । तव व्रते तव कर्मणि वयं स्याम । अन्या देवताः परित्यज्य त्वामेव परिचराम इत्य-भिप्रायः ॥ १३ ॥

रक्षणार्थो मन्त्रः । हे अग्ने ! हे देव द्योतमान ! हे वन्द्य स्तुत्य ! तव व्रते कर्मणि वर्त्तमानान्मघोनो धनवतो यजमानान् रक्ष पालय । नोऽस्माकं तन्वः शरीराणि च रक्ष । कैः ? तव पायुभिः त्वदीयैः पा-लनैः यतस्त्वमनिमेषं सावधानं रक्षमाणः पालयन् सन् तोकस्य त-नये विभक्तिव्यत्ययः तनयस्य पौत्रस्य गवां च त्राता रक्षकोऽसि ॥१३॥

उत्तानायामवंभरा चिकित्वान् सद्यः प्रवीता

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । त्वं नः । रक्षणविषयो मन्त्रः । साध्याहारः त्वन्नः अस्माकं हे अग्ने आश्रय इति शेषः । अथैवं सति तव हे देव पायु-भिः पालनैः वैर्यावलम्बिभिः पालिताः सन्तः आस्महे किञ्च मघो-नो धनवतो वचनानि रक्ष तन्वः । शरीराणि च रक्ष । हे वन्द्य वन्दितव्य । कस्मात् पुनस्त्वमेवमुच्यसे यस्मात् यतः स्वभावतः अवत्राता तोकस्य पुत्रस्य तनयस्य पौत्रस्य च गवां चासि । क-थम् अनिमेषं रक्षमाणः अप्रमादं कुर्वन् रक्षमाणः एवं चेत् मृदुहृद-यतमोऽसि तर्हि तव व्रते कर्मणि वयं स्याम अन्यदेवताः परित्यज्य त्वामेव परिचराम इत्यभिप्रायः ॥ १३ ॥

वृषणं जजान । अरुषस्तूपो रुशदस्य पाज इडायास्पुत्रो वयुनेऽजनिष्ट ॥ १४ ॥

(१) उत्तानायामव । द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते योग्यत्वात् । योऽयम् अरुषस्तूपः । ज्वालासंघातमूर्तिः । यस्य चास्य रुशत्पाजः दीप्तं बलम् । यश्च इडायाः पृथिव्याः पुत्रः । यश्च वयुने प्रज्ञाने कर्त्तव्ये अजनिष्ट जातः तमग्निम् । उत्तानायाम् अवभर अरण्याम् अवाचीनं हर । चिकित्वान् जानानः अरण्यावीर्यमिति शेषः । किन्तद्वीर्यमिति चेत् । सद्यः प्रवीता वृषणं जजान । सद्य एव प्रवीता कामिता सती वृषणं वर्षितारं सेक्तारं युवानं सर्वकर्मक्षमं जनयतीति ॥ १४ ॥

यः इडायाः पृथिव्याः पुत्रोऽग्निर्वयुने प्रज्ञाने कर्त्तव्ये अजनिष्ट जातः । किम्भूतः ? अरुषस्तूपः रुष बधे रोषति रुषः अरुषोऽहिंसकः स्तूपो ज्वालोच्छ्रायो यस्य स तथा ष्टुप उच्छ्राये । अवाचीनं हर द्व्यचोऽतस्तिङ इति ( पा० ६, ३, १३५ ) दीर्घः । चिकित्वान् अरणिबलं जानन् किं बलमिति चेत् यारणिः प्रवीता कामिता सती वृषणं सेक्तारमग्निं सद्यः तत्कालं जजान जनयति छन्दसि लुङ्लङ्लिट इति ( पा० ३, ४, ६ ) लिट् । सोऽग्निर्जात इत्यर्थः ॥ १४ ॥

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि । जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥ १५ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । उत्तानायाम् । द्वितीयोऽर्धर्चः । प्रथमो व्याख्यायत योऽयम् अरुषस्तूपः ज्वालासंघातमूर्त्तिर्यस्य चास्य रुशन् पाजः दीप्तं बलं यश्च इडायाः पृथिव्याः पुत्रः यश्च वयुने प्रज्ञाने कर्तव्ये अजनिष्ट जातः तमग्निम उत्तानायाम् अरण्याम् अवभर अवाचीनं हर चिकित्वान् जानानः अरण्या वीर्यमिति शेषः । तत् किं वीर्यमिति चेत् । सद्यः प्रवीता वृषणं जजान सद्य एव प्रवीता कामिता सती वृषणं वर्षितारं सेक्तारं युवानं सर्वकर्मक्षमं जनयति ॥ १४ ॥

(१) इडायास्त्वा । इडायाः पृथिव्याः त्वाम् । पदे देवयजनाख्ये । वयम् नाभा नाभौ पृथिव्या अधि । उत्तरवेद्या मध्ये नाभिका भवति तद्विषयमेतत् । हे जातवेदः जातप्रज्ञान निधीमहि स्थापयामः । हे अग्ने हव्याय वोढवे हविषो वहनाय ॥ १५ ॥

हे जातवेदः ! जातप्रज्ञान ! हे अग्ने ! इडायाः पृथिव्याः स्थाने देवयजनाख्ये पृथिव्या नाभा अधि उत्तरवेद्या मध्ये वयं त्वा त्वां निधीमहि स्थापयामः । किमर्थम् हव्याय वोढवे हव्यं वोढुम् विभक्तिव्यत्ययः वहतेस्तुमर्थे सेसेनिति ( पा० ३, ४, ९ ) तवेप्रत्ययः सहिवहोरिति ( पा० ६, ३, ११२ ) ओकारः ॥ १५ ॥

प्र मन्महे शवसानायं शूषमाङ्गूषं गिर्वणसे अङ्गिरस्वत् । सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुताय ॥ १६ ॥

(२) प्रमन्महे । चतस्र ऐन्द्यस्त्रिष्टुभः । प्रमन्महे प्रजानीमः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । इडायास्त्वा । इडायाः पृथिव्याः त्वा त्वां पदे देवयजनाख्ये वयं नाभा नाभौ पृथिव्याः अधि उत्तरवेद्या मध्ये नाभिका भवति तद्विषयमेतत् । हे जातवेदः जातप्रज्ञान निधीमहि स्थापयामः । हे अग्ने हव्याय वोढवे हविषो वहनाय षष्ठ्यर्थे चतुर्थी ॥ १५ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । प्रमन्महे । चतस्र ऐन्द्यस्त्रिष्टुभः प्रमन्महे प्रजानामः शवशानाय बलमाविष्कुर्वते शूषं बलम् आङ्गूषं यं स्तोमं प्रजानीमः गिर्वणसे देवाय । कथमिव अङ्गिरस्वत् अङ्गिरसा तुल्यप्रज्ञाय सुवृक्तिभिः स्तुवते सुवृक्तिभिः शोभनाभिः स्तुतिभिः । स्तुवन्तीति विभक्तिव्यत्ययः । सामर्थ्यात् ऋग्मियाय ऋङ्मयाय स्तुतिमयाय अर्चनीयाय च वयम् अर्चाम अर्कम् । उच्चारयाम मन्त्रं नरे नररूपाय विश्रुताय सौर्यबलदानादिलब्धख्यातये ॥ १६ ॥

शवसानाय । बलमाविष्कुर्वते । शूषं बलम् । आङ्गूषम् आघोषं स्तोमम् । गिर्वणसे देवाय । कथमिव । अङ्गिरस्वत् । अङ्गिरसा तुल्यप्रज्ञानाय च । सुवृक्तिभिः स्तुवते । सुवृक्तिभिः शोभनाभिः स्तुतिभिः । स्तुवन्तीति विभक्तिव्यत्ययः सामर्थ्यात् । ऋग्मियाय ऋङ्मयाय स्तुतिमयाय । अर्चनीयाय च । वयम् अर्चामः अर्कञ्च उच्चारयामः मन्त्रम् । नरे नृरूपाय । विश्रुताय । शौर्यबलदानादिलब्धख्यातये ॥ १६ ॥

चतस्र ऐन्द्र्यस्त्रिष्टुभः । वयमिन्द्राय इन्द्रार्थमाङ्गूषं स्तोमं त्रिवृदादिकं प्रमन्महे जानीमः । किम्भूतं स्तोमम् ? शूषं बलहेतुम् अर्कं मन्त्रं च अर्चाम उच्चारयाम धातूनामनेकार्थत्वादर्चतिरुच्चारणार्थः अङ्गिरस्वत् अङ्गिरस इव तैर्यथा स्तोमो ज्ञातो मन्त्रश्च पठितस्तस्मै तद्वत् । किम्भूतायेन्द्राय ? शवसानाय शवो बलमात्मन इच्छति शवस्यति शवस्यतीति शवसानः तस्मै बलमभिलषमाणाय सुप आत्मनः क्यजिति ( पा० ३, १, ८ ) क्यच् तदन्ताच्छानच् शप् बहुलं छन्दसीति ( पा० २, ४ , २७ ) तस्य लुक् छन्दस्युभयथेति ( पा० ३, ४, १ १७ ) तस्य शानचोऽप्यार्धधातुकत्वात् क्यस्य विभाषेति ( पा० ६, ४, ५० ) क्यचो लोपः शवसान इति सिध्यति। पुनः कीदृशाय । ? गिर्वणसे गिरा स्तुत्या वनयति सम्भाजयति आत्मानमभिलषितदानात् स्तोतृभ्य इति गिर्वणाः गीःशब्दोपपदाद्वनोतेर्ण्यन्तादसुनि वनेर्घटादित्वेन मित्संज्ञत्वात् ( पा० ६, ४, ९२ ) ह्रस्वत्वम् णिचो लोपः गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः यद्वा स्वार्थे णिच् गीर्भिरेनं देवा भजन्ति इति गिर्वणाः तस्मै गीर्वाणशब्देन समानार्थो गिर्वणःशब्दः । पुनः किम्भूताय ? सुवृक्तिभिः स्तुतिभिः स्तुवते स्तौतीति स्तुवत् तस्मै यजमानानिति शेषः । तदुक्तम् त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यमिति ( ६, ३७)। पुनः कीदृशाय ? ऋग्मियाय ऋग्मयाय वेदमयाय मयडर्थे छान्दसो मियट् यद्वा ऋच स्तुतावित्यस्माद्भावे औणादिको मक् कुत्वं जश्त्वम् ऋग्मः स्तुतिः तमर्हति ऋग्मियः अर्हार्थे घच् स्तुतियोग्याय । पुनः कीदृशाय ? नरे नररूपाय नृशब्दस्य ङे परे छान्दसो

गुणः । पुनः कीदृशाय ? विश्रुताय शौर्य्यदानबलादिभिर्लब्धख्यातये ॥ १६ ॥

**प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमाङ्गू॒ष्यꣳ शवसा॒नाय॒ साम॑ । येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्च॑न्तो॒ अङ्गि॑रसो॒ गा अवि॑न्दन् ॥ १७ ॥**

(१) प्र वः । सामर्थ्याद्द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते । येन साम्ना नः अस्माकम् । पूर्वे पितरः पदज्ञाः आत्मसत्तत्त्ववेदिनः । अर्चन्तः स्तुवन्तः अङ्गिरसः ऋषयः गाः अविन्दन् । आदित्यरश्मीन् लब्धवन्तः । स हि साम्नां लोकः । तत्साम । प्रभरध्वम् । आहरध्वम् । वः प्रथमाबहुवचनस्य स्थाने व आदेशः । यूयम् हे पुत्रपौत्रप्रपौत्राः । महे महते इन्द्राय । महि महत्त्वम् । नमः अन्नम् आङ्गूष्यम् स्तोमस्य च हितम् साम । प्रभरध्वम् । सवसानाय । बलमभिलषमानाय ॥ १७ ॥

महे महते शवसानाय बलमभिलषमाणायेन्द्राय महि महत् नमोऽन्नं वः यूयं प्रभरध्वं प्रहरतम् समर्पयत यूयमित्यर्थे व इत्यव्ययम् मुनीनां पुत्रादीन् प्रति वचः । आङ्गूष्यमाङ्गूषाय हितं साम प्रभरध्वमुच्चारयत । नोऽस्माकं पूर्वे पितरः अङ्गिरसः येनानेन साम्ना चार्चन्तः स्तुवन्तः सन्तः गाः सूर्य्यकिरणानविन्दन् लेभिरे स-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । प्रवः । सामर्थ्यात् । द्वितीयोऽर्धर्चः । प्रथमो व्याख्यायते येन साम्ना नोऽस्माकं पूर्वे पितरः पदज्ञाः आत्मसत्तत्त्ववेदिनः अर्चन्तः स्तुवन्तः अङ्गिरसः ऋषयः गा अविदन् । आदित्यरश्मींल्लब्धवन्तः । स हि साम्नां लोकं तत्साम प्रभरध्वम् आहरध्वं वः प्रथमाबहुवचनस्य स्थाने वसादेशः यूयं हे पुत्रपौत्रप्रपौत्राः महते इन्द्राय महि महत्त्व नमः अन्नमाङ्गूष्यस्तोमस्य च हितं साम प्रभरध्वं शवसानाय बलमभिलषमानाय ॥ १७ ॥

हि साम्नां लोकः तत्साम प्रभरध्वम् । कीदृशाः अङ्गिरसः ? पदज्ञाः पदमात्मस्वरूपं जानन्तीति पदज्ञाः ॥ १७ ॥

**इच्छन्ति त्वा सोम्यासः सखायः सुन्वन्ति सोमं दधति प्रयांꣳसि । तितिक्षन्ते अभिशस्तिं जनानामिन्द्र त्वदा कश्चन हि प्रकेतः ॥ १८ ॥**

(१)इच्छन्ति त्वा । इच्छन्ति त्वाम् । सोम्यासः सोमसंपादिनः । सखायः समानख्यानाः । कथं समानख्यानाः । श्रुतौ । द्वया वै देवाः । अथैवं देवाः । अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः ते मनुष्यदेवा इति । केन प्रकारेण इच्छन्ति । सुन्वन्ति सोमम् । अभिषुण्वन्ति सोमम् । दधति प्रयांसि । प्रय इत्यन्ननाम । धारयन्ति च हविर्लक्षणान्यन्नानि । किञ्च । तितिक्षन्ते अभिशस्तिं जनानाम् । मनोवाक्कायसंयताः क्षान्तिपराः । अभिशस्तिन्दुर्वचनं जनानां सहन्ते । अथैवं त्वामिच्छताम् हे इन्द्र । त्वत् त्वत्तः शकासात् आसमन्ताद्भावेन । कश्चन । चनो निपातोऽप्यर्थे । हिरनर्थकः ।

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । इच्छन्ति त्वा । इच्छन्ति त्वा त्वां सोम्यासः सोमसंपादिनः । सखायः समानख्यानाः । कथं समानख्यानाः श्रुतौ द्वयां वै देवा अहैव देवाः । अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवा इति केन प्रकारेणेच्छन्ति सुन्वन्ति सोममभिषुण्वन्ति सोमं दधाति प्रयांसि प्रय इति अन्ननाम धारयन्ति हविर्लक्षणानि अन्नानि । किञ्च तितिक्षन्ते अभिशस्तिं जनानां मनोवाक्कायसंयताः क्षान्तिपराः अभिशस्तिं दुर्वचनं जनानां सहन्ते । अथैवं त्वामिच्छता हे इन्द्र त्वत्सकाशात् आसमन्ताद्भावेन कश्चन चनेति निपातोऽप्यर्थे हिः अनर्थकः कोऽपि प्रकेतः ज्ञानविशेषे अत्यर्थं भवति यजमानानामिति शेषः ॥ १८ ॥

कोऽपि । प्रकेतः प्रज्ञानविशेषः । अत्यर्थं भवति । यजमानाना-मिति शेषः ॥ १८ ॥

हे इन्द्र ! त्वत् त्वत्तः सकाशात् कश्चन चनशब्दोऽप्यर्थे कोऽपि लोकोत्तरः प्रकेतः प्रकृष्टो ज्ञानविशेषः आ समन्तात् हि यतो भवति अतः सखायो विप्राः त्वामिच्छन्ति अथ ये ब्राह्मणाः शुश्रुवांसो-ऽनूचानास्ते मनुष्यदेवा इत्युक्तेर्देवानां विप्राणां च सखित्वम् । कि-म्भूताः सखायः ? सोम्यासः सोमसम्पादिनः । इच्छन्तीति कथं ज्ञा-तं तत्राह यतस्ते सोमं सुन्वन्ति अभिषुण्वन्ति प्रयांसि अन्नानि द-धति च प्रय इत्यन्ननाम ( निघ० २, ७, ३ ) हवींषि धारयन्ति । कि-ञ्च जनानामभिशस्तिं दुर्वचनं तितिक्षन्ते मनोवाक्कायसंयताः क्षा-न्तिपरा इत्यर्थः ॥ १८ ॥

न ते दूरे परमा चिद्रजांᳬस्या तु प्रयाहि हरिवो हरिभ्याम् । स्थिराय वृष्णे सवना कृतेमा युक्ता ग्रावाणः समिधाने अग्नौ ॥ १९ ॥

(१)न ते । नहि ते तव दूरेऽपि परमा परमाणि विप्रकृष्ट-देशानि । रजांसि स्थानानि । एवंचेत् । आप्रयाहि आयाहि तु तूर्णम् । हे हरिवः हरिभ्याम अश्वाभ्याम् । किमर्थम् स्थिराय दृढसौहृदाय । वृष्णे सेक्त्रे । सवना कृतेमा सवनानि कृतानि इमानि । किञ्च । युक्ताः अभिषवकर्मणि । ग्रावाणः । समिधा-

(१) अत्र वाराणसी लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । न ते दूरे । न हि ते तव दूरेऽपि परमा विप्रकृ-ष्टदेशानि रजांसि स्थानानि चित् चित् शब्दोऽस्त्यर्थे सन्ति तु एवमर्थे एवं चेत् आप्रयाहि आयाहि तूर्णं हे हरिवः हरिवन् हरि-भ्यामश्वाभ्यां किमर्थं स्थिराय दृढसौहृदाय वृष्णे सेक्त्रे सवनानि कृता कृतानि इमानि किञ्च युक्ता अभिषवकर्मणि ग्रावाणः स-मिधाने समिध्यमाने च अग्नौ आहवनीयाख्ये आहुतयो होष्यन्ते अतश्चायाहि ॥ १९ ॥

ने समिध्यमाने च अग्नौ आहवनीयाख्ये आहुतयः होष्यन्ते। अतश्च आयाहि ॥ १९ ॥

हे हरिवः! हरी अश्वौ विद्येते यस्य स हरिवान् तस्य सम्बोधनम् मतुवसोरिति ( पा० ८, ३, १ ) रुत्वम् हे हरिवः? स्थिराय दृढसौहृदाय वृष्णे सेक्त्रे तुभ्यम् इमा सवना कृता इमानि सवनानि प्रातः सवनादीनि कृतानि। क्व सति! अग्नी समिधाने समिध्यमाने सति छान्दसो यको लुक्। ग्रावाणः च युक्ताः योजिताः अभिषवकर्माणि। तुशब्दो हेत्वर्थे अतो हेतोः हरिभ्यामश्वाभ्यामा प्रयाहि आगच्छ। ननु स्वर्गात् कथमतिदूरे मया गन्तव्यमित्यत आह परमा परमाणि दूरदेशस्थानि रजांसि स्थानानि ते तव दूरे न चित् दूरे न सन्ति चित्शब्दोऽप्यर्थे अतिदूरमपि ते निकटम् अत आयाहीत्यर्थः ॥ १९ ॥

**अषाढं युत्सु पृतनासु पप्रिंꣳ स्वर्षामप्सां वृजनस्य गोपाम्। भरेषुजाꣳ सुक्षितिꣳ सुश्रवसं जयन्तं त्वामनुमदेम सोमः ॥ २० ॥**

(१) अषाढं युत्सु। अषाढम् असोढम्। युत्सु युद्धेषु। पृतनासु सैन्येषु। पप्रिम् पृ पालनपूरणयोरित्यस्यैतद्रूपं नतु प्रा पूरण इत्यस्य। पप्रिं पालनशीलम्। स्वर्षाम् स्वर्दिवं सनो-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति। तद्यथा। आषाढं युत्सु चतस्रः सौम्यः त्रिष्टुभः आषाढम् असोढम् असहनम् अनभिभूतं युत्सु युद्धेषु पृतनासु सैन्येषु पप्रिं पृ पालन इत्यस्यैतद्रूपं नतु प्रा पूरण इत्यस्य पप्रिं पालनशीलं स्वर्षां स्वर्दिवं सनोति सम्भजते अपः सनोति सम्भजते इति तथा तं वृजिनस्य बलस्य गोपा गोप्तारं भरेषुजां जयतेरेतद्रूपं न जिनातेः। संग्रामेषु जेतारं सुक्षितिं सुनिवासं सुश्रवसं कल्याणकर्मकर्तृत्वेन प्रसिद्धं जयन्तं त्वामनुमदेम मदेर्मोदनार्थस्य ग्रहणम्। परसैन्यानि जयन्तं त्वा दृष्ट्वा उत्साहवन्तो हृष्टाः स्याम हे सोम ॥२०॥

ति स तथा तम् । अप्साम् अपः सनोति संभजते स तथा तम् वृजनस्य गोपाम् । बलस्य गोप्तारम् । भरेषुजाम् । जयतेरेतद्रूपं नतु जानातेः । संग्रामेषु जेतारम् । सुक्षितिम् । सुनिवासम् । श्रवसं कल्याणकर्मैककर्तृत्वेन प्रसिद्धम् । जयन्तं त्वाम् अनुमदेम । मदेर्मोदनार्थस्य ग्रहणम् । परसैन्यानि जयन्तं त्वां दृष्ट्वा उत्साद्यन्ते तत् दृष्ट्वा प्रहृष्टाः स्याम हे सोम ॥ २० ॥

चतस्रः सोमदेवत्यास्त्रिष्टुभः । हे सोम ! त्वां जयन्तमुत्कर्षेण वर्त्तमानमनु वयं मदेम हृष्टाः स्याम । किम्भूतं त्वाम् ! युत्सु युद्धेषु अषाढमसहनमनभिभूतम् । पुनः कीदृशम् ! पृतनासु सेनासु पप्रिं पालयितारम् । स्वर्षाम् स्वर्दिवं सनोति सम्भजते स स्वर्षाः तम् । अप्साम् अपो जलानि सनोतीत्यप्साः तम् । वृजनस्य बलस्य गोपां रक्षकम् । भरेषुजां संग्रामेषु जेतारम् । सुक्षितिं सुनिवासम् । सुश्रवसं शोभनं श्रवः कीर्त्तिर्यस्य स सुश्रवाः तम् ॥ अषाढम् सह्यतेऽसौ साढः न साढः असाढस्तम् । सहेः क्तः ढत्वं (पा० ८, २, ३१ ) धत्वं ( पा० ८, २, ४० ) ष्टुत्वम् ( पा० ८, ४, ४१ ) ढो ढे लोपः ( पा० ८, ३, १२ ) ढ्लोपे पूर्वस्य दीर्घोऽणः ( पा० ६, ३, १११ ) बाहुलकात् सहिवहोरोदवर्णस्येति ( पा० ६, ३, ११२ ) अस्याप्रवृत्तिः षत्वं छान्दसम् । पप्रिम् पृ पालनपूरणयोः आदृगमहनेति ( पा० ३, २, १७१ ) किः द्वित्वादि । स्वर्षाम् स्वः पूर्वात्सनोतेर्विट् विड्वनोरनुनासिकस्यात् ( पा० ६, ४, ४१ ) एवमप्साम् । गोपायतीति गोपाः क्विप् अतो लोपः यलोपः । भरेषुजाम् भरेषु संग्रामेषु जयति शत्रूनिति भरेषुजाः हलदन्तात्सप्तम्या इति ( पा० ६, ३, ९ ) अलुक् जयतेरौणादिको डाप्रत्ययः । मदेम मदी हर्षे लिङ् व्यत्ययेन शप् ॥ २० ॥

सोमो धेनुꣳ सोमो अर्वन्तमाशुꣳ सोमो वीरं कर्मण्यं ददाति । सादन्यं विदथ्यꣳ सभेयं पितृश्रवणं यो ददाशदस्मै ॥ २१ ॥

(१) सोमो धेनुम् । सोमः धेनुन्ददाति । सोम एव अर्वन्तमश्वम् आशुं शीघ्रगतिं ददाति । सोम एव च वीरं पुत्रम् कर्मण्यं कर्माणि साधुं ददाति । तमेव विशिनष्टि । सादन्यं सदने साधुम् । विदथ्यं विदथे यज्ञे साधुम् । सभेयम् सभामर्हति सभेयस्तम् । पितृश्रवणम् पितुरनुशासने च स्थितम् विनीतमित्यर्थः । यः यजमानः ददाशत् अस्मै सोमाय हविः तस्मै सोमो धेन्वादीन्ददातीत्यभिसंबन्धः ॥ २१ ॥

यो यजमानोऽस्मै सोमाय ददाशत् ददाति हविः तस्मै सोमो धेनुं ददाति । आशुं शीघ्रमर्वन्तमश्वं च सोमो ददाति । सोमश्च तस्मै वीरं पुत्रं ददाति । कीदृशं वीरम् ? कर्मण्यं कर्माणि साधुम् । सादन्यं सदने गृहे साधुम् विदथ्यं विदथो यज्ञस्तत्र साधुम् । सभेयं सभामर्हति सभेयस्तम् । पितृश्रवणं पितरं शृणोति पितृश्रवणः पित्राज्ञाकारिणं विनीतमित्यर्थः ॥ कर्मण्यमित्यादौ तत्र साधुरिति ( पा० ४, ४, ९८ ) यत् । सभेयं ढश्छन्दसीति ( पा० ४, ४, १०६ ) सभायाः साध्वर्थे ढप्रत्ययः तस्यैयादेशः ( पा० ७, १, २ ) । ददाशत् दाशृ दाने बहुलं छन्दसीति ( पा० २, ४, ७६ ) शापः श्लुः द्वित्वम् इतश्च लोपः परस्मैपदेष्विति ( पा० ३, ४, ९७ ) तिप इलोपः लेटोऽडाटावित्यडागमः ( पा० ३, ४, ९४ ) ॥ २१ ॥

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनय-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । सोमो धेनुम् । सोमो धेनुं ददाति सोम एव अर्वन्तमश्वमाशुं शीघ्रं ददाति सोम एव वीरं पुत्रं कर्मण्यं कर्माणि साधुं ददाति तं विशिनष्टि सादन्यं सदने गृहे साधुं विदथ्यं यज्ञे साधुं सभेयं सभामर्हति सभेयस्तं पितृश्रवणं पितुरनुशासने च स्थितं विनीतमित्यर्थः । यो यजमानः ददाशत् ददाति अस्मै सोमाय हविः तस्मै सोमो धेन्वादीन् ददातीत्यभिसम्बन्धः ॥ २१ ॥

स्त्वं गाः । त्वमाततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ ॥ २२ ॥

(१) त्वमिमाः । हे सोम त्वम् इमाः ओषधीः विश्वाः सर्वाः अजनयः जनितवानसि त्वम् अपः अजनयः । त्वञ्च गाः अजनयः । त्वम् आततन्थ आततवानसि उरु विस्तीर्णमन्तरिक्षम् । त्वं ज्योतिषा वितमो ववर्थ विवृणोषि तमः । त्वमेवादित्यात्मना तमोऽपनयसि । सर्वात्मत्वेन स्तुतिः ॥ २२ ॥

हे सोम ! त्वमिमाः विश्वाः सर्वाः ओषधीः अपो जलानि गा धेनूः अजनयः जनितवानसि । त्वमुरु विस्तीर्णमन्तरिक्षमाततन्थ विस्तारितवानसि त्वञ्च ज्योतिषा तेजसा तमोऽन्धकारं विववर्थ विवृणोषि आदित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मा त्वमित्यर्थः वभूथाततन्थजगृम्भववर्थेति निगम इति ( पा० ७, २, ६४ ) निपातः ॥ २२ ॥

देवेन नो मनसा देव सोम रायो भागꣳ सहसावन्नभियुध्य । मा त्वातनदीशिषे वीर्यस्योभयेभ्यः प्रचिकित्सा गविष्टौ ॥ २३ ॥

(२)देवेन नः । दैवेनेति प्राप्ते तद्धितलोपश्छान्दसः । दैवेन

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । त्वमिमाः । हे सोम त्वमिमा ओषधीः विश्वाः सर्वाः अजनयः जननवानसि त्वमपः उदकानि अजनयः त्वं गाः अजनयः त्वमाततन्थ आततवानसि । ऊरु विस्तीर्णम् अन्तरिक्षं त्वं ज्योतिषा वितमो ववर्थ । विवृणोषि तमः त्वमेवादित्यात्मना सर्वं तमोऽपनयसीति सर्वात्मत्वेन स्तुतिः ॥ २२ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । देवेन नः । दैवेनेति प्राप्ते तद्धितलोपः छान्दसः

मनसा सह नः अस्मभ्यम् । रायो भागन्धनस्य भागम् । सहस्शब्दः बलवचनः सान्तः तत्र आकारागमश्छान्दसः । हे सहस्वन् अभियुध्य । युध्यतिर्गत्यर्थानां मध्ये पठ्यते अन्तर्भावितण्यर्थश्च गृह्यते । अभिगमय देहीत्यर्थः । एवं दानप्रवृत्तन्त्वां कश्चित्प्रतिबध्नीयादित्यत आह । मा च त्वाम् आतनत् । तनोतिः प्रतिबन्धार्थः । प्रतिबध्नातु कुतस्त्वमेवमुच्यस इति चेत् । ईशिषे वीर्यस्य यतस्त्वं स्वकीयस्य वीरकर्मणः ईशिषे ईश्वरो यस्त्वमित्यभिप्रायः । किञ्च उभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं व्याध्यपगमं कुर्वित्यभिप्रायः । गविष्टौ गोशब्देनात्र द्युलोकोऽभिप्रेतः । स्वर्गैषणायाञ्च विषयभूतायाम् अस्मान् प्रचिकित्स । दैवं मनः प्राप्य लब्धधना अरोगाश्च यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः ॥ २३ ॥

हे देव ! सोम ! हे सहसावन् ! बलवन् ! दैवेन मनसा देवसम्बन्धिना मनसा सह रायो धनस्य भागं नोऽस्मभ्यमभियुध्य युध्यतिर्गतिकर्मा अन्तर्भावितण्यर्थः अभिगमय देहीत्यर्थः । एवं दानप्रवृत्तं त्वां कश्चित् मा आतनत् त्वा त्वां मा आतनोतु मा प्रतिबध्नातु तनोतिः प्रतिबन्धार्थः । कुतस्त्वमेवमुच्यस इति चेत् यतस्त्वं वीर्य्य-

दैवेन मनसा सह नः अस्मभ्यं हे देव सोम भागं धनस्य भागं हे सहसावन् सह इति बलनाम । अत्राकारस्यागमः छान्दसः । हे सहस्विन् अभियुध्य अभियुध्यतिर्गत्यर्थानां मध्ये वर्त्तते । अन्तर्भावितण्यर्थो गृह्यते अभिगमय देहीत्यर्थः । एवं दानप्रवृत्तं त्वां काश्चित्प्रतिबध्नीयादित्यत आह मा च त्वाम् आतनत् तनोतिः प्रतिबन्धनार्थः प्रतिबध्नातु । कुतस्त्वमेवमुच्यस इति चेत् ईशिषे वीर्यस्य यतस्त्वं स्वकीयस्य वीरकर्मण ईशिषे ईश्वरो यस्त्वामित्यभिप्रायः । किञ्च उभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं व्याध्यपगमनं कुर्वित्यभिप्रायः गविष्टौ गोशब्देनात्र द्युलोकोऽभिप्रेतः स्वर्गैषणायां विषयभूतायामस्मान् चिकित्स दैवं मनः प्राप्य लब्धधना अरोगाश्च यथा स्वर्गं यास्यामः तथा कुर्विति वाक्यार्थः ॥ २३ ॥

स्य ईशिषे वीरकर्मण ईश्वरो भवसि अधीगर्थदयेशामिति ( पा० २, ३, ५२ ) कर्मणि षष्ठी । किञ्च गविष्टौ गोः स्वर्गस्य इष्टौ इच्छायां स्वर्गैषणायां विषयभूतायां सत्यामुभयेभ्यः प्रचिकित्स उभयलोकप्राप्त्यर्थं चिकित्सां कुरु व्याध्यपगमं कुरु उभयलोकप्रतिबन्धकं विघ्नं निवर्त्तयेत्यर्थः । दैवं मनः प्राप्य लब्धधना अरोगाश्च सत्कर्म कुर्वाणा यथा स्वर्गं यास्यामस्तथा कुर्विति वाक्यार्थः ॥ देवेन देवानामिदं देवम् तद्धितप्रत्ययलोपः । सहसावन् प्रथमार्थे तृतीया सहसा सहो बलमस्यास्तीति सहसावान् अलुक् । तनत् तनोतेः परस्य लेटोऽडागम इलोपश्च । चिकित्स गुप्तिज्किद्भ्यः सन् ( पा० ३, १, ५ ) अन्येषामपि दृश्यत इति ( पा० ६, ३, १३७ ) दीर्घः ॥ २३ ॥

**अ॒ष्टौ व्य॑ख्यत्क॒कुभः॑ पृथि॒व्यास्त्री धन्व॒ योज॑ना स॒प्त सिन्धू॑न् । हि॒र॒ण्या॒क्षः स॑वि॒ता दे॒व आगा॒द्दध॒द्रत्ना॑ दा॒शुषे॒ वार्या॑णि ॥ २४ ॥**

(१) अष्टौ व्यख्यत् । चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः । यः अष्टौ व्यख्यत् प्रकाशितवान्ककुभः दिशः।

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । अष्टौ व्यख्यत् । चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः यः अष्टौ व्यख्यत् प्रकाशितवान् ककुभो दिशः अष्टाविति चतस्रो दिशश्चतस्रोऽवान्तरदिशः पृथिव्याः सम्बन्धिनीः त्री धन्व त्रीणि धन्वानीति शब्दसमाधिः धन्व इत्यन्तरिक्षनाम तेन तदुपलक्षिताावितरावपि लोकौ गृह्येते छत्रिणो गच्छन्तीति यथा यश्च त्रीन् लोकान् व्यख्यत् यश्च योजना योजनगव्यूतिक्रोशादीन् परिमाणविशेषान् व्यख्यत् यश्च सप्तसिन्धून् समुद्रान् व्यख्यत् । सोऽयं हिरण्याक्षः हिरण्यसदृशाक्षः अमृतवृष्टिर्वा सविता देवता देव आ अगात् आगच्छतु किं कुर्वन्नित्यत आह दधत् स्थापयन् रत्नानि रमणीयानि धनानि दाशुषे हवींषि दत्तवते यजमानाय वार्याणि वरणीयानि ॥ २४ ॥

चतस्रो दिशः चतस्रो ऽवान्तरादिशः । पृथिव्याः संबन्धिनीः । त्री धन्व । त्रीणि धन्वानि इति शब्दसमाधिः । धन्व इत्यन्तरिक्षनाम तदुपलक्षिताावितरावपि लोकौ गृह्येते । क्षत्रिणो यान्तीति यथा । यश्च त्रीन् लोकान् व्यख्यत् । यश्च योजनान् योजनगव्यूतिक्रोशादीन् मानविशेषान् व्यख्यत् । यश्च सप्तसिन्धून् यश्च सप्तसमुद्रान् व्यख्यत् सोऽयं हिरण्याक्षः हिरण्यसदृशाक्षः अमृते दृष्टिर्वा सविता देवः आ अगात् आगच्छतु । किं कुर्वन्नित्यत आह । दधत् स्थापयन रत्नानि रत्नमयानि धनानि । दाशुषे हवींषि दत्तवते यजमानाय । वार्याणि वरणीयानि॥२४॥

चतस्रः सावित्र्यः द्वितीया जगती त्रिष्टुभोऽन्याः हिरण्यस्तूपदृष्टाः । स सविता देवः आगात् आगच्छतु इणो गा लुङीति ( पा० २, ४, ४५ ) इणो गादेशः । किं कुर्वन् ? दाशुषे हवींषि दत्तवते यजमानाय वार्य्याणि वरणीयानि रत्ना रत्नानि दधत् ददत् स्थापयन् वा। कीदृशः ? हिरण्याक्षः हिरण्यमिव कान्तियुक्ते अक्षिणी यस्य स हिरण्याक्षः अमृतदृष्टिर्वा । स कः ? यः सविता पृथिव्याः सम्बन्धिनीः अष्टौ ककुभो दिशः व्यख्यत् प्रकाशितवान् । यश्च त्री त्रीणि धन्व धन्वानि लोकान् व्यख्यत् । धन्वेत्यन्तरिक्षनाम ( निघ० १, ३, ५ ) तेन तदुपलक्षिताावितरावपि लोकौ लक्ष्येते छत्रिणो गच्छन्तीतिवत् । यश्च योजना योजनानि योजनगव्यूतिक्रोशादीनध्वपरिमाणविशेषान् व्यख्यत् । यश्च सप्त सिन्धून् समुद्रान् क्षीरोदाद्यान् व्यख्यत् । उपलक्षणमेतत् सर्वजगत्प्रकाशकः सविता रत्नानि ददान आयात्वित्यर्थः ॥ अख्यत् ख्या प्रकथने अस्यतिवक्तिख्यातिभ्योऽङिति ( पा० ३, १, ५२ ) च्लेरङ् आलोपश्च धातूनामनेकार्थत्वादत्र प्रकाशनार्थो ग्राह्यः त्री योजना सुपां सुलुगित्यादिना ( पा० ७, १, ३९ ) पूर्वसवर्णदीर्घो विभक्तेः । धन्व सुपो लुक् । रत्ना सुप आकारः । दाशुषे दाश्वान्साह्वानिति ( पा० ६, १, १२ ) निपातः । वार्य्याणि ऋहलोर्ण्यदिति ( पा० ३, १, १२४ ) वृणोतेर्ण्यत् ॥ २४ ॥

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी

**अन्तरीयते । अपामीवां बाधते वेति सूर्य्यमभि कृष्णेन रजसा द्यामृणोति ॥ २५ ॥**

(१)हिरण्यपाणिः सविता।सुवर्णपाणिः सविता। विचर्षणिः विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः । उभे द्यावापृथिवी अन्तः अधिकरणश्रुतेर्योग्यक्रियाया अध्याहारः । मध्ये स्थितः ईयते एति यदा । अथ तदा अपामीवां बाधते अमीवां व्याधिम् । वेति वि गतिकर्मा । गच्छति सूर्यं सूर्यरूपमवस्थाय । ततोऽस्तमनकाले । अभिकृष्णेन रजसा द्यामृणोति । अभिद्यामृणोति अभिव्याप्नोति कृष्णेन रजसा तमोलक्षणेन । द्यां द्युलोकम्॥२५॥

सविता प्रसविता सूर्य्यं सूर्य्यः विभक्तिव्यत्ययः उभे उभयोः द्यावापृथिवी द्यावापृथिव्योः अन्तर्मध्ये ईयते आगच्छति यदा तदा अमीवां व्याधिमपबाधते अन्धकारलक्षणरोगं निवर्त्तयति । अथ यदा वेति अस्तमयसमये गच्छति तदा कृष्णेन रजसा अन्धकारलक्षणेन द्यां द्युलोकमभि ऋणोति अभिव्याप्नोति । कीदृशः सूर्य्यः ? हिरण्यपाणिः सुवर्णपाणिः । विचर्षणिः विविधं द्रष्टा कृताकृतप्रत्यवेक्षकः । उभे द्यावापृथिवी षष्ठ्यर्थे द्वितीया । अन्तर्योगे वा । ईयते ईङ् गतौ दिवादिः ॥ २५ ॥

**हिरण्यहस्तो असुरः सुनीथः सुमृडीकः स्ववां**

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । हिरण्यपाणिः सुवर्णपाणिः सविता विचर्षणिः विविधं द्रष्टा कृताकृतप्रत्यवेक्षणः उभे द्यावापृथिवी अन्तः अधिकरणश्रुतेर्योग्यक्रियाध्याहारः मध्ये स्थित ईयते एति यदा अथ तथा अपबाधते । अमीवां व्याधिं वेति सूर्यं वेतिर्गतिकर्मा गच्छति सूर्यरूपमवस्थाय ततोऽस्तमनकाले अभिकृष्णेन रजसा द्यामृणोति अभिऋणोति अभिव्याप्नोति कृष्णेन रजसा तमोलक्षणेन द्युलोकम् ॥ २५ ॥

यात्वर्वाङ् । अपसेधन् रक्षसो यातुधानानस्थाद् देवः प्रतिदोषं गृणानः ॥ २६ ॥

(१)हिरण्यहस्तः । द्वितीयोऽर्द्धर्चः प्रथमं व्याख्यायते सामर्थ्यात् । यः अपेसधन् अपगमयन् रक्षसः यातुधानाश्च असुखकारकान् । अस्थात् उदस्थात् । देवः प्रतिदोषं गृणानः । श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः स्तुवन् उच्चारयन् गणयन् उपभोगार्थमित्यभिप्रायः । सोऽयं सविता हिरण्यहस्तः हिरण्यं दानार्थं हस्ते यस्य स तथोक्तः । रूपेण वा स्तुतिः । असुरः रा दाने असून्प्राणान्ददातीत्यसुरः । सुनीथः नीथा स्तुतिः । कल्याणस्तुतिः । सुमृडीकः साधु सुखयिता । स्ववान् आत्मीयज्ञातिधनवचनः स्वशब्दः । यातु आयातु । अर्वाङ् अर्वागञ्चनः अस्मानभिमुखः ॥ २६ ॥

यो देवो रविः रक्षसो राक्षसान् यातुधानान् असुखकारांश्च अपसेधन् अपगमयन् सन् अस्थात् उदेति स देवः अर्वाङ् अर्वागञ्चनः अस्मदभिमुखः यातु आयात्वित्यर्थः। कीदृशो देवः?हिरण्यहस्तः हि-

---

(१)अत्र वाराणसी० लि० पु० सम्मतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । हिरण्यहस्तः । द्वितीयोऽर्धर्चः प्रथमः सामर्थ्यात् । यः अपसेधन् अपगमयन् रक्षसो यातुधानांश्च असुखकरान् उदस्थात् उदेति देवः प्रतिदोषं गृणानः श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः गृणानः स्तुवन् उच्चारयन् गृणन् उपभोगार्थमित्यभिप्रायः सोऽयं सविता हिरण्यहस्तः । हिरण्यं दानार्थं हस्ते यस्य स तथोक्तः । रूपेण वा स्तुतिः । असुरः । असुरः असून् प्राणान् प्रति ददातीति असुरः सुनीथः नीथा स्तुतिः कल्याणस्तुतिः सुमृडीकः साधु सुखयिता स्ववान् आत्मात्मीयज्ञातिधनवचनः स्वशब्दः यातु आयातु अर्वाङ् अर्वागञ्चनः अस्मदभिमुखम् ॥ २६ ॥

रण्यं दानार्थं हस्ते यस्य स तथोक्तः रूपेण वा स्तुतिः। असुरः असून् राति ददातीत्यसुरः। सुनीथः नीथा स्तुतिः कल्याणस्तुतिः। सुमृडीकः साधु सुखयिता । स्ववान्धनवान् । प्रतिदोषम् प्रतिजनं यो दोषः तम श्रुतिस्मृतिविहितधर्मपराङ्मुखानां यावन्तो दोषास्तावतः गृणानः उच्चारयन उपभोगार्थमित्यभिप्रायः । स्ववान यातु इत्यत्र दीर्घादटि समानपाद इति ( पा० ८, ३, ९ )) नस्य रुत्वे भोभगो ( अघो ) अपूर्वस्य योऽशीति ( पा० ८, ३, १७ ) तस्य रोर्यादेशे हलि सर्वेषामिति ( पा० ८, ३, २२ ) तस्य लोपः । रक्षस्शब्दस्य व्यत्ययेनाक्लीबत्वम् ॥ २६ ॥

ये ते पन्थाः सवितः पूर्व्यासोऽरेणवः सुकृता अन्तरिक्षे । तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥ २७ ॥

(१)ये ते पन्थाः । ये ते तव पन्थाः पन्थान इति वचनव्यत्ययः । हे सवितः पूर्व्यासः पूर्वेष्वपि कालेषु भवाः । अरेणवः अपांशुलाः । सुकृताः साधुकृताः धात्रा । अन्तरिक्षे तेभिः तैः नः अस्मान् अद्य नयेति शेषः । पाथीभिः सुगेभिः साधुगमनैः अन्नपानप्रभूतैर्गच्छतः रक्षा च रक्ष च नः अस्मान् । अधि च ब्रूहि । अङ्गीकृत्य च ब्रूहि । यथा एते अस्मदीया

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । ये ते पन्थाः । ये ते तव पन्थाः पन्थान इति वचन व्यत्ययः हे सवितः पूर्व्यासः पूर्वेषु कालेषु भवाः अरेणवः अपांसुलाः सुकृताः साधुकृताः धात्रा अन्तरिक्षे तेभिः तैः नः अस्मान् अद्य नयेति शेषः पथिभिः सुगेभिः साधुगमनैः अन्नपानप्रभूतैर्गच्छतश्च रक्ष च नोऽस्मान् अधिब्रूहि अङ्गीकृत्य ब्रूहि यथा एते अस्मदीया इति यद्वा अस्माकं हितं पथ्यं च यत् तत् अधिब्रूहि । उपदिश हे देव दानादिगुणयुक्त ॥ २७

इति । यद्वा यदस्माकं हितं पथ्यं तदधिब्रूहि उपदिश हे देव दानादिगुणयुक्त ॥ २७ ॥

हे सवितः ! हे देव ! पन्थाः पन्थानो मार्गाः अन्तरिक्षे सुकृताः साधुकृताः धात्रा वर्त्तन्ते । कीदृशास्ते ? पूर्व्यासः पूर्वेषु कालेषु भवाः पूर्व्याः । अरेणवः नास्ति रेणुर्यत्र अपांसुलाः । तेभिः तैः पथिभिः मार्गैः नोऽस्मान् अद्य नयेति शेषः । च पुनः गच्छतो नोऽस्मान् रक्ष पालय । अधिब्रूहि च अधि अङ्गीकृत्य ब्रूहि एते मदीया इति यद्वा अधिब्रूहि उपदिशास्माकं यद्धितं पथ्यं तत् यद्वा अधि अधिकान् वद एते महायाज्ञिका दातार इत्यादि । किम्भूतैः पथिभिः सुगेभिः सुगैः सुखेन गम्यते येषु सुगाः तैः अन्नपानप्रभृतैरित्यर्थः अधिकरणे गच्छतेर्डप्रत्ययः ॥ पूर्व्यासः पूर्वैः कृताः पूर्वैः कृतमिनियौ चेति ( पा० ४, ४, १३३ ) यप्रत्ययः ॥ २७ ॥

उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः ॥ २८ ॥

( १ ) उभा पिबतम् । आश्विन्यस्तिस्रः एका गायत्री द्वे त्रिष्टुभौ । उभौ सोमं पिबतम् हे अश्विनौ । पीत्वा च सोमम् उभावपि नः अस्मभ्यम् शर्म शरणं प्रयच्छ तम् दत्तम् । किञ्च अविद्रियाभिः दृ विदारणे अविदीर्णाभिः अनवखण्डिताभिः ऊतिभिरवनैः रक्षतमिति शेषः ॥ २८ ॥

आश्विन्यस्तिस्रः एका गायत्री द्वे अनुष्टुभौ । हे ( अश्विना ) अश्विनौ ! उभा उभौ द्वावपि युवां पिबतम् सोममिति शेषः । उभा द्वौ युवां नोऽस्मभ्यं शर्म शरणं सुखं वा यच्छतम् । काभिः सह ?

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति । तद्यथा । उभा पिबतम् । आश्विन्यस्त्रिस्रः । एका गायत्री द्वे त्रिष्टुभौ उभौ सोमं पिबतम् हे अश्विनौ पीत्वा च सोमम्-उभावपि नः अस्मभ्यम् शर्म शरणं यच्छतं प्रयच्छत दत्तम् किञ्च अविद्रियाभिः दृ विदारणे अविदीर्णाभिः अनवखण्डिताभिः ऊतिभिरवनै रक्षतमिति शेषः ॥ २८ ॥

आविद्रियाभिः आविदीर्णाभिः अखण्डिताभिः ऊतिभिः अवनैः पालनैः सह । सुखं दत्तं पालयतं चेत्यर्थः उभा अश्विना विभक्तेराकारः । विदीर्यन्तीति विद्रियाः दृ विदारणे औणादिक इयक्प्रत्ययः॥२८॥

**अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रावृषणा मनीषाम् । अद्यूत्येऽवसे निह्वये वां वृधे च नो भवतं वाजसातौ ॥ २९ ॥**

(१) अप्नस्वतीम् अप्न इति कर्मनाम कर्मवतीम् हे अश्विनौ वाचम् अस्मे अस्माकम् कृतं कुरुतम् । किञ्च नः अस्माकम् हे दस्रौ दर्शनीयौ हे बृषणौ वर्षितारौ युवानावित्यर्थः । मनीषां मनसः संबन्धिनीमिच्छां च । अप्नस्वतीमेव कृतम् । कस्मात्पुनरहमेवं ब्रवीमि । यतः अद्यूत्ये अवसे । द्यूते भवमवसमन्नं द्यूत्यम् । द्यूतादागतं कर्मण्यं न भवति अत एवमुच्यते । अद्यूत्ये अन्ननिमित्तभूते । निह्वये वाम् आयामि युवाम् । आगत्य च वृधेवर्द्धनाय च नः अस्माकं भवतम् । वाजसातौ वाजसंभजननिमित्तभूते संग्रामे च यज्ञे वा वर्द्धनायैव भवतम्॥२९॥

हे अश्विना अश्विनौ ! हे दस्रा दर्शनीयौ ! हे वृषणा वर्षितारौ

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई गु०पु० नास्ति । तद्यथा अप्नस्वतीम् । अप्न इति कर्मनाम । कर्मवतीं हे अश्विनौ वाचम् अस्मे अस्माकं कृतं कुरुतम् किञ्च नः अस्माकं हे दस्रौ दर्शनीयौ हे वृषणा वर्षितारौ सेक्तारौ युवानावित्यर्थः । मनीषां मनसः सबन्धिनीं च इच्छाम् अप्नस्वतीमेव कृतम् कस्मात्पुनरहमेवं ब्रवीमि अद्यूने अवसे द्यूते भवम् अवसमन्नं द्यूत्यं द्यूतादागतं कर्मण्यं न भवति । अत एवमुच्यते । अद्यूत्ये अन्ने निमित्तभूते निह्वये वाम् आह्वयामि युवामागत्य वृधे च नो भवतं वर्द्धनाय च नः अस्माकं भवतम् वाजसातौ वाजसंभजने निमित्तभूते च यज्ञे वर्द्धनाय च भवतम् ॥ २९ ॥

सेक्तारौ युवानौ ! अस्मे अस्माकं वाचम् अप्नस्वतीं कर्मवतीं युवां कृतं कुरुतम्। तथा नोऽस्माकं मनीषां मनस इच्छामप्नस्वतीमेव कुरुतम्। मनसा वचसा च यज्ञं कुर्मस्तथा कुरुतमित्यर्थः। यतो ह वां युवां निह्वये आह्वयामि। किंनिमित्तम्? अद्यूत्ये सन्मार्गागते अवसे अन्ने अन्ननिमित्तम् तद्दानार्थमित्यर्थः द्यूतादागतं द्यूते भवं वा द्यूत्यम् न द्यूत्यमद्यूत्यम् तस्मिन् द्यूतादागतं कर्मण्यं न भवतीत्येवमुच्यते द्यूतमन्येषामप्यन्याय्यधनागमानामुपलक्षकम्। किञ्च वाजसातौ वाजानामन्नानां सातिः सम्भजनं यस्मिन् स वाजसातिः तस्मिन् यज्ञे नोऽस्माकं वृधे वृद्ध्यै भवतम्॥ अस्मे विभक्तेः शेआदेशः। कृतम् करोतेः बहुलं छन्दसीति (पा० २, ४, ७३) शपि लुप्ते लोण्मध्यमद्विवचने रूपम्। वृषणा वृषणौ वा षपूर्वस्य निगम इति (पा० ६, ४, ९) उपधादीर्घाभावः। वृधे वर्धनं वृत् सम्पदादित्वाद्भावे क्विप्॥ २९॥

द्युभि॑र॒क्तुभि॒ः परि॑ पातम॒स्मानरि॑ष्टेभिरश्विना॒ सौभ॑गेभिः। तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑ति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः॥ ३०॥

(१) द्यूभिरक्तुभिः। द्युभिरहोभिः कारणभूतैः अक्तुभिः अक्तु रात्रिः रात्रिभिश्च कारणभूताभिः। अधिकरणविवक्षा वा। काले हि द्यूषु रात्रिषु वा। परि सर्वतः पातम् परिपालयतम्

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति : तद्यथा। द्युभिरक्तुभिः अहोभिः करणभूतैः अक्तुभिः कारणभूतैः अक्तुभी रात्रिभिश्च कारणभूताभिः अधिकरणविवक्षया वा काले हि द्युषु रात्रिषु च परि सर्वतः पातं पालयतम् अस्मान् न केवलं द्युभिरक्तुभिः परिपातमस्मान् किं तर्हि अरिष्टेभिरनुपहिंसितैः हे अश्विनौ सौभगेभिः भग इति धननाम शोभनैश्च धनैः योजयतमित्यध्याहारः तदस्माकं मित्रः वरुणः मामहन्तां पूजयताम् अदितिश्च सिन्धुश्च पृथिवी च उत अपि च द्यौः॥ ३०॥

युवाम् अस्मान् । न केवलं द्युभिरक्तुभिः परिपातमस्मान् । किं तर्हि । अरिष्टेभिः अनुपहिंसितैः हे अश्विनौ सौभगेभिः । भग इति धननाम । शोभनैश्च धनैः । योजयतमित्यध्याहारः । तत् नः अस्माकं मित्रः वरुणश्च मामहन्तां पूजयन्ताम् । अदितिश्च सिन्धुश्च पृथिवी च उत अपि च द्यौः ॥ ३० ॥

हे अश्विना अश्विनौ ! द्युभिः दिवसैः अक्तुभिः रात्रिभिः सप्तम्यर्थे तृतीया दिवसेषु रात्रिषु च अहोरात्रम् अस्मान् परिपातं सर्वतो रक्षतम् । कैः ? सौभगेभिः सौभगैः भग इति धननाम ( निघ० २, १०, १०) शोभनैः धनैः । किम्भूतैः ? अरिष्टेभिः अनुपहिंसितैः अखण्डितैर्धनैरस्मान रक्षतामित्यर्थः । किञ्च मित्रः वरुणः अदितिः सिन्धुः समुद्रः उतापि च द्यौः एते नोऽस्माकं तत् भवत्कृतं रक्षणं मामहन्तां पूजयन्तामनुमन्यन्ताम् इत्यर्थः ॥ द्युरित्यह्नो नाम अक्तुरिति रात्रेः मामहन्ताम् मह पूजायाम् बहुलं छन्दसीति ( पा० २, ४, ७६ ) शपः श्लुः श्लाविति ( पा० ६, १, १० ) द्वित्वम् तुजादीनां दीर्घोऽभ्यासस्येति ( पा० ६, १, ७ ) अभ्यासदीर्घः ॥ ३० ॥

आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ ३१ ॥

आकृष्णेनेति व्याख्यातम् ॥ ३१ ॥

व्याख्याता ( ३३, ४३ ) ॥ ३१ ॥

आ रात्रि पार्थिवꣳ रजः पितुरप्रायि धामभिः । दिवः सदाꣳसि बृहती वितिष्ठस आ त्वेषं वर्त्तते तमः ॥ ३२ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । आकृष्णेनेति व्याख्यातम् ॥ ३१ ॥

(१) आ रात्रि । रात्रिदेवत्या बृहती । हे रात्रि या त्वम् आ अप्रायि आ अपूपुरः आपूरयसि । पार्थिवं रजः पृथिवीसंबन्धिलोकम् पितुः मध्यमस्य लोकस्य धामभिः स्थानैः सह । या च त्वम् दिवः द्युलोकस्य सदांसि स्थानानि । बृहती महती वितिष्ठसे आक्रामसि । यस्याश्च ते । तथापि आवर्त्तते । त्वेषं महाप्राग्भारं दीप्तं वा तमः तां त्वां स्तुमः ॥ ३२ ॥

रात्रिदेवत्या पथ्या बृहती । हे रात्रि ! यया त्वया पार्थिवं रजः पृथिवीसम्बन्धिलोकः पितुः मध्यमलोकस्य धामभिः स्थानैः सह आ अप्रायि समन्तात् पूर्यते । या च त्वं दिवो द्युलोकस्य सदांसि स्थानानि बृहती महती सती वितिष्ठसे आक्रमसे व्याप्नोषि । तस्यास्तव तम आवर्त्तते तथापि प्रवर्त्तते । किम्भूतं तमः ? त्वेषं दीप्तं महाप्राग्भारमित्यर्थः । रजःशब्दो लोकवचनः । अप्रायि प्रा पूरणे कर्मणि लुङि चिणि रूपम् ॥ ३२ ॥

उषस्तच्चित्रमाभरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥ ३३ ॥

(२) उषस्तत् । उषोदेवत्या परोष्णिक् । हे उषः तत् चित्रं

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । आ रात्रि । रात्रिदेवत्या पथ्या बृहती । हे रात्रि या त्वम् आप्रायि आ अपूपुरः आपूरयसि पार्थिवं रजः पृथिवीसंबन्धिमं लोकं पितुर्मध्यमस्य लोकस्य धामभिः स्थानैः सह या च त्वं दिवः द्युलोकस्य सदांसि स्थानानि बृहती वितिष्ठसे आक्रमसि यस्याश्च तव तथापि आवर्त्तते त्वेषं महाप्राग्भारं दीप्तं वा तमः तां त्वां स्तुमः ॥ ३२ ॥

(२) अत्र वाराणसी० लि०पु०संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । उषस्तत् । उषोदेवत्या परोष्णिक् । हे उषः तत् चित्रं चायनीयं महनीयं धनमाभर आहर अस्मभ्यं हे वाजिनीवति अन्नवति येन धनेन तोकं च पुत्रं तनयं पौत्रं धामहे दध्महे ॥ ३३ ॥

चायनीयं महनीयं धनम् आभर आहर अस्मभ्यम् हे वाजिनीवति अन्नवति । येन धनेन तोकं च तनयं च पौत्रं च धामहे दध्महे ॥ ३३ ॥

उषोदेवत्या पुरोष्णिक् । हे उषः ! हे वाजिनीवति ! हे अन्नवति । अस्मभ्यं तत् प्रसिद्धं चित्रं चायनीयमाश्चर्य्यकारि महनीयं धनमाभर आहर देहि येन धनेन वयं तोकं पुत्रं तनयं पौत्रं च सर्वं सन्तानवर्गं धामहे दध्महे पुष्णीमः । धामहे दधातेः शपो लुकि रूपम् ॥ ३३ ॥

प्रातरग्निं प्रातरिन्द्रꣳ हवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳ हुवेम ॥ ३४ ॥

(१) प्रातरग्निम् बहुदेवत्या जगती । प्रातःशब्दो विप्सावचनः । प्रातः प्रातः पुनः पुनः । अग्निश्च इन्द्रश्च मित्रावरुणौ च अश्विनौ च । हवामह इति प्रत्येकमभिसंबध्यते । प्रातः भगश्च पूषणश्च ब्रह्मणस्पतिश्च प्रातः सोमम् उत अपि च रुद्रम् हुवेम आह्वयामः ॥ ३४ ॥

जगती बहुदेवत्या । प्रातःशब्दो वीप्सावचनः । वयं प्रातः पुनः पुनः एतान् देवान् हवामहे आह्वयाम इति प्रत्येकं सम्बध्यते । कान् ? अग्निम् इन्द्रम् मित्रावरुणौ अश्विनौ भगम् पूषणम् ब्रह्मणस्पतिम् । सोमम् उत अपि च रुद्रं हुवेम आह्वयाम । हवामहे हुवेम ह्वयतेः सम्प्रसारणे रूपद्वयम् ॥ ३४ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । प्रातरग्निम् । बहुदेवत्या जगती । प्रातःशब्दो विप्सावचनः । प्रातः प्रातः पुनः पुनः इन्द्रं च अग्निं च मित्रावरुणौ च अश्विनौ च हवामहे इति प्रत्येकं संबन्ध्यते इति प्रातः भगं च पूषणं ब्रह्मणस्पतिं च सोमम् उतापि च रुद्रं हुवेम आह्वयामः ॥ ३४ ॥

प्रातर्जितं भगमुग्रꣳ हुवेम वयं पुत्रमदितेर्यो विधर्त्ता। आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीत्याह ॥ ३५ ॥

(१)प्रातर्जितम्। पञ्च भगदेवत्यास्त्रिष्टुभः। यो विधर्त्तेत्यादिमन्त्रो व्याख्यायते उद्दिश्यमानत्वात्। यः भगः विधर्ता विधारयिता सर्वस्य जगतः। आध्रश्चिद्यम् प्रतिषेधस्य दीर्घत्वं छान्दसम्। आध्रः ध्रै तृप्तौ। अतृप्तः बुभुक्षितः। अथवा ध्रियतेः आध्रः दरिद्रः चिच्छब्दोऽप्यर्थे। दरिद्रोऽपि यं भगं मन्यमानः मन्यतिरर्चतिकर्मा। पूजयन्स्वार्थसिद्धये भगम्भक्षि इत्याह उदयं भक्षयस्व भजस्व इत्याह। तुरश्चित् आङोऽध्याहारः। आतुरोऽपि यं भगं मन्यमानः भक्षीत्याह। उदयं भक्षयस्व इत्याह। यद्वातुरशब्देन यमोऽभिधीयते। स

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। प्रातर्जितम। पञ्च भगदेवत्याः त्रिष्टुभः यो विधर्त्तेत्यादिमन्त्रो व्याख्यायते उद्दिश्यमानत्वात्। यो भगः विधर्त्ता विधारयिता सर्वस्य जगतः। आध्रश्चिद्यं प्रतिषेधस्य दीर्घत्वं छान्दसम्। आध्रः ध्रै तृप्तौ अतृप्तः बुभूक्षितः अथवा आध्रियते इति आध्रो दरिद्रः चित् शब्दोऽप्यर्थे। दरिद्रोऽपि यं भगं मन्यमानः। मन्यतिरर्चतिकर्मा। पूजयन् स्वार्थसिद्धये भक्षि इत्याह। उदयं भजस्वेत्याह तुरश्चित्। आङोऽध्याहारः। आतुरोऽपि यं भगं मन्यमानः पूजयन् भक्षि इत्याह उदयं भजस्वेत्याह। यद्वातुरशब्देन यमोऽभिधीयते। स हि तूर्णं प्राणिनो हरति यमोऽपि यं मन्यमानः पूजयन् भक्षि उदयं भजस्वेत्याह। स हि दिवसान् प्राणिभ्यो गणयति। राजापि यं भगं पूजयन् उदयं भजस्वेत्याह। तदुदये राज्ञां वार्त्तादिसिद्धिः। तं प्रातर्जितं प्रातर्जयिनं भगमादित्यमुग्रमुद्गूर्णदानं हुवेम आह्वयामो वयम्। ऋषिरात्मानमाह पुत्रमदितेः॥ ३५॥

हि तूर्णं प्राणिनो हन्ति । यमोऽपि यं भगं मन्यमानः भक्षी-त्याह । उदयं भजस्वेत्याह । स हि दिवसान् प्राणिनो गण-यति । राजाचित् राजापि यं भगं मन्यमानः क्षभीत्याह उदयं भक्षयस्व भजस्वेत्याह । तदुदये हि राज्ञां वार्त्तासिद्धिः । तं प्रातर्जितम् प्रातर्जयिनं भगम् उग्रमुद्गूर्णदानम् हुवेम आह्व-यामः । वयम् ऋषिरात्मानमाह । पुत्रम् अदितेः ॥ ३५ ॥

पञ्च भगदेवत्यास्त्रिष्टुभः । वयं तं भगमादित्यं हुवेम आह्वयाम । किम्भूतम् ? प्रातर्जितं प्रातर्जयतीति प्रातर्जित् तम् प्रातर्जयनशील-म् । उग्रमुत्कृष्टमुद्गूर्णदानं वा । अदितेः पुत्रं तनयम् । तं कम् ? यो विधर्ता जगतो धारयिता । यश्च आध्रश्चित् चिच्छब्दोऽप्यर्थे न ध्रायति ध्रै तृप्तौ न तृप्यति स अध्रः नञो दीर्घश्छान्दसः । यद्वा आ समन्तात् ध्रः आध्रः यद्वा अध्र एवाध्रः स्वार्थे तद्धितः आध्रः अतृप्तः बुभुक्षितो दरिद्रो वापि यं भगं भाक्षि भजस्व अर्थादुदयम् इत्याह किं कुर्वन् ? मन्यमानः पूजयन् स्वार्थसिद्धये मन्यतिरर्चतिकर्मा स हि सूर्य्योदये भिक्षादिना किञ्चिल्लभते तत उदयं वाञ्छति । तुरश्चित् आतुरोऽपि यं भगं मन्यमानो भाक्षि उदयं भजस्वेत्याह दिवसे तस्य सुखोदयात् रोगिणो रात्रिः कष्टेन याति यद्वातुरो यमः स हि मारणाय दिनानि गणयति । राजा चित् राजापि यं भगं भाक्षि इत्याह तदुदये हि राज्ञां व्यवहारदर्शनादिना सर्वेष्टसि-द्धिः । भाक्षि भजतेः शपि लुप्ते लटि मध्यमे रूपम् ॥ ३५ ॥

भग प्रणेतर्भग सत्यराधो भगेमां धियमुदवा द-दन्नः । भग प्रनो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम ॥ ३६ ॥

(१) भग प्रणेतः । हे भग हे प्रणेतः प्रकर्षेण नयस्य कर्त्तः ।

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । भग प्रणेतः । हे भग प्रणेतः प्रकर्षेण धनस्य कर्तः हे भग सत्यराधः सत्यमविनाशि राधो धनं यस्य स तथोक्तः ।

हे भग हे सत्यराधः सत्यमविनाशि राधो धनं यस्य । स तथोक्तः । हे भग इमां धियं प्रज्ञाम् उत् अव उद्गमय । यथा सूक्ष्मानर्थान् पश्यामः तथा कुर्वित्यभिप्रायः । ददत् नः देहि अस्मभ्यम् धनम् । भग प्रनो जनय गोभिरश्वैः । हे भग-प्रजनय नः अस्मान् गोभिः अश्वैश्च । हे भग नृभिः मनुष्यैः नृवन्तः स्याम भवेम ॥ ३६ ॥

हे भग ! हे प्रणेतः ! प्रकर्षेण नयति प्रापयति धनमिति प्रणेतः तस्य सम्बोधने हे प्रणेतः ! आदरार्थे पुनः सम्बोधनम् हे भग ! हे सत्यराधः ! सत्यमनश्वरं राधो धनं यस्य स सत्यराधाः तत्सम्बुद्धौ हे सत्यराधः ! हे भग ! त्वं ददत् धनं प्रयच्छन् सन् नोऽस्माकामिमां धियं प्रज्ञां कर्म वा उदव ऊद्गमय यथा सूक्ष्मार्थान् पश्यामस्तथा कुर्विति भावः । किञ्च हे भग ! नोऽस्मान् गोभिः अश्वैः प्रजनय प्रवर्धय गा अश्वांश्च बहून् देहीत्यर्थः । हे भग ! वयं नृभिः पुत्रादिभिः नृवन्तः मनुष्यवन्तः प्रकर्षेण स्याम भवेम ॥३६॥

उतेदानीं भगवन्तः स्यामोत प्रपित्व उत मध्ये अह्नाम् । उतोदिता मघवन् सूर्यस्य वयं देवानाᳯं सुमतौ स्याम ॥ ३७ ॥

(१) उतेदानीम् । उत अपि च इदानीं भगवन्तः स्यामः

हे भग इमां धियं प्रज्ञाम् उत् अव उद्गमय । यथा सूक्ष्मानर्थान् पश्यामः तथा कुर्वित्यभिप्रायः । ददत् देहि नः अस्मभ्यं धनं भग प्रनो जनय । गोभिरश्वैः हे भग प्रजनय नः अस्मान् गोभिरश्वैश्च हे भग नृभिर्मनुष्यैर्नृवन्तः मनुष्यवन्तः स्याम भवेम ॥ ३६ ॥

(१) अत्र वाराणसी॰लि॰पु॰ संमतोऽयं पाठक्रमः मुम्बईमु॰पु॰ नास्ति तद्यथा । उतेदानीम् । उत अपिचेदानीं भगवन्तः ज्ञानवन्तः धनवन्तः स्याम आदित्यप्रसादात् उतापि च प्रपित्वे प्राप्ते अस्तम-

आदित्यप्रसादात् । उत अपि च प्रपित्वे प्राप्ते अस्तमनकाले भगवन्तः स्याम । उत अपि च मध्ये दिने अह्नां भगवन्तः स्याम । उतोदिता उत अपि च उदिता उदयकाले हे मघवन् धनवन् सूर्यस्य भगवतः प्रसादादेव वयम् देवानां सुमतौ कल्याण्यां मतौ स्याम भवेम ॥ ३७ ॥

हे मघवन् ! धनवन् रवे ! उत अपि च वयामिदानीं भगवन्तो ज्ञानवन्तो वा स्याम भवेम । उतापि च सूर्य्यस्य प्रपित्वे प्रपतने अस्तमये भगवन्तः स्याम । उत अह्नां मध्ये मध्ये दिने भगवन्तः स्याम उत सूर्य्यस्य उदिता उदितौ उदयसमये भगवन्तः स्याम । किं बहुना सर्वदास्माकं धनवत्तास्त्वित्यर्थः । किञ्च देवानां सुमतौ कल्याण्यां बुद्धौ वयं स्याम देवा अस्मासु शोभनामनुग्रहविषयां बुद्धिं दधत्वित्यर्थः ॥ ३७ ॥

भग एव भगवाँ२॥ अस्तु देवास्तेन वयं भगवन्तः स्याम । तं त्वा भग सर्व इज्जोहवीति स नो भग पुरए ता भवेह ॥ ३८ ॥

(१) भग एव । हे देवाः भग एव भगवान् अस्तु । किम-

---

यकाले भगवन्तः स्याम उत उदिता अपि च उदयकाल हे मघवन् धनवन् सूर्यस्य भगवतः प्रसादादेव वयं देवानां सुमतौ कल्याण्यां मतौ स्याम भवेम ॥ ३७ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । भग एव हे देवाः भग एव भगवान् धनवान् अस्तु किमन्यैर्देवताविशेषैर्धनयुक्तैः अदातृभिरित्यभिप्रायः । तेन भगप्रदत्तेन धनेन वयं भगवन्तः स्याम भवेम । एकं वाक्यं द्वितीयेनार्धर्चेन द्वितीयम् एकवाक्यताया असंभवात् उपरि तदः श्रवणात् यदोऽत्र वृत्तिः । यश्च त्वां हे भग सर्व इत् सर्व एव जोहवीति आह्वयति कामसिद्धये स नः अस्माकं हे भग पुर एता अग्रयायी सर्वकार्येषु भव इह ॥ ३८ ॥

न्यैर्देवताविशेषैर्धनयुक्तैरदातृभिरित्यभिप्रायः । तेन भगप्रदत्तेन धनेन वयं भगवन्तः धनवन्तः स्याम भवेम । एकं वाक्यम् । द्वितीयेनार्द्धर्चेन द्वितीयम् एकवाक्यतायाः असंभवात् । तं त्वा उपरि तदः श्रवणात् यदोऽत्र वृत्तिः । यं त्वाम् । हे भग सर्व इत् सर्व एव जोहवीति । आह्वयति कामसिद्ध्ये । स नः अस्माकम् हे भग पुर एता अग्रयायी सर्वकार्येषु भव इह ॥ ३८ ॥

हे देवाः ! भग एव भगवान् धनवानस्तु किमन्यैरदातृभिर्धनिभिर्देवैरिति भावः । तेन भगदत्तेन धनेन वयं भगवन्तः स्याम । एवं देवानुक्त्वाथ भगमाह हे भग ! सर्व इत् सर्व एव जनः तं प्रसिद्धं त्वा जोहवीति अत्यन्तमाह्वयति इष्टसिद्ध्यै हे भग ! स त्वमिह नोऽस्माकं कर्मणि पुरएता पुरोऽग्रे एतीति पुरएता अग्रयायी भव अग्रेसरो भूत्वा सर्वकार्य्याणि साधयेत्यर्थः ॥ ३८ ॥

समध्वरायोषसो नमन्त दधिक्रावेव शुचये पदाय । अर्वाचीनं वसुविदं भगं नो रथमिवाश्वा वाजिन आवहन्तु ॥ ३९ ॥

(१) समध्वराय । संनमन्त प्रह्वीभवन्ति । या उषसः अध्वराय यज्ञाय । अग्निहोत्रादिकर्मणे कथमिव । दधिक्रावेव । यथा दधिक्रावा अश्वः शुचये पदाय । शुचिपदम् अग्न्याधा-

(१) अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । स मध्वरायः । सन्नमन्त प्रह्वीभवन्ति । या उषसः अध्वराय यज्ञाय अग्निहोत्रादिकर्मणे कथमिव दधिक्रावेव यथा दधिक्रावा अश्वः शुचये पदाय शुचिपदम् अग्न्याधानार्थं कर्तव्यमिति संनमते एवं ता उषसः अर्वाचीनम् अनन्यगतमनस्कं वसु धनं विन्दतीति वसुविदं भगमादित्यं नः अस्मान् प्रति रथमिवाश्वा वाजिनः अन्नवन्तो वेगवन्तो वा आवहन्तु आगमयन्तु ॥ ३९ ॥

नार्थं कर्त्तव्यमिति सन्नमते । एवं ता उषसः । अर्वाची-नम् । अनन्यगतमनस्कम् । वसुविदं च । वसु धनं विन्द-तीति वसुवित् तं वसुविदम् । भगम् आदित्यम् नः अस्मान् प्रति । रथमिव । अश्वाः वाजिनः वेजनवन्तः अन्नवन्तो वा । आवहन्तु आगमयन्तु ॥ ३९ ॥

उषसः प्रातःकालाधिष्ठातारो देवाः अध्वराय संनमन्त संनमन्ते प्रह्वीभवन्ति । कथमिव ? दधिक्रावा अश्वः इव यथा अश्वः शुचये पदाय अग्न्याधानार्थं शुचि पदम् । ता उषसः भगमादित्यं नो-ऽस्माकमर्वाचीनमभिमुखमावहन्तु आगमयन्तु । किम्भूतं भगम् ? वसुविदम् वसु धनं विन्दतीति वसुविदः इगुपधेति ( पा० ३, १, १३५ ) कः । यथा वाजिनोऽन्नवन्तो वेगवन्तो वा अश्वा रथमावह-न्ति तद्वत् ॥ ३९ ॥

अश्वा॑वती॒र्गोम॑तीर्न उ॒षासो॑ वी॒रव॑तीः॒ सद॑मुच्छ-न्तु भ॒द्राः । घृ॒तं दुहा॑ना वि॒श्वतः॒ प्रपी॑ता यू॒यं पा॑त स्व॒-स्तिभिः॒ सदा॑ नः ॥ ४० ॥

(१)अश्वावतीः । उषोदेवत्या त्रिष्टुप् । अश्ववत्यः गोमत्यः नः अस्माकम् । उषासः वीरवत्यः सदम् सदाकालम् उच्छ-न्तु । उच्छी विवाशे । विवासयन्तु तमः । भद्राः भन्दनीयाः । घृतमवश्यायजलं दुहानाः । विश्वतः प्रपीताः । प्यायः पी आ-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । आश्वावतीः । उषोदेवत्या त्रिष्टुप् । अश्ववत्यः गोमत्यः नः अस्माकम् उषासो वीरवत्यः सदं सदाकालम् उच्छन्तु व्युच्छन्तु । उच्छी विपाशे । विपाशयन्तु तमः । भद्राः भन्दनीयाः-घृतमवश्याय जलं दुहाना विश्वतः प्रपीताः प्यायः पी आदेशः । सर्वतः आप्यायिताः । धर्मार्थकामैः । इदानामृत्विग्विषयः प्रश्नः । यूयं पात पालयत स्वस्तिभिः अविनाशैः सदा नः अस्मान् ॥ ४० ॥

देशः। सर्वतः आप्यायिताः धर्मार्थकामैः। इदानीमृत्विग्विषयः प्रश्नः। यूयं पात पालयत स्वस्तिभिरविनाशैः सदा नः अस्मान्॥ ४०॥

उषोदेवत्या त्रिष्टुप्। उषसः सदं सदाकालं नोऽस्मानुच्छन्तु विपाशयन्तु अज्ञानलक्षणं पाशं मोचयन्तु उच्छी विपाशे। किम्भूता उषसः? अश्ववतीः अश्ववत्यः गोमतीः गोमत्यः वीरवतीः वीरवत्यः भद्राः भन्दनीयाः कल्याणरूपाः घृतमवश्यायजलं दुहानाः क्षरन्तः विश्वतः सर्वतः प्रपीताः धर्मार्थकामैराप्यायिताः प्यायः पी–आदेशः। एवं परोक्षं प्रार्थ्य प्रत्यक्षमाह हे उषसः! यूयं स्वस्तिभिः अविनाशैः सदा नोऽस्मान् पात पालयत॥ ४०॥

पूषन् तव॑ व्र॒ते व॒यं न रि॑ष्येम॒ कदा॑ च॒ न। स्तो॒तार॑स्त इ॒ह स्म॑सि॥ ४१॥

(१) पूषन् तव। द्वे पौष्ण्यौ गायत्रीत्रिष्टुभौ। हे पूषन् तव व्रते कर्मणि वर्त्तमाना वयम् न रिष्येम न विनश्येम कदाचन कदाचिदपि। अन्यच्च। स्तोतारोऽपि। ते तव। इह स्मसि। स्म। इदन्तो मसि इतीकार उपजनः॥ ४१॥

द्वे पौष्ण्यौ गायत्रीत्रिष्टुभौ। हे पूषन्! तव व्रते कर्मणि वर्त्तमाना वयं कदा चन कदापि न रिष्येम न विनश्येम। किञ्च इह कर्मणि ते तव स्तोतारः स्तुतिकर्त्तारः स्मसि भवामः इदन्तो मसि॥ ४१॥

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा। पूषन् तव। द्वे पौष्ण्यौ गायत्रीत्रिष्टुभौ। हे पूषन्। तव व्रते कर्मणि वर्तमाना वयं न रिष्येम न विनश्येम। हि कदाचन कदाचिदपि। अन्यच्च श्रोतारोऽपि ते तव इह स्मसि स्म इदन्तो मसीति इकार उपजनः॥ ४१॥

पथस्पथः परि पतिं वचस्या कामेन कृतो अभ्यानडर्कम् । स नो रासच्छुरुधश्चन्द्राग्रा धियं धियँ सीषधाति प्र पूषा ॥ ४२ ॥

(१) पथस्पथः । यः पथस्पथः मार्गस्य परिपतिम् अधिपतिमित्युपसर्गव्यत्ययः । वचस्या वचनेन वेदोक्तेन अभिमुखीकृतः । कामेन इच्छया च अभिमुखीकृतः । अभ्यानट् । अनशिर्व्याप्तिकर्मा । अभिव्याप्नोति । अर्कम् । सः नः अस्मभ्यम् रासत् शुरुधः । शुरुधः । पूर्वपदान्तलोपः शुचं संतापं साधनाभावकृतं यानि रुधन्ति साधनानि भवन्ति तानि तथोक्तानि लिङ्गव्यत्ययेन । चन्द्राग्राः । तान्येव विशिष्यन्ते । चायनीयाग्राणि । धियं धियं सीषधाति । कर्म कर्मवचनः प्रसाधयति । पूषा ॥ ४२ ॥

यः पूषा अर्कं देवमभ्यानट् अभिव्याप्नोति । किम्भूतः ? कामेन काम्यत इति कामं तेन वाञ्छितेन वचस्या वचसा वेदोक्तेन कृतः अभिमुखीकृतः । किम्भूतमर्कम् ? पथस्पथः मार्गस्य मार्गस्य सर्वेषां मार्गाणां परिपतिमधिपतिं स्वामिनम् । सः पूषा नोऽस्मभ्यं शुरुधः शुचं रुन्धन्ति वर्णनाशाः पृषोदरादित्वात् शोकनाशकराणि सा-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । पथस्पथः । यः पूषा मार्गस्य मार्गस्य परिपतिम् अधिपतिम् । अत्रोपसर्गस्य व्यत्ययः । वचस्या वचनेन वेदोक्तेनाभिमुखीकृतः । कामेन इच्छया अभिमुखीकृतः । अभ्यानड् । आनशिर्व्याप्तिकर्मा । छान्दसः अभिव्याप्नोत्यर्कं देवं स नः अस्मभ्यं रासत् ददातु किं शुरुधः पूर्वपदान्तलोपः । शुचं संतापं साधनाभावकृतं रुधन्ति यानि साधनानि । भवन्ति तानि तथोक्तान् लिङ्गव्यत्ययेन चन्द्राग्राः तान्येव विशेष्यन्ते चायनीयाग्राणीति धियं धियं सीषधाति कर्मवचनं च प्रसाधयतु पूषा ॥ ४२ ॥

धनानि रासत् ददातु लिङ्गव्यत्ययः। किम्भूताः शुरुधः ? चन्द्राग्राः चन्द्रमाह्लादकमग्रं यासां ताः साधने कृते आह्लादो भवति। पुनः पूषा धियं धियं कर्माणि सर्वाणि प्रसीषधाति प्रकर्षेण साधयतु। पथस्पथः धियं धियमिति नित्यवीप्सयोरिति (पा० ८, १, ४) द्वित्वम्। वचस्या विभक्तेर्यादेशः। आनट् व्याप्तिकर्मसु दशस्वयं पठितः (निघ० २, १८, ४)। सीषधाति साध संसिद्धौ श्लुश्छान्दसः द्वित्वम् लेटोऽडाटौ तुजादीनां दीर्घोऽभ्यासस्य उपधाह्रस्वश्छान्दसः॥ ४२॥

त्रीणि॑ प॒दा वि च॑क्रमे॒ विष्णु॑र्गो॒पा अदा॑भ्यः। अतो॒ धर्मा॑णि धा॒रय॑न्॥ ४३॥

(१) त्रीणि पदा। वैष्णव्यौ गायत्र्यौ। द्वाभ्यामेकवाक्यम्। यः विष्णुः यज्ञः त्रीणि पदानि। विचक्रमे क्रान्तवान् अग्निवाय्वादित्याख्यानि। गोपाः गोपायिता च समस्तस्य जगतः। अदाभ्यः अनुपहिंस्यः। अतः अस्मादेव पदत्रयात् धर्माणि। धर्मशब्द उभयलिङ्गः अर्द्धर्चादौ हि गणे पठितः। धर्मान् धारयन्। कर्मपर्यायो वा। अतः एभ्यः पदेभ्यः कर्माणि धारयन्॥ ४३॥

वैष्णव्यौ गायत्र्यौ द्वयोर्मन्त्रोरेकवाक्यम्। यो विष्णुः यज्ञः त्रीणि पदा पदानि विचक्रमे विक्रान्तवान् अग्निवाय्वादित्याख्यानि पदानि व्याप्तवान्। किम्भूतो विष्णुः ? गोपाः जगतो रक्षकः अदाभ्यः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा। त्रीणि पदा वैष्णव्यौ गायत्र्यौ द्वाभ्यामेकवाक्ययोर्विष्णुर्यज्ञः त्रीणि पदानि विचक्रमे क्रान्तवान् अग्निवाय्वादित्याख्यानि गोपाः गोपायिता समस्तस्य जगतः। अदाभ्यः अहिंस्यः अतः अस्मादेव पदत्रयात्। धर्माणि धर्मशब्दः उभयलिङ्गः। अर्धर्चादौ हि गणे पठितः। धर्मे धारयन् कर्मपर्यायो वा अत एभ्यः पदेभ्यः कर्माणि धारयन्॥ ४३॥

अहिंस्यः । किं कुर्वन् ? अतः अस्मादेव पदत्रयात् धर्माणि पुण्यानि कर्माणि धारयन् । धर्ममाश्रियाम् ॥ ४३ ॥

**तद्विप्रा॑सो विप॒न्यवो॑ जागृ॒वाᳬंस॒: समि॑न्धते । विष्णो॒र्यत् प॑र॒मं प॒दम् ॥ ४४ ॥**

(१) तद्विप्रासः । तस्य विष्णोर्यज्ञस्य यत् परमं पदं ब्रह्मलक्षणम् । तत् । विप्रासः ब्राह्मणाः विपन्यवः मेधाविनः । जागृवांसः असुप्ताः अप्रमत्ताः । ज्ञानकर्मसमुच्चयकारिणः । समिन्धते । संदीपयन्ति उपासनैर्निर्मलीकुर्वन्ति ॥ ४४ ॥

तस्य विष्णोः यज्ञस्य यत् परमं पदं ब्रह्मलक्षणम् तद्विप्रासः विप्राः ब्राह्मणाः समिन्धते णिचो लोपः समिन्धयन्ति दीपयन्ति उपासते इत्यर्थः । किम्भूताः विप्राः ? विपन्यवः विगतः पन्युः संसारव्यवहारो येभ्यः निष्कामाः । जागृवांसः जागरणशीलाः अप्रमत्ताः ज्ञानकर्मसु समुच्चयकारिण इत्यर्थः ॥ ४४ ॥

**घृ॒तव॑ती॒ भुव॑नानामभि॒श्रियो॒र्वी पृ॒थ्वी म॑धु॒दुघे॑ सु॒पेश॑सा । द्यावा॑पृथि॒वी वरु॑णस्य॒ धर्म॑णा॒ विष्क॑भिते अ॒जरे॒ भूरि॑रेतसा ॥ ४५ ॥**

(२) घृतवती । द्यावापृथिवीया जगती । ये द्यवापृथिव्यौ

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । तद्विप्रासः तस्य विष्णोर्यज्ञस्य यत्परमं परं ब्रह्मलक्षणं तत् विप्रासः ब्राह्मणाः विपन्यवो मेधाविनो जगृवांसः अप्रमत्ताः ज्ञानकर्मसमुच्चयकारिणः समिन्धते । इन्धी दीप्तौ । णिचो लोपः छान्दसः । सम्यक् दीपयन्ति उपासते निर्मलीकुर्वन्ति ॥ ४४ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । घृतवती । जगती द्यावापृथिव्यौ ये द्यावापृथिव्यौ घृतवत्यौ उदकवत्यौ भुवनानामभिश्रियौ भूतजातानामभ्याश्रयणीये ।

घृतवत्यौ उदकवत्यौ । भुवनानामभिश्रिया । भूतजातानामभ्याश्रयणीये । उर्वी विस्तीर्णे । पृथ्वी पृथुले । मधुदुघे । मधूदकं तस्य दोग्ध्र्यौ । सुपेशसा सुरूपे । ते वरुणस्यादित्यस्य धर्मणा धारणेन । विष्कभिते । स्कभ्नोतिर्दृढीकरणार्थः । दृढीकृते । अजरे जरारहिते । भूरिरेतसा । बहुरेतस्के । सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते ॥ ४५ ॥

जगती द्याव्यापृथिवीदेवत्या । द्यावापृथिवी द्यावापृथिव्यौ वरुणस्यादित्यस्य धर्मणा धारणेन धरणशक्त्या विष्काभिते स्तम्भिते स्कभ्नोतिर्दृढीकरणार्थः वरुणेन स्वशक्त्या दृढीकृते इत्यर्थः । किम्भूते ते ? घृतवती उदकवत्यौ घृतमित्युदकनाम ( निघ० १, १२, १० ) । भुवनानां भूतजातानामभिश्रिया अभिश्रियौ आश्रयणीये कर्मणि क्विप् विभक्तेराकारः । उर्वी उर्व्यौ विस्तीर्णे पृथ्वी पृथ्व्यौ पृथुले आयामविस्ताराभ्यां महत्त्वं विशेषणद्वयेनोक्तम् । मधुदुघे मधु उदकं तस्य दोग्ध्र्यौ । सुपेशसा सुरूपे । अजरे जरारहिते । भूरिरेतसा भूरि रेतो ययोस्ते भूरिरेतसौ बहुरेतस्के सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते ॥ ४५ ॥

ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामवबाधामहे तान् । वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥ ४६ ॥

(१) ये नः जगती लिङ्गोक्तदेवता । ये नः अस्माकम्

---

उर्वी विस्तीर्णे पृथ्वी पृथुले मधुदुघे मधु उदकं दोग्ध्र्यौ सुपेशसा सुरूपे ते वरुणस्य आदित्यस्य धर्मणा धारणेन विष्कभिते स्कभ्नोतिर्दृढीकरणार्थः । दृढीकृते । अजरे जरारहिते भूरिरेतसा बहुरेतस्के सर्वभूतानां हि रेतांसि ताभ्यामेवोत्पद्यन्ते ॥ ४५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । ये नः । जगती लिङ्गोक्तदेवता । ये नः अस्माकं सपत्नाः शत्रवः अपते भवन्तु । अपगतवीर्या निरुद्यमास्ते भवन्तु ।

सपत्नाः शत्रवः । अपते भवन्तु । अपमतवीर्या निरुद्यमास्ते भवन्तु । ततः । इन्द्राग्निभ्याम् अवबाधामहे अवनाशयामः तान् शत्रून् । किञ्च वसवः रुद्राः आदित्याश्च । उपरिस्पृशम् उपरिस्थितं स्पृशतीति उपरिस्पृक् तमाधिपत्येऽवस्थितं पादेन स्पृशतीति उपरिस्पृक् तम् उपरिस्पृशम् माम् उग्रं च । चेत्तारं ज्ञातारं च ज्ञेयस्य । अधिराजम् अधिपतिमीश्वरं च अक्रन् कृतवन्तः कुर्वन्तु वा ॥ ४६ ॥

जगती लिङ्गोक्तदेवता । ये नोऽस्माकं सपत्नाः शत्रवः ते अपभवन्तु अपगतवीर्य्या निरुद्यमा भवन्तु पराभवं यान्त्वित्यर्थः । यतो वयं तान् सपत्नान् इन्द्राग्निभ्यां कृत्वा अवबाधामहे इन्द्राग्निबलेन नाशयामः । किञ्च वसवोऽष्टौ रुद्रा एकादश आदित्या द्वादश एते मा मामेतादृशमक्रन् कुर्वन्तु । कीदृसमुपरिस्पृशम् उपरि स्पृशतीति उपरिस्पृक् तमुच्चस्थानस्थितम् । उग्रमुत्कृष्टम् । चेत्तारं ज्ञातारं ज्ञेयस्य । अधिराजम् अधिकश्चासौ राजा च अधिराजस्तम् अधिपतिमीश्वरं कुर्वन्त्वित्यर्थः ॥ ४६ ॥

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना । प्रायुस्तारिष्टं नीरपांᳬसि मृक्षतᳬ सेधतं द्वेषो भवतᳬ सचाभुवा ॥ ४७ ॥

(१) आ नासत्या । आश्विनी जगती । आयातम् आग-

---

तत इन्द्राग्निभ्यामवबाधामहे तान् । अवनाशयामः तान् शत्रून् । किञ्च वसवः रुद्रा आदित्याश्च उपरिस्पृशं मा उपरिस्थितं स्पृशतीति उपरिस्पृक् आधिपत्येऽवस्थितं पादेन स्पृशतीति उपरिस्पृक् तम् उपरिस्पृशं माम् उग्रं च चेत्तारं ज्ञातारं च ज्ञेयस्य अधिराजम् अधिपतिमीश्वरं चाक्रन् कृतवन्तः कुर्वन्तु वा ॥ ४६ ॥

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । आ नासत्या । अश्विनोर्जगती । हे नासत्या नास-

च्छतम् हे नासत्यावश्विनौ। त्रिभिरेकादशैः त्रयस्त्रिंशद्भिर्देवैः सहितौ भूत्वा। तदुक्तम्। अष्टौ वसव इत्यादि। इह मधुपेयम्। मधुः सोमः सोमपानम्प्रति। एत्य च। आयुस्तारिष्टम्। प्रतारिष्टं प्रवर्द्धयतम् आयुः। नीरपांसि मृक्षतम्। मृजूष् शुद्धौ। रपः पापमुच्यते। निर्मृक्षतम्। निःशोधयतम् नाशयतम्। रपांसि पापानि। सेधते द्वेषः। षिधु गत्याम्। गमय तम् दौर्भाग्यम् भवतं च। सचा भुवा सहभुवौ सर्वकार्येषु संयुक्तौ॥ ४७॥

जगती अश्विदेवत्या। हे नासत्या नासत्यौ! हे अश्विनौ त्रिभिः एकादशैः त्रिगुणैरेकादशभिः त्रयस्त्रिंशत्संख्याकैः देवेभिः देवैः इह स्थाने मधुपेयं सोमपानं प्रति आयातमागच्छतम् मधुः सोमस्तस्य पेयं पानम्। किञ्च आयुः प्रतारिष्टम् तरतिर्वृद्ध्यर्थः प्रवर्धयतम्। रपांसि पापानि निर्मृक्षतं निःशेषं शोधयतम् नाशयतमित्यर्थः। द्वेषः दौर्भाग्यं सेधतं षिधु गत्याम् गमयतं नाशयतम्। सचाभुवा भवतम् सचा इत्यव्ययं सहार्थे सचा सह भवतस्तौ सचाभुवा क्विप् कार्य्येषु संयुक्तौ भवतम्। अष्टौ वसव इत्यादिना त्रयस्त्रिंशद्देवा गणिताः। तारिष्टम् तरतेर्लुङि मध्यमद्विवचनम् बहुलं छन्दस्यमाङ्योगेऽपीति (पा० ६, ४, ७५) अडभावः। मृक्षतम् मृजूष् शुद्धौ लेटोऽडाटौ सिब्बहुलं लेटीति (पा० ३, १, ३४) सिप् तस्थस्थमिपामिति पा० ३, ४, १०१) व्यत्ययेन थसः तमादेशः॥ ४७॥

एष व स्तोमो मरुत इयं गीर्मान्दार्यस्य मान्यस्य

---

त्यौ हे अश्विनौ आयातं त्रिभिरेकादशैस्त्रयस्त्रिंशद्देवैः सहितौ भूत्वा। तदुक्तम्। अष्टौ वसव इत्यादि। इह मधुपेयं मधुः सोमः सोमपानं प्रत्यागत्य आयुस्तारिष्टं प्रतारिष्टं प्रवर्द्धयतम्। आयुः नीरपांसि मृक्षतम्। मृजूष् शुद्धौ। रपः पापमुच्यते। निर्मृक्षतं निश्चित्य शोधयतं नाशयतं रपांसि पापानि सेधतं द्वेषः। षिधु गत्याम्। गमयतं नाशयतं द्वेषः दौर्भाग्यं भवतं सचाभुवा सहभुवौ कार्येषु संयुक्तौ॥ ४७॥

कारोः । एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुम् ॥ ४८ ॥

(१) एष वः । मारुती त्रिष्टुप् । हे मरुतः एष स्तोमः वः युष्माकम् इयं च गीः सत्या च प्रिया च । मम । मान्दार्यस्य ऋषेः समेति । स्वस्वामिसंबन्धम् । दृणातीति मान्दार्यः । यद्वा । मान्दारयति मान्दारयतीत्येवं यः सपत्नानां प्रत्ययं दधाति स मान्दार्यः तस्य । मम च । मान्यस्य मानार्हस्य कारोः कर्तुः तं स्तोमं तां च गिरम् उपश्रुत्य । एषायासीष्ट । आइषायासीष्ट। आयासीष्ट । आयासीरन् । इति वचनव्यत्ययः आगच्छत । इषा अन्नेन निमित्तभूतेनाहूयमानाः । तन्वे वयां । शरीरस्थित्यर्थम् । वयोदृढीकर्तुम् । आयासीष्ट । किञ्च । विद्याम लभेमहि । इषमन्नम् वृजनं बलं च जीरदानुं जीवितदातृ कर्म च ॥ ४८ ॥

मारुती त्रिष्टुप् । हे मरुतः ! कारोः कर्त्तुर्यजमानस्य एषः स्तोमः इयञ्च गीः सत्या च प्रिया च वो युष्मभ्यं युष्मदर्थे वर्त्तेत इति शेषः । किम्भूतस्य कारोः ? मान्दार्यस्य मां ममेति स्वस्वामिस-

---

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति तद्यथा । एष वः । मारुती त्रिष्टुप् । हे मरुतः एष स्तोमः वः युष्माकम् इयं च गीः सत्या प्रिया च मम । मान्दार्यस्य ऋषेर्ममेति स्वस्वामिसंबन्धं दृणातीति मान्दार्यः । अथवा मां दारयति मां दारयतीत्येवं यः सपत्नानां प्रत्ययमादधाति स मान्दार्यः । तस्य मम च मान्यस्य मानार्हस्य कारोः कर्तुः तं स्तोमं तां च गिरम् उपश्रुत्य एषायासीष्ट आ इषा आयासीष्ट । आगच्छत इषा अन्नेन निमित्तभूतेन आहूयमानाः । तन्वेवयां शरीरस्थित्यर्थं वयां वयोदृढीकर्तुम् आयासीष्ट किञ्च विद्याम लभेमहि इषमन्नं वृजनं बलं च जीरदानुं जीवितदातृ ॥ ४८ ॥

बन्धं दारयति इति मान्दार्यः तस्य वीतरागस्येत्यर्थः। यद्वा मां दारयतीत्येवं यः शत्रूणां प्रत्ययमादधाति मान्दार्यः। यद्वा मन्दारः कल्पवृक्षः तत्तुल्यो मान्दार्यः तस्य अथ कामपूरस्येत्यर्थः। मान्यस्य मानार्हस्य। किञ्च हे मरुतः! यूयमिषा अन्नेन निमित्तेन आयासीष्ट आगच्छत। किमर्थम्? वयां वयसाम् आमि टिलोप आर्षः बाल्ययौवनस्थाविराणां वयसां सम्बन्धिन्यै तन्वै शारीराय सर्वदा शरीरस्थित्यर्थमित्यर्थः अस्मच्छरीरं दृढीकर्तुमिति भावः। किञ्च इषमन्नं वृजनं बलं च वयं विद्याम लभेमहि। किम्भूतमिषं वृजनञ्च? जीरदानुं जीवयतीति जीरदानुस्तम् जीवेरौणादिको रदानुप्रत्ययः लोपो व्योर्वलीति (पा० ६, १, ६६) वलोपः जीवितदातृ बलमन्नं च वयं प्राप्नुयामेति प्रार्थना॥ ४८॥

**सहस्तोमाः सहच्छन्दस आवृतः सहप्रमा ऋषयः सप्त दैव्याः। पूर्वेषां पन्थामनुदृश्य धीरा अन्वालेभिरे रथ्यो न रश्मीन्॥ ४९॥**

(१)सहस्तोमाः। ऋषिसृष्टिप्रतिपादिका त्रिष्टुप्। सहस्तोमाः

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा। सहस्तोमाः। ऋषिसृष्टिप्रतिपादिका त्रिष्टुप् सहस्तोमाः स्तोमसहिताः। सहछन्दसः छन्दः सहिताः आवृतः सहावृताः। आवृच्छब्देन कर्माभिधीयते। श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः सहप्रमाः प्रमाणं प्रमा शब्दप्रमाणपरीक्षणतत्पराः ऋषयः सप्त सप्तऋषय इति प्राप्ते व्यत्ययः। भरद्वाजकश्यपगौतमात्रिविश्वामित्रजमदग्निवसिष्ठाः दैव्याः प्रजापतिप्राणाभिमानिनः एते अभिव्यज्यमानाः पूर्वेषाम् अधस्तनः कल्पोत्पन्नानाम्। अवसिताधिकाराणां पन्थां पन्थानम् अनुदृश्यावलोक्यधीरा अन्वालब्धवन्तः सृष्टवन्तः सृष्टियज्ञं कथमिव रथ्यो न रश्मीन्। रथे साधू रथ्यः सारथिः नकार उपमार्थीयः। यथा सारथिः इष्टदेशप्राप्त्यर्थं प्रथमं रश्मीन् आलभते स्पृशति एवं तेऽपि सृष्टियज्ञं सृष्टवन्तः॥ ४९॥

स्तोमसहिताः । सह छन्दसः छन्दस्सहिताः । आवृतः आवृच्छ-ब्देन कर्माभिधीयते । श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः । प्रमाणं प्रमा । शब्दप्रमाणपरीक्षणतत्पराः ऋषयः सप्त सप्तऋषयः इति प्राप्ते व्यत्ययः । भरद्वाजकश्यपगौतमात्रि-विश्वामित्रजमदग्निवसिष्ठाः । दैव्याः प्रजापतेः प्राणाभिमानिनः एते अभिव्यज्यमानाः । पूर्वेषाम् अधस्तनकल्पोत्पन्नानाम् अव-सिताधिकाराणाम् । पन्थाम् पन्थानम् । अनुदृश्य अवलोक्य । धीराः अन्वालेभिरे अन्वालभन्त सृष्टवन्तः सृष्टियज्ञम् कथमि-व । रथ्यो न रश्मीन् । रथे साधुः रथ्यः सारथिः । नकार उपमार्थीयः । यथा सारथिरिष्टदेशप्राप्त्यर्थं प्रथममश्वरश्मीनाल-भते स्पृशति एवन्तेऽपि सृष्टियज्ञं सृष्टवन्तः ॥ ४९ ॥

ऋषिसृष्टिप्रतिपादिका त्रिष्टुप् । दैव्याः सप्त ऋषयः देवस्य प्रजापतेः इमे दैव्याः प्रजापतिप्राणाभिमानिनः सप्त ऋषयः भरद्वा-जकश्यपगोतमात्रिवसिष्ठविश्वामित्रजमदग्निसंज्ञाः । अन्वालेभिरे सृष्टवन्तः सृष्टियज्ञमिति शेषः । किं कृत्वा ? पूर्वेषां पन्थां पन्थान-मनुदृश्य अधस्तनकल्पोत्पन्नानामवसिताधिकाराणां मार्गं विलोक्य पूर्वकल्पोत्पन्नैर्ऋषिभिर्यथा सृष्टं तथा सृष्टवन्त इत्यर्थः । सूर्या-चन्द्रमसौ धाता यथापूर्वमकल्पयदित्युक्तेः । कथमिव ? रथ्यो न रश्मीन् नकार उपमार्थः रथे साधुः रथ्यः रथो यथा इष्टदेशप्रा-प्त्यर्थं प्रथमं रस्मीन् प्रग्रहानालभते स्पृशति सृजति वा तथा ते-ऽपि सृष्टियज्ञं सृष्टवन्तः । किम्भूता ऋषयः ? सहस्तोमाः स्तोमस-हिताः । सहच्छन्दसः छन्दोभिर्गायत्र्यादिभिः सहिताः । आवृतः अत्रापि सहशब्दाध्याहारः आवृच्छब्देन कर्मोच्यते सहावृतः कर्म-सहिताः श्रद्धासत्यप्रधानानां कर्मणामनुष्ठातारः । सहप्रमाः प्रमाणं प्रमा तत्सहिताः शब्दप्रमाणपरीक्षणतत्पराः । धीराः धीमन्तः ॥४९॥

आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम् । इदꣳ हि-रण्यं वर्चस्वज्जैत्रायाविशतादु माम् ॥ ५०

(१) आयुष्यम् । तिस्रः हिरण्यस्तुतिः उष्णिक्शक्करीत्रिष्टुभः । यदिदं हिरण्यम् । आयुष्यम् आयुषे हितम् । वर्चस्यं वर्चसे हितम् । रायस्पोषम् धनस्य वर्द्धयितृ औद्भिदम् उद्भेतृ । धनस्य स्वर्गस्य वा । वर्चस्वत् अन्नसंयुक्तम् । तत् जैत्राय विजयाय । आविशतात् आविशतु । उः पादपूरणार्थः । माम् । मय्यवस्थानं करोतु ॥ ५० ॥

त्रिस्रः उष्णिक्शक्करीत्रिष्टुभः दक्षदृष्टाः । हिरण्यस्तुतिः । इदं हिरण्यं कनकं जैत्राय जयाय मामु मामेवाविशतात् आविशतु मयि तिष्ठतु । कीदृशम् ? आयुष्यमायुषे हितम् वर्चस्यं वर्चसे तेजसे हितम् रायो धनस्य पोषं पोषयितृ वर्धकम् औद्भिदम् उद्भिनत्तीति उद्भित् उद्भिदेवौद्भिदमुद्भेत्तृ धनस्य स्वर्गस्य वा प्रकाशकम् व- वर्चस्वत् अन्नसंयुक्तम् ॥ ५० ॥

न तद्रक्षा॑ᳪसि॒ न पि॑शा॒चास्त॑रन्ति दे॒वाना॒मोजः॑ प्रथम॒जᳪ ह्ये॒तत् । यो बि॒भर्त्ति॑ दाक्षाय॒णᳪ हिर॑ण्य॒ᳪ स दे॒वेषु कृणुते दी॒र्घमायुः॒ स म॑नु॒ष्येषु कृणुते दी॒र्घ- मायुः॑ ॥ ५१ ॥

(२) न तत् । न तत् हिरण्यं रक्षांसि नच पिशाचाः तर-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । आयुष्यम् । तिस्रः दक्षदृष्टाः हिरण्यस्तुतिः । उ- ष्णिक्शक्करीत्रिष्टुभः । यदिदं हिरण्यमायुष्यम् आयुषे हितं व र्चस्यं वर्चसे हितं रायस्पोषं धनस्य वर्द्धयितृ । उद्भिदं उद्भेत्तृ ध- नस्य स्वर्गस्य वा वर्चस्वत् अन्नसंयुक्तं ततः जैत्राय जयाय आवि- शतात् आविशतु मां मयि अवस्थानं करोतु । उः पादपूरणः ॥५०॥

(२)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । न तत् हिरण्यं रक्षांसि च न पिशाचाः तरन्ति हिंसन्ति देवानां प्रथमजम् ओजो हि एतत् यतश्चैतद्देवानामोजः

न्ति हिंसन्ति । देवानां प्रथमजम् ओजः हि एतत् । यतश्च देवानामोजः प्रथमजम् अतः यो बिभर्ति दाक्षायणं हिरण्यम् । दाक्षायणं हिरण्यम् । दाक्षायणमित्यलङ्कारविशेषः । स देवेषु देवलोकेषु कुरुते दीर्घमायुः चिरं देवलोके वसतीत्यर्थः । स मनुष्येषु कुरुते दीर्घमायुः । स च मानुष्यमायुरतिक्रम्य जीवतीत्यर्थः ॥ ५१ ॥

रक्षांसि पिशाचाश्च तत् हिरण्यं न तरन्ति न हिंसन्ति हि यस्मात् एतत् हिरण्यं देवानां प्रथमजमोजः प्रथमोत्पन्नं देवानां तेज एवेदम् । अत एव यो हिरण्यं दाक्षायणं बिभर्त्ति अलङ्कारत्वेन धारयति दाक्षायणशब्दोऽलङ्कारार्थः स देवेषु देवलोकेषु दीर्घमायुः कृणुते कुरुते देवलोके चिरं वसतीत्यर्थः स च मनुष्येषु मनुष्यलोकेषु स्वमायुर्दीर्घं कृणुते मनुष्यायुरतिक्रम्य जीवति ॥ ५१ ॥

यदाबध्नन् दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः । तन्म आबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥ ५२ ॥

(१) यदाबध्नन् । यत् हिरण्यम् आबध्नन् आबद्धवन्तः ।

---

प्रथमम् अतो यो बिभर्त्ति दाक्षायणं हिरण्यं दाक्षायणमित्यलङ्कारविषयः । स देवेषु देवलोकेषु कुरुते कुरुते आत्मनो दीर्घमायुः चिरं देवलोके वसतीत्यर्थः । स च मनुष्येषु मनुष्यलोकेषु कुरुते दीर्घमायुः । मानुष्यमायुरतिक्रम्य जीवतीत्यर्थः ॥ ५१ ॥

(१)अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । यदाबध्नन् । यत् यदाबध्नन् हिरण्यम् आबद्धवन्तः दाक्षायणः दक्षस्यापत्यानि नडादिपाठात् फक् शतानीकाय राज्ञे शतं बहूनि अनीकानि यस्य स तथोक्तः सुमनस्यमानाः शोभनं मनस्याध्यायन्तः तत् हिरण्यं मे मयि आत्मनीति सम्यगुक्तिः अहमाबध्नामि शतं शतशारदाय शतं शरदो जीवनाय आयु-

दाक्षायणः दक्षस्यापत्यानि बहूनि । नडादिपाठात्फक् । शतानीकाय राज्ञे । शतं बहूनि अनीकानि सेना यस्य स तथोक्तस्तस्मै शतानीकाय । सुमनस्यमानाः शोभनेन मनसा ध्यायन्तः । तत् हिरण्यम् । मे मयि । आबध्नामीति सम्यगुक्तिः । अहम् आबध्नामि । शतशारदाय । शतं शरदां जीवनाय । आयुष्मान् च जरदष्टिः जरामश्नुते व्याप्नोतीति जरदष्टिः । यथा येन प्रकारेण असं भूयासम् तथा बध्नामीति शेषः ॥ ५२ ॥

दाक्षायणाः दक्षस्यापत्यानि नडादित्वात् फक् दक्षवंशोत्पन्ना ब्राह्मणा यत् हिरण्यं शतानीकाय राज्ञे अबध्नन् बबन्धुः शतं बहूनि अनीकानि सैन्यानि यस्य सः शतानीकस्तस्मै । किम्भूताः दाक्षायणाः ? सुमनस्यमानाः मनसि शोभनं ध्यायन्तः शोभनं मनः कुर्वते सुमनस्यन्ते सुमनस्यन्ते सुमनस्यमानाः । तत् हिरण्यं मे मयि आबध्नामि किमर्थं शतशारदाय शतं शरदो जीवनाय । यथा येन प्रकारेण हिरण्यबन्धनाख्येन अहमायुष्मान् दीर्घजीवी जरदष्टिश्च आसं भूयासम् तथा आबध्नामि । जरत् जरामश्नुते व्याप्नोति जरदष्टिः यद्वा जरन्ती जरां प्राप्ता अष्टिः शरीरं यस्य स जरदष्टिः ॥ ५२ ॥

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात् पृथिवी समुद्रः । विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥ ५३ ॥

उत नः । बहुदेवत्या त्रिष्टुप् । उत अपि च । नः अस्मा-

---

ष्मांश्च जरदष्टिः जरामश्नुते व्याप्नोति । जरदष्टिः यथा येन प्रकारेण असं भूयासं तथा बध्नामीति सम्बन्धः ॥ ५२ ॥

(१)अत्र वाराणसी० लि० पु० समन्तोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । उत नः बहुदेवत्या त्रिष्टुप् । उत नः अपि च नः अस्माकं वचांसि अहिर्बुध्न्यः शृणोतु अज एकपाद् रुद्रः प्राणो वा पृथिवी च शृणोतु समुद्रश्च शृणोतु श्रुत्वा च अवन्तु अवन्तु विश्वे

कम् । वचांसि अहिर्बुध्न्यः शृणोतु । अज एकपात् रुद्रः प्राणो वा शृणोतु । पृथिवी च समुद्रश्च शृणोतु । श्रुत्वा च अवन्तु । विश्वे च देवाः ऋतावृधः सत्यवृधः यज्ञवृधो वा । हुवाना आहूयमानाः । स्तुताश्च । मन्त्रा मन्त्रैरिति विभक्तिव्यत्ययः । कविशस्ता मेधाविशस्ताः अवन्तु पालयन्तु ॥ ५३ ॥

बहुदेवत्या त्रिष्टुप् । उत अपि च अहिर्बुध्न्यः रुद्रविशेषः शृणोतु नः अस्माकं वचांसीति शेषः अज एकपात् रुद्रः प्राणो वा शृणोतु पृथिवी च शृणोतु समुद्रश्च शृणोतु विश्वे देवाश्च शृण्वन्तु । श्रुत्वा च ते अहिर्बुध्न्यादयः अवन्तु पालयन्तु अस्मान् । किम्भूतास्ते ? ऋतावृधः सत्यवृधो वा । हुवाना आहूयमानाः मन्त्रैरिति विभक्तिव्यत्ययः स्तुताः । कविशस्ताः मेधाविभिः पूजिताः ॥ ५३ ॥

इमा गिरं आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि । शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अꣳशः ॥ ५४ ॥

(१) इमा गिरः । आदित्यदेवत्या त्रिष्टुप् । या इमा गि-

---

देवा ऋतावृधः । सत्यवृधो यज्ञवृधो वा हुवाना आहूयमानाः स्तुताश्च मन्त्राः मन्त्रैरिति विभक्तिव्यत्ययः कविशस्ता मेधाविशस्ताः अवन्तु पालयन्तु ॥ ५३ ॥

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । इमा गिरः । आदित्यदेवत्या त्रिष्टुप् या इमा गिरो वाचः आदित्येभ्यः घृतस्नूः घृतश्राविणीर्घृतप्रसारिणीर्वा घृतहोमसहचरिताः सनात् चिरकालं राजभ्यः चिरराजभ्यो वा राजृ दीप्तौ दीपनशीलेभ्योऽर्थाय जुह्वा स्रुचा जुहोमि ताश्च शृणोतु मित्रः अर्यमा च भगश्च नः अस्माकं तुविजाताश्च बहुजातवातो वा त्वष्टा वा स हि बहुशः प्रजायते वरुणश्च दक्षश्च अंशश्च व्यापनः ॥५४॥

रः वाचः आदित्येभ्यः घृतस्नूः । घृतप्रस्राविणीः घृतप्रक्षारिणीर्वा । घृतहोमसहचारिताः । सनात् चिरम् चिरकालम् राजभ्यः चिरं राजभ्यो वा । जुह्वा स्रुचा जुहोमि । ताश्च । शृणोतु मित्रः अर्यमा च । भगश्च नः अस्माकम् । तुविजातश्च धाता च । सहि बहुशः प्रजायते । वरुणश्च दक्षश्च अंशश्च एते सूर्यविशेषाः ॥ ५४ ॥

आदित्यदेवत्या त्रिष्टुप् । इमा गिरो वाचः जुह्वा स्रुचा कृत्वा आदित्येभ्यो जुहोमि स्तुतिलक्षणा वाणीर्बुद्धिरूपया स्रुचादित्येभ्यः समर्पयामीत्यर्थः । किम्भूता गिरः ? घृतस्नुः घृतं स्नुवन्ति स्रवन्तिताः घृतस्रवः ता घृतस्नूः तुगभावश्चार्षः घृतप्रसारिणीर्घृतहोमसहचरिता वा । किम्भूतेभ्यः आदित्येभ्यः ? सनात् चिरकालं राजभ्यः दीप्यमानेभ्यः । ताः स्रुचाहूयमाना गिरो नोऽस्माकं गिरः शृणोतु । कः ? मित्रः अर्यमा भगश्च । तुविजातो बहुजातः त्वष्टा वातो वा स हि बहुशः प्रजायते । वरुणः दक्षः अंशश्च । एते सूर्यविशेषाः ॥ ५४ ॥

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥ ५५ ॥

(१) सप्त ऋषयः । अध्यात्मवादिनी जगती । सप्त प्राणाः

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । सप्तऋषयः अध्यात्मवादिनी जगती ये सप्तऋषयः सप्तप्राणाः षडिन्द्रियाणि मनःसप्तमानि प्रतिहिताः प्रतिनिहिताः शरीरे व्यवस्थिताः ये त एव सप्त रक्षन्ति सदं सदाकालं शरीरप्रमादं प्रमादमकुर्वाणाः ता एव सप्त आपः आपनाः व्यापनाः स्वपतः पुरुषस्य लोकमीयुः लोकशब्देन च ज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते । तत्र हि संवित् स्थानं तत्र तस्यामवस्थायां जागृतः

षडिन्द्रियानि मनःसप्तमानि । प्रतिहिताः प्रतिनिहिताः शरीरे व्यवस्थिताः ये त एव । सप्त रक्षन्ति । सदं सदाकालम् शरीरम् । अप्रमादम् प्रमादमकुर्वाणः । ते एव सप्त आपः आपनाः व्यापनाः । स्वपतः पुरुषस्य लोकम् ईयुः । लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठित उच्यते । तत्र च संवित्स्थाने । तस्यामेवावस्थायाम् जागृतः जागरणं कुर्वाते । अस्वप्नजौ । ययोर्न जायते स्वप्नः तौ तथोक्तौ । सत्रसदौ । सत्रे सतां त्राणे कृतावस्थानौ । देवौ जीवितदातारौ प्राणापानौ ॥ ५५ ॥

अध्यात्मवादिनी जगती । सप्त ऋषयः प्राणाः त्वक्चक्षुः श्रवणरसनाघ्राणमनोबुद्धिलक्षणाः शरीरे प्रतिहिताः व्यवस्थिताः ते सप्त स्वपतो नरस्य लोकमात्मानमीयुः प्राप्नुवन्ति लोकशब्देन विज्ञानात्मा हृदयाकाशप्रतिष्ठ उच्यते । किम्भूताः सप्त ? आपः आप्नुवन्ति देहमित्यापः व्यापनाः । तत्र तस्यामृषीणां लोकगमनावस्थायां देवौ दीप्यमानौ प्राणापानौ जागरणं कुर्वाते । कीदृशौ ? अस्वप्नजौ न स्वप्नो निद्रा जायते ययोस्तौ अस्वप्नजौ । तथा सत्रसदौ सतां जीवानां त्राणं रक्षणं सत्रम् तत्र सीदतः तौ सत्रसदौ जीवितदातारावित्यर्थः ॥ ५५ ॥

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ ५६ ॥

(१) उत्तिष्ठ । तिस्रो ब्राह्मणस्पत्यः द्वे बृहत्यौ तृतीया त्रि-

---

जागरणं कुर्वाते अस्वप्नजौ ययोर्न जायते स्वप्नः तौ अश्वप्नजौ सत्रसदौ सत्रदेवौ यत्रेशतां जीवानां त्राणे कृतावस्थानौ जीवितदातारौ प्राणापानौ ॥ ५५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । उत्तिष्ठ तिस्रो ब्राह्मणस्पत्यः द्वे बृहत्यौ तृतीया त्रिष्टुप् हे ब्रह्मणस्पते उत्तिष्ठ ऊर्ध्वो भव आरब्धकार्यो भव यस्माद् देवयन्तः देवान् कामयमानाः त्वा त्वां भवन्तम् ईमहे याचामहे

ष्टुप् । हे ब्रह्मणस्पते उत्तिष्ठ उर्ध्वो भव आरब्धकार्यो भव । यस्मात् देवयन्तः देवान्कामयमानाः यजमानाः त्वा भवन्तम् ईमहे । याचामहे आगच्छेति । भवन्तमागच्छन्तम् उपप्रयन्तु उपसंगम्य आगच्छन्तु । मरुतः सुदानवः कल्याणदानाः । त्वञ्च हे इन्द्र प्राशूः प्रकर्षेण शीघ्रो भव । सचा । सहगमनाय ॥५६॥

तृचो ब्रह्मणस्पतिदैवतः द्वे बृहत्यौ तृतीया त्रिष्टुप् । हे ब्रह्मणो देवस्य पते पालक ! उत्तिष्ठ ऊर्ध्वः आरब्धकार्य्यो भव । यतो वयं देवयन्तो देवान् कामयमानाः त्वा त्वामीमहे याचामहे आगच्छेति । मरुतः भवन्तमागच्छन्तमुप समीपे प्रयन्तु आगच्छन्तु । किम्भूताः मरुतः ? सुदानवः शोभनं ददति ते सुदानवः । हे इन्द्र ! त्वमपि सचा सह गमनाय प्राशूः । प्रकर्षेण शीघ्रो भव ॥ देवान् कामयन्ते देवयन्ति ततः शतृप्रत्ययः सुप आत्मनः क्यच् ( पा० ३, १, ८ ) न छन्दस्यपुत्रस्येति ( पा० ७, ४, ३५ ) निषेधात् क्यचि चेतीत्वाभावः ( पा० ७, ४, ३३ ) अश्वाघस्यादिति ( पा० ७, ४, ३७) अश्वाघयोरेवाकारविधानादकृत्सार्वधातुकयोरिति (पा० ७, ४, २५ ) दीर्घोऽपि न स्यात् । ईमहे याचितिकर्मसु पाठनः ( निघ० ३, १९, १ ) ई गतौ दिवादित्वादागतस्य श्यनश्छान्दसो लोपः । सुदानवः दाभाभ्यां नुः ( उणा० ३, ३२ ) प्राशूः आशुशब्दो दीर्घश्छान्दसः । भवा संहितायां द्व्यचोऽतस्तिङ इति ( पा० ६, ३, १३५ ) दीर्घः ॥ ५६ ॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् । यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥५७॥

(१) प्रनूनम् । नूनमिति पादपूरणः । प्रवदति प्रोच्चारयति

आगच्छेति भवन्तमागच्छन्तम् उपप्रयन्तु उपसंगम्यागच्छन्तु मरुतः सुदानवः कल्याणदानवः कल्याणदानाः त्वं च हे इन्द्र प्राशूः प्रकर्षेण शीघ्रो भव सचा सहगमनाय ॥ ५६ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । प्रनूनम् । नूनमिति पादपूरणः । प्रवदति प्रोच्चार-

ब्रह्मणस्पतिः मन्त्रम् उक्थ्यम् उक्थमिति शास्त्रमुच्यते । तत्र सत्तमन्मन्त्रः उक्थ्यः । कथंभूतोऽसौ मन्त्रः । यस्मिन् मन्त्र इन्द्रश्च वरुणश्च अर्यमा च अन्ये देवाश्च ओकांसि । ओक इति निवासनाम । निवासानि चक्रिरे कृतवन्तः ॥ ५७ ॥

ब्रह्मणस्पतिः नूनं निश्चितमुक्थ्यं शास्त्रयोग्यं मन्त्रं प्रवदति प्रकर्षेणोच्चारयति यस्मिन् मन्त्रे इन्द्रः वरुणः मित्रः अर्यमा अन्ये च देवा ओकांसि निवासान् चक्रिरे कृतवन्तः । सर्वदेवाधारभूतं शास्त्रं पठनीयं मन्त्रवदित्यर्थः ॥ ५७ ॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व । विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ य इमा विश्वा । विश्वकर्मा । यो नः पिता । अन्नपतेऽन्नस्य नो देहि ॥ ५८ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

(१) ब्रह्मणस्पते । हे ब्रह्मणस्पते । त्वम् अस्य जगतः य-

---

यति ब्रह्मणस्पतिः मन्त्रम् उक्थ्यम् उक्थमिति शास्त्रमुच्यते तत्र साधुर्मन्त्र उक्थ्य उच्यते कथम्भूतोऽसौ मन्त्रः यस्मिन् मन्त्रे इन्द्रश्च वरुणश्च मित्रश्च अर्यमा च अन्ये च देवा ओकांसि ओक इति निवासनाम उच्यते निवासनानि चक्रिरे कृतवन्तः ॥ ५७ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । ब्रह्मणस्पते हे ब्रह्मणस्पते त्वमस्य जगतः यन्ता एवंचेद्विज्ञापयामि सूक्तस्य साधुवनस्य स्वरूपं बोधि बुध्यस्व अवगतार्थो भव तनयं च अपत्यानि च जिन्व जिन्वतिः प्रीतिकर्मा प्रीणीहि विश्वं च तद्भद्रमस्माकम् अस्तु यदवन्ति यत्पालयन्ति देवाः

न्ता। एवश्चेत् विज्ञापयामि। सूक्तस्य साधुवचनस्य बोधि बुध्यस्व अवगतार्थो भव। तनयश्च। अपत्यानि च जिन्व। जिन्वतिः प्रीतिकर्मा। प्रीणीहि। विश्वं च तत् भद्रं भन्दनीयम् अस्माकम् अस्तु। यत् अवन्ति पालयन्ति देवाः त्वत्प्रसादात्। बृहत् महत् ऊर्जितम्। वदेम। दीयतां भुज्यतामिति। विदथे यज्ञे। सुवीराः कल्याणपुत्राः सन्तः। अथ चतस्रः प्रतीकोक्ताः। इमा विश्वा भुवनानि जुह्वत्। विश्वा कर्मा विमना। यो नः पिता। अन्नपतेऽन्नस्य नो देहीति॥ ५८॥

इति उव्वटकृतौ मन्त्रभाष्ये चतुस्त्रिंशत्तमोऽध्यायः॥ ३४॥

हे ब्रह्मणस्पते! त्वं यतोऽस्य जगतो यन्ता नियन्ता अतः प्रार्थ्यते सूक्तस्यास्मदुक्तस्य साधुवचनस्य कर्मणि षष्ठी सूक्तम् बोधि-बुध्यस्व अस्मदुक्ता स्तुतिर्भवता ज्ञायतामित्यर्थः। तनयं च अस्मदपत्यानि जिन्व प्रीणीहि जिन्वतिः प्रीतिकर्मा। देवा यत् भद्रं कल्याणमवन्ति पालयन्ति तत् विश्वं सर्वं भद्रमस्माकमस्त्विति शेषः। किञ्च सुवीराः कल्याणपुत्राः सन्तो वयं विदथे यज्ञे बृहत् महत् वदेम दीयतां भुज्यतामित्यादि उच्चारयेम॥ अथ चतस्रः कण्डिकाः प्रतीकोक्ताः य इमा विश्वा भुवनानि जुह्वत् ( १७, १७ ) विश्वकर्मा विमनाः ( १७, २६ ) यो नः पिता ( १७, २७ ) अन्नपतेऽन्नस्य नो देहि ( ११, ८३ ) इति। ता ब्रह्मयज्ञेऽध्येयाः॥ ५८॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
चतुस्त्रिंशोऽयमध्यायो ब्रह्मयज्ञार्थकोऽगमत्॥ ३४॥

त्वत्प्रसादात् बृहत् महत् ऊर्जितं वदेम दीयतां भुज्यतामिति विदथे यज्ञे आत्मीये वा वेदने सुवीराः कल्याणपुत्राः सन्तो वयम। अथ चतस्रः प्रतीकोक्ताः। य इमा विश्वा भुवनानि जुह्वत् विश्वकर्मा विमनाः यो नः पिता अन्नपते अन्नस्य नो देहीति॥ ५८॥

इत्युव्वटकृतौ मन्त्रभाष्ये चतुस्त्रिंशोऽध्यायः॥ ३४॥

# पञ्चत्रिंशोऽध्यायः ।

अपेतो यन्तु पणयोऽसुम्ना देवपीयवः । अस्य लोकः सुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ॥ १ ॥

(१) ओम् । अपेतः । पित्र्योऽध्यायः । आदित्यस्यार्षं देवानां वा । गायत्री । पलाशशाखया व्यूहति । अपेतो यन्तु पणयः । अपयन्तु इतः स्थानात् पणयः असुराः । असुम्नाश्च असुखकराः । देवपीयवश्च । पीयतिर्हिंसाकर्मा । देवानां हिंसितारः देवद्विषः । किमिति । अस्य यजमानस्य लोकः स्थानमत्र सुतावतः सोमाभिषवं कृतवतः । परं यजुः । द्युभिरहोभिरक्तुभिः । द्युशब्देन श्रुतौ ऋतव उक्ताः ऋतुभिः अहोभिः अक्तुभिः रात्रिभिः व्यक्तं स्पष्टीकृतम् । यमः ददातु अवसानम् अवस्यत्यस्मिन्नित्यवसानम् । अस्मै यजमानाय ॥ १ ॥

त्रयस्त्रिंशेऽध्याये सर्वमेधसम्बन्धिनः कियतो मन्त्रानुक्त्वा प्रवायुमच्छेत्यारभ्य ( ३३, ५५ ) अनारभ्याधीतान्मान्त्रानुक्त्वा चतु-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । अपेतः पित्र्योऽध्यायः । आदित्यास्यार्षं देवानां वा-गायत्री पलाशशाखया व्युदूहति इतो यन्तु पणयः अपयन्तु इतः स्थानात् पणयः असुराः असुम्नाश्च असुखकराः देवपीयवश्च पीयतिर्हिंसाकर्मा देवानां हिंसितारः देवद्विषः किमिति अस्य यजमानस्य लोकः स्थानं सुतावतः सोमाभिषवं कृतवन्तः परं यजुः द्युभिरहोभिरक्तुभिः द्युशब्देन श्रुतौ ऋतव उक्ताः ऋतुभिः अक्तुभिः रात्रिभिर्व्यक्तं स्पष्टीकृत्वा यमः ददातु अवसानम् अवस्यत्यस्मिन्नित्यवसानम् यस्मै यजमानाय ॥ १ ॥

स्त्रिंशेऽध्याये तानेव समाप्येदानीं पञ्चत्रिंशेऽध्याये पितृमेधसम्ब-न्धिनो मन्त्रा उच्यन्ते। स च पितृमेधो मृतस्य वर्षास्मरणे भवति वर्षस्मृतौ तु विषमवर्षेषु भवति एकतारकनक्षत्रे चित्रादौ दर्शे वा ग्रीष्मे शरदि माघे भवति॥ पितृमेधं करिष्यता द्विजेन कुम्भेऽस्थि-सञ्चयः कार्य्यः। मृतस्य च यावन्तोऽमात्यपुत्रपौत्रास्तावन्तः कु-म्भाः कर्मदिने आनेयाः कुम्भेभ्योऽधिकानि छत्राणि च। ततोऽरण्ये कुम्भे कृतमस्थिसञ्चयनं ग्रामसमीपे समानीय शय्यायां कुम्भं सं-स्थाप्याहतवस्त्रैकदेशेन संवेष्ट्य मोहमयवादित्रेषु वाद्यमानेषु वी-णायां च वाद्यमानायां मृतस्य पुत्रपौत्रा उत्तरीयैर्व्यजनैश्चास्थिकुम्भं वीजयन्तस्त्रिस्त्रिः प्रदक्षिणं परियन्ति। स्त्रियोऽपीति केचित्। रात्रेः पूर्वमध्यापरभागेषु तद्दिने बह्वन्नदानं कुर्वन्ति नृत्यगीतवादित्राणि च कारयन्ति अस्थिकुम्भायान्नमुपहरन्ति च। तत उपप्रातरस्थि-कुम्भसहिताः पूर्वोक्तान् कुम्भान् छत्राणि चादाय ग्रामाद्दक्षिणस्यां बहिर्गच्छन्त्यध्वर्युयजमानामात्याः। श्मशानान्तं कर्म कुर्वता यथा रविरुदयेत्तथा रात्रावारब्धव्यम् तत्र वने गत्वा ग्रामान्मार्गादश्वत्थ तिल्वकहरिद्रुस्फूर्जकविभीतकश्लेष्मान्तककोविदारादिभ्यश्च दूरे अन्यवृक्षगुल्मादिवृते ऊषरे वोदकप्रवणे दक्षिणप्रवणे समे वा सुख-कारिणि रम्ये वनादुदकाद्वा पूर्वभागे वा वर्त्तमाने गर्त्तवति वीरण-तृणवति प्रदेशे श्मशानार्थं दिक्कोणं पुरुषप्रमाणं क्षेत्रं मिमीते। पंतृ-क्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाप्य-रिति शुल्वोक्तविधिना ( यजुः परिशिष्ट० ७, २ ) तच्च-तुरस्रमुत्तरतः पश्चाच्च पृथु भवति। तत्र साधनप्रकारः पूर्व-दक्षिणपार्श्वयोर्नवाङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहि-तानि पुरुषप्रमाणमध्ये न्यूनानि कार्य्याणि पश्चिमोत्तरपा-र्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि तथाहि पुरुषमात्रक्षे-त्रस्याश्रयां प्राचीं कृत्वा तत्प्रान्तयोः शङ्कू निखाय सार्द्धाष्ट-दशाङ्गुलहीनां पुरुषद्वयप्रमाणामुभयतःपाशां रज्जुं मध्यमदेशे सल-क्षणां कृत्वा पूर्वापरयोः शङ्क्वोस्तस्याः पाशौ प्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिणः कोणः साधनीयः ततः सार्द्धाष्टदशाङ्गु-लाधिका पुरुषद्वयप्रमाणां रज्जुमुभयतःपाशां मध्यलक्षणयुतां कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोणः सा-

ध्य इति । ततःपूर्वादिकोणेषु पालाशशमीवारणाश्ममयाश्चत्वारः शङ्कवो निखेयाः । एतत् कुर्वतां निकटे कश्चिद्यजमानपुरुषस्तृणपूलकमुच्छ्रित्य धारयेत् । कर्मसमाप्तौ गृहमागत्य तं गृहेषूच्छ्रयेत् प्रजावृद्ध्यै । इत्यादि बोध्यम् ॥ कात्यायनः ( २१, ३, ३२ ) अपसलवि सृष्टया रज्ज्वा परितत्यापेतो यन्त्विति पलाशशाखया व्युदूहतीति । अपसलवि अप्रादक्षिण्येन निष्पादितया रज्ज्वा तत् क्षेत्रं समन्तादप्रदक्षिणं संवेष्ट्यापेतो यन्त्विति मन्त्रेण क्षेत्रमध्यपतितं तृणपर्णादिकं पलाशशाखया कृत्वा क्षेत्राद्बहिर्निःकाशयतीति सूत्रार्थः ॥ अस्याध्यायस्य पितरो देवता आदित्या ऋषयो देवा वा । आद्या गायत्री । पणन्ति परद्रव्यैर्व्यवहरन्तीति पणयोऽसुराः इतोऽपयन्तु अपगच्छन्तु व्यवहिताश्चेति ( पा० १, ४, ८२ ) उपसर्गस्य यन्त्विति क्रियापदेन व्यवधानम् । किम्भूताः पणयः ? असुम्ना सुम्नमिति सुखनाम ( निघ० ३, ६ ) नास्ति सुम्नं येभ्यस्ते असुखकराः । तथा देवपीयवः पीयतिर्हिंसाकर्मा देवान् पीयन्ति हिंसन्ति ते देवपीयवः देवद्विषः । किमित्यसुराणामपगमोऽर्थ्यते तत्राह अस्य लोकः अस्य यजमानस्यास्थिभूतस्यायं लोकः स्थानम् । किम्भूतस्यास्य ? सुतवतः सोमाभिषवं कृतवतः सुषावेति सुतवान् तस्य षुञ् अभिषवे क्तवतुप्रत्ययान्तः अश्वरश्मिमतिसुमतीत्यादिना प्रातिशाख्यसूत्रेण ( ३, ६, २ ) संहितायां सुतशब्दस्याकारे दीर्घः ॥ द्युभिरहोभिरिति यजुः । यमोऽस्मै यजमानायावसानं ददातु अवस्यन्त्यस्मिन्नित्यवसानं स्थानम् किम्भूतं द्युभिर्ऋतुभिः अहोभिः दिवसैः अक्तुभिः रात्रिभिश्च व्यक्तं स्पष्टीकृतम् द्युशब्देन श्रुतौ ऋतवः उक्ताः तदेनमृतुभिश्चाहोरात्रैश्च सलोकं करोतीति श्रुतेः ( १३ ८, २, ३ ) ऋत्वाद्यधिष्ठातृदेवताभिः प्रकटितमस्मै यमो ददात्वित्यर्थः ॥ १ ॥

सविता ते शरीरेभ्यः पृथिव्यां लोकमिच्छतु ।
तस्मै युज्यन्तामुस्रियाः ॥ २ ॥

(१) जपति । सविता ते । गायत्री । सविता ते तव शरीरे-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । जपति । सविता ते । गायत्री । सविता ते तव यजमा

भ्यः शरीराणामिति विभक्तिव्यत्ययः। पृथिव्याम् लोकं स्थानम् इच्छतु। नहि सवित्राऽननुज्ञातेनावस्थातुं शक्यते। द्वितीयं वाक्यम्। तस्मै क्षेत्राय शरीराय संस्कारार्थम् युज्यन्तां शरीरे उस्रियाः अनड्वाहः॥ २॥

का० (२१, ३, ३४) औदुम्बरसीर उत्तरतो वा षड्गवे युज्यमानं युङ्क्तेति सम्प्रेष्य सविता त इति जपतीति। ततोऽध्वर्युस्तां पलाशशाखां निरस्य परिश्रिद्भिर्वेष्टयित्वा तत्क्षेत्रस्य दक्षिणत उत्तरतो वा षड्भिरनडुद्भिः सीरं युनक्ति तस्मिन् युज्यमाने युङ्क्तेति सम्प्रेष्य सवितेति मन्त्रं जपति॥ गायत्री। हे यजमान! सविता सूर्य्यः ते तव शरीरेभ्यः शरीराणां विभक्तिव्यत्ययः पृथिव्यां लोकं स्थानमिच्छतु सवित्रनुज्ञां विना न केनापि स्थातुं शक्यते। द्वितीयं वाक्यमाह तस्मै इति तस्मै सवित्रा दत्ताय क्षेत्राय संस्कारार्थम् उस्रियाः अनड्वाहो युज्यन्तां युक्ता भवन्तु॥ २॥

वायुः पुनातु। सविता पुनातु। अग्नेर्भ्राजसा। सूर्य्यस्य वर्चसा विमुच्यन्तामुस्रियाः॥ ३॥

(१)वायुः पुनातु। चतस्रः सीताः कर्षति। चतुर्भिर्यजुर्भिः। वायुः पुनातु विदारयतु। सविता पुनातु विदारयतु अग्नेर्भ्राजसा दीप्त्या विदारयतु। सूर्यस्य वर्चसा भ्राजिष्णुतया वि-

नस्य शरीरेभ्यः शरीराणामिति विभक्तिव्यत्ययः पृथिव्यां लोकं स्थानमिच्छतु नहि सवित्राननुज्ञातैरवस्थातुं शक्यते द्वितीयं वाक्यमाह तस्मै क्षेत्राय शरीराय संस्कारार्थे युज्यन्तां शरीरे उस्रियाः अनड्वाहः॥ २॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा वायुः पुनातु। चतस्रः सीताः कृषति चतुर्भिर्यजुर्भिर्वायुः पुनातु विदारयतु सविता पुनातु विदारयतु अग्नेर्भ्राजसा दीप्त्या सूर्यस्य वर्चसा भ्राजिष्णुतया विदारयतु विमुञ्चत्यनडुहः विमुच्यन्तां सीताः त उस्रियाः अनड्वाहः॥ ३॥

दारयतु । विमुच्यन्तामुस्त्रियाः विमुञ्चत्यनडुहः । विमुच्यन्तां शरीरात् उस्त्रियाः । अनड्वाहः ॥ ३ ॥

का० ( २१, ४, १—२ ) अनुरज्जु चतस्रः सीताः कृषति वायुः पुनात्विति प्रतिमन्त्रमुत्तरतः प्रतीचीं प्रथमामिति । अध्वर्युः परितो वेष्टितां रज्जुमनुलक्षीकृत्य वायुः पुनात्विति प्रतिमन्त्रं पादेन पादेन चतस्रः सीताः अप्रदक्षिणं कृषति तत्र प्रथमां सीतामुत्तरपार्श्वे प्रतीचीं कृषति दक्षिणतः सीरयोजनपक्षेऽपि तत्सीरमप्रदक्षिणमुत्तरत आनीय प्रथममुत्तरत एव कृषति । तदपसलवि पर्याहृत्योत्तरतः प्रतीचीं प्रथमाᳫं सीतां कृषति वायुः पुनात्विति सविता पुनात्विति जघनार्द्धेन दक्षिणामग्नेर्भ्राजसेति दक्षिणार्द्धेन प्राचीᳫं सूर्य्यस्य वर्चसेत्यग्रेणोदीचीमिति ( १३, ८, २, ६ ) श्रुतेः ॥ चत्वारि यजूंषि लिङ्गोक्तदेवतानि । हे पृथिवि ! वायुः त्वां पुनातु विदारयतु सूर्य्यः त्वां पुनातु अग्नेर्भ्राजसा दीप्त्या सूर्य्यस्य वर्चसा तेजसा च त्वां विदारयतु ॥ का० ( २१, ४, ४ ) अनडुहो विमुच्य विमुच्यन्तामिति । एवं पूर्वोक्तचतुर्मन्त्रैः पार्श्वचतुष्के कर्षणं कृत्वा मध्येऽपि सर्वं क्षेत्रं यथा कृष्टं भवति तथा परिमिताः सीताः कृत्वा वृषभान् सीराद्विमुञ्चति ॥ यजुः वृषदैवतम् । उस्रा धेनुः तदपत्यानि उस्त्रियाः अनड्वाहो विमुच्यन्तां सीराद्वियुज्यन्ताम् ॥ ३ ॥

अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्स नवथ पूरुषम् ॥ ४ ॥

(१) अश्वत्थे वः इति व्याख्यातम् ॥ ४ ॥

का० ( २१, ४, ४ ) दक्षिणा सीरं निरस्याश्वत्थे व इति सर्वौषधं वपतीति । हलं दक्षिणदिशि तूष्णीं प्रक्षिप्य कृष्टक्षेत्रमध्ये सर्वौषधं वपति ॥ अनुष्टुप् व्याख्याता ( १२, ७९ ) ॥ ४ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । अश्वत्थे वः इति व्याख्यातम् ॥ ४ ॥

**स॒वि॒ता ते॒ शरी॑राणि मा॒तुरु॒पस्थ॒ आव॑पतु । तस्मै॑ पृथिवि॒ शं भ॑व ॥ ५ ॥**

(१) शरीराणि निवपति । सविता ते । गायत्री । सविता ते तव शरीराणि अस्थीनि । मातुः पृथिव्याः उपस्थे उत्संगे आवपतु स्थापयतु । तस्मै अस्थिरूपाय यजमानाय सवित्रा उप्ताय । हे पृथिवि शम्भव सुखरूपा भव ॥ ५ ॥

का० ( २१, ४, ५ ) सविता त इति शरीराणि निवपति मध्ये इति । तस्य पुरुषमात्रस्य क्षेत्रस्य मध्ये शरीराणि मृतस्यास्थीनि राशीकरोति एतच्च सूर्य्योदयकाले कर्त्तव्यम् यथा कुर्वतोऽभ्युदियादिति ( १३, ८, ३, २ ) श्रुतेः । गायत्री सवितृदेवत्या । हे यजमान ! सविता सूर्य्यः ते तव शरीराणि अस्थीनि मातुः पृथिव्याः उपस्थे उत्सङ्गे आवपतु स्थापयतु । हे पृथिवि ! भूमे ! तस्मै सवित्रोप्तायास्थिरूपाय यजमानाय शं भव सुखरूपा भव ॥ ५ ॥

**प्र॒जाप॑तौ त्वा दे॒वता॑या॒मुपो॑दके लो॒के निद॑धाम्य॒सौ । अप॑ न॒ः शोशु॑चद॒घम् ॥ ६ ॥**

(२) प्रजापतौ त्वा । यजुः कण्डिकाः । प्रजापतौ त्वाम्

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । शरीराणि निवपति । सविता ते । गायत्री तव यजमानशरीराणि अस्थीनि मातुः पृथिव्याः उपस्थे उत्सङ्गे आवपतु स्थापयतु तस्मै अस्थिरूपाय यजमानाय सवित्रा उप्ताय हे पृथिवि शं भव सुखरूपा भव ॥ ५ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा प्रजापतौ च यजुः कण्डिका प्रजापतौ त्वां देवतायाम् उपोदके उप समीपम् उदकं यस्य स तथोक्तः लोके स्थाने निदधामि असाविति नामग्रहणम् अनुदात्तत्वात् आमन्त्रितम् तद्यथा हे देवदत्त । अप नः शोशुचदघम् अपेत्य अस्मात् अत्यर्थं दह·

देवतायाम् उपोदके उप समीपे उदकं यस्य स तथोक्तः । लोके स्थाने निदधामि । असाविति नामग्रहणम् अनुदात्तत्वादामन्त्रितम् । तद्यथा हे देवदत्त । अप नः शोशुचदघम् । अपेत्य नः अस्मान् अत्यर्थं दहतु पापम् द्वेष्टृन् । यद्वा । प्रजापतिः अपशोशुचत् अत्यर्थं दहतु । नोऽस्माकमघं पापम् ॥ ६ ॥

उष्णिक् प्रजापतिदेवत्या अस्थिनिवापे एव विनियुक्ता । असाविति नामग्रहणम् अनुदात्तत्वादामन्त्रितम् हे देवदत्त ! उपोदके उदकसमीपवर्त्तिनि लोके स्थाने प्रजापतौ देवतायां त्वां निदधामि- स्थापयामि । स प्रजापतिर्नोऽस्माकमघं पापं शोशुचत् अत्यर्थं दहतु शुच शोके यङ्लुगन्तं रूपम् ॥ ६ ॥

**परं मृत्यो अनु परेहि पन्थां यस्ते अन्य इतरो देवयानात् । चक्षुष्मते शृण्वते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ ७ ॥**

(१) प्रत्यागते जपति । परं मृत्योः त्रिष्टुप् मृत्युदेवत्या । हे मृत्यो परं पन्थानमाश्रित्य । अनुपरा इहि । पराङ्मुखो भूत्वा आगच्छ । तं शब्देन दर्शयति । योऽसौ ते तव स्वभूतः

---

तु पापं द्वेष्टृन् यद्वा प्रजापतिः अपशोशुचत् अत्यर्थं दहतु नः अघं पापं प्रत्यागते जपति ॥ ६ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । परं मृत्यो । त्रिष्टुप् मृत्युदेवत्या हे मृत्यो परं पन्थानमाश्रित्य अन्विहि पराङ्मुखो भूत्वा गच्छ तच्छब्देन दर्शयति तत्र यः तव स्वभूतः अन्य इतरः देवयानात् पितृयानाख्यः चक्षुष्मते शृण्वते ब्रवीमि षष्ठ्यर्थे चतुर्थी चक्षुष्मतः शृण्वतः तव ब्रवीमि आतिशयार्थे पुनर्वचनं नहि तस्यादृष्टमश्रुतं वास्ति मा च नः अस्माकं प्रजां रीरिषः हिंसीथाः मा च वीरान् पुत्रान् अनुष्टुब्बृहतीभ्यां यथाङ्गं कल्पयति अस्थनाम् ॥ ७ ॥

अन्यः इतरः देवयानात् पितृयानाख्यः । अपि च चक्षुष्मते शृण्वते ते ब्रवीमि । षष्ठ्यर्थे चतुर्थी । चक्षुष्मतः शृण्वतः तव ब्रवीमि । अतिशयार्थं वचनम् । नहि तस्यादृष्टमश्रुतं चास्ति । मा च नः अस्माकं प्रजां रीरिषः । हिंसीथाः । मोत-वीरान् पुत्रान् ॥ ७ ॥

का० ( २१, ४, ७ ) प्रत्यागते परं मृत्यविति जपतीति । दक्षिणां गत्वानुच्छ्वसन् कुम्भं प्रक्षिप्यैहीति कश्चिद्विप्रः प्रेषितोऽस्ति तस्मिन् कुम्भं क्षिप्त्वा प्रत्यागते सति यजमानोऽध्वर्युर्वा जपति । मृत्युदेवत्या त्रिष्टुप् सङ्कुसुकदृष्टा । हे मृत्यो ! परा पराङ्मुखो भूत्वा परमन्यं पन्थां पन्थानं मार्गमन्विहि अनुगच्छ । तमेव दर्शयति यस्ते तव त्वदीयः पन्था देवयानात् पथः इतरः तुच्छः अन्यः पितृयानाख्यः देवा यान्ति यस्मिन् स देवयानः । किञ्च चक्षुष्मते ज्ञानिने शृण्वते च ते तुभ्यं मृत्यो ! किञ्चिद् ब्रवीमि आदरार्थं वचनम् न हि तस्या-दृष्टमश्रुतं वास्ति षष्ठयर्थे चतुर्थ्यौ चक्षुष्मतः शृण्वतस्तव वदामि किम् ? हे मृत्यो ! नोऽस्माकं प्रजां सन्ततिं वंशपरम्परां मा री-रिषः मा हिंसीः रिष वधे स्वार्थे णिजन्तस्य लुङि रूपम् उत अपि च वीरान् पुत्रान् मा हिंसीः ॥ ७ ॥

शं वातः शꣳ हि ते घृणिः शं ते भवन्त्विष्टकाः । शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥८॥

(१) यथार्थं कल्पयति अनुष्टुप्बृहतीभ्याम् । शं वातः । सुखरूपो वातः ते भवतु । शं हि ते घृणिः सुखरूपश्च ते घृ-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । शं वातः । सुखरूपो वातस्ते भवतु । शं हि ते घृणिः घृणिरित्यहर्नाम हीति स्वाध्यायार्थः : इष्टकाः सुखरूपास्ते भवन्तु अग्नयः पृथिव्यां भवाः पार्थिवाः मा च त्वा अभिशूशुच-न् अभितापयन्तु ॥ ८ ॥

णिर्भवतु । घृणिरित्यर्हनाम हीतिस्वाध्यायार्थम् । सुखरूपाश्च ते भवन्तु इष्टकाः । सुखरूपाश्च ते भवन्तु अग्नयः पार्थिवाः पृथिव्यां भवाः पार्थिवासः । मा च त्वाम् अभिशूशुचन् अभितापयन्तु ॥ ८ ॥

का० ( २१, ४, ८ ) शं वात इति यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीमिति । शं वात इति मन्त्रद्वयेन तानि मध्ये न्युप्तान्यस्थीनि यथाङ्गं कल्पयित्वा यदस्थि यस्याङ्गस्य तेनास्थ्ना तदङ्गकल्पनया प्राक्शिरसं पुरुषाकृतिं कृत्वा तन्मध्ये पादमात्रीमिष्टकां तूष्णीं निदधाति ॥ द्वे ऋचावनुष्टुब्बृहत्यौ विश्वदेवदेवते । हे यजमान ! वातो वायुस्ते तव शं सुखरूपो भवतु । हि पुनः घृणिः सूर्य्यकिरणः ते तव शं सुखरूपो भवतु । इष्टका मध्ये प्रतिदिशं च तिस्रस्तिस्रः प्रक्षिप्तास्ते तव शं सुखरूपा भवन्तु । अग्नयश्च ते शं भवन्तु । पार्थिवासः पृथिव्यां भवाश्चाग्नयः त्वा त्वां माभिशूशुचन् मा शोचयन्तु अभितापयन्तु ॥ ८ ॥

कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः । अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ॥ ९ ॥

(१) किञ्च । कल्पन्तां ते दिशः । क्लृप्तास्ते दिशो भवन्तु । तुभ्यम् आपः शिवतमाः भवन्तु । तुभ्यं भवन्तु सिन्धवः समुद्राः शिवतमाः । अन्तरिक्षं शिवं तुभ्यं भवतु । कल्पन्तां ते दिशः सर्वाः । आदरार्थं पुनर्वचनं कात्स्न्यार्थं वा ॥ ९ ॥

दिशः ( ते ) तुभ्यं त्वदर्थं कल्पन्तां क्लृप्ता भवन्तु आपो जला-

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । किञ्च कल्पन्तां ते दिशः क्लृप्तास्ते दिशो भवन्तु तुभ्यं भवन्तु सिन्धवः समुद्राः शिवतमाः अन्तरिक्षं शिवं तुभ्यं भवतु कल्पन्तां ते दिशः सर्वाः आदरार्थं पुनर्वचनं कृत्स्नार्थं वा ॥९॥

नि तुभ्यं शिवतमाः कल्याणकारिण्यो भवन्तु सिन्धवः समुद्राश्च शिवतमास्तुभ्यं भवन्तु । अन्तरिक्षमाकाशं तुभ्यं शिवं कल्याणकारि भवतु सर्वाः दिशः ते तुभ्यं कल्पन्ताम् । आदरार्थे कार्त्स्न्यार्थे वा पुनर्वचनम् ॥ ९ ॥

**अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः अत्रा जहीमोऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥ १० ॥**

(१) अश्मन्वती रीयते । अश्मनस्त्रींस्त्रीन्विकिरन्ति ता अभ्युत्तरन्ति । त्रिष्टुब्वैश्वदेवी । अश्मन्वती पाषाणवती इयं नदी रीयते गम्यते अस्माभिः विषमम् । अतो ब्रवीमि । संरभध्वम् । संरम्भश्चोत्तरणाय प्रयत्नकरणम् । उत्तिष्ठत अभिमुखा भवत । प्रतरत । हे सखायः । किमित्यादरः । अत्राजहीमः । परित्यजामः । अशिवाः अशान्ताः । ये असन् स्युः वाजान् अन्नविशेषान् वयम् अभ्युत्तरेम ॥ १० ॥

का० ( २१, ४, २१ ) अध्यधिगच्छन्त्यश्मन्वतीरिति । गर्तान्मृदमानीय पूर्ववर्जादिग्भ्यः कृष्ट्वा वा मृदमानीय तत् श्मशानं विप्रस्य मुखमितं क्षत्रस्योरोमितं वैश्यस्योरुमितं स्त्रिया भगमितं शूद्रस्य जानुमितं सर्वेषां वा जानुमितं मृदा कृत्वा शैवलैः कुशैश्च प्र-

---

(१)अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा अश्मन्वती रीयते अश्मनः त्रींस्त्रीन् प्रति किरन्ति ता अभ्युत्तरन्ति त्रिष्टुप् वैश्वदेवी अश्मन्वती पाषाणवती या नदी रीयते गम्यते अस्माभिर्विषमतो ब्रवीमि संरभध्वं संरम्भश्चोत्तरणाय प्रयत्नकरणम् उत्तिष्ठताभिमुखा भवत प्रतरत हे सखायः । किमित्यादरः अत्रा जहीमः परित्यजाम अशिवाः अशान्ताः ये असन् स्युः शिवान् वाजान् अन्नविशेषान् वयमभ्युत्तरेम अपामार्गैरपमृजते ॥ १० ॥

च्छाद्य तद्दक्षिणतो गर्तौ खात्वा क्षीरोदकाभ्यां सम्पूर्य्य श्मशानोत्त रे सप्त गर्तान् खात्वा दक्षिणोत्तरान् जलेन सम्पूर्य्योत्तरगर्त्तेषु अध्वर्य्युयजमानामात्यांस्त्रीन् पाषाणान् प्रक्षिप्याश्मन्वतीरिति मन्त्रेण तद्गर्तोपरि गच्छन्ति ॥ विश्वदेवदेवत्या त्रिष्टुप् सुचीकदृष्टा । हे सखायः ! मित्राणि ! एषा अश्मन्वती पाषाणवती नदी रीयते गच्छति री गतौ दिवादिः आत्मनेपदी अतो यूयं संरभध्वमुत्तरणाय प्रयतध्वम् । उत्तिष्ठत अभिमुखा भवत प्रतरत प्रकर्षेण तां नदीं तरत । किमिति ? यतोऽत्र प्रदेशे ये अशिवाः अशान्ता दुष्टा राक्षसादयः असन् स्युः तान् वयं जहीमः परित्यजामः तेषु त्यक्तेषु शिवान् सुखकरान् वाजानन्नविशेषान् वयमुत्तरेम प्राप्नुयाम ॥ १० ॥

अपाघमप किल्विषमप कृत्यामपो रपः अपामार्ग त्वमस्मदप दुःस्वप्न्यꣳसुव ॥ ११ ॥

(१) अपामार्गेणापमृजति । अपाघम् । अनुष्टुप् । हे अपामार्ग त्वम् अस्मत् अस्मत्तः । अपसुव अपगमय अघं पापं मानसम् । अपगमय च किल्विषं कीर्त्तिभेदकम् पापमेव कायिकम् । अपगमय च कृत्याम् अभिचारम् । अपगमय च रपः । रपो रिप्रमिति पापनामनी भवतः । वाचिकम्पापम् । अपगमय च दुःस्वप्न्यम् दुःस्वप्ने भवं फलम् दुःस्वप्न्यम् ॥ ११ ॥

का० ( २१, ४, २२ ) अपाघमित्यपामार्गैरपमृजत इति । ते अमात्या यज्ञोपवीतिनो भूत्वाप उपस्पृश्य हस्तगृहीतैरपामार्गैः स्वशरीरं शोधयन्ते अपामार्गबीजैरुद्धर्त्तयन्तीति केचित् ॥ लिङ्गोक्त-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । अपाघम । अनुष्टुप् । हे अपामार्ग त्वम् अस्मत्तः अपसुव अपगमय अघं पापं मानसम् अपगमय किल्विषं च कीर्त्तिभेदकं पापमेव कायिकम् अपगमय च कृत्यामभिचारम् अप उ रपः । अपगमय च रपः रपो रिप्रमिति पापनामनी भवतः वाचिकं पापमपगमय दुस्वप्न्यं दुःस्वप्ने भवं फलं दुःस्वप्न्यम् ॥ ११ ॥

देवतानुष्टुप् शुनः शेपदृष्टा दुःस्वप्ननाशनी । हे अपामार्ग ! त्वमस्मत अस्मत्तः सकाशादघं मानसं पापमपसुव षू प्रेरणे अपगमयेत्यर्थः । किल्विषं कीर्त्तिभेदकं कायिकं च पापमपसुव । कृत्यां परकृतमभिचारमपसुव । अप उ रपः रपो रिप्रमिति पापनामनी भवत इति ( निरु० ४, २१ ) यास्कः परः पापं वाचिकं च अपसुव उ चार्थे । दुःस्वप्न्यम् दुष्टः स्वप्नो दुःस्वप्नः तत्र भवं दुःस्वप्नोत्थमसुखरूपं फलं चास्मत्तोऽपसुव ॥ ११ ॥

सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रि यस्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः ॥ १२ ॥

(१) सुमित्रिया न इति व्याख्यातम् ॥ १२ ॥

का० ( २१, ४, २३ ) सुमित्रिया न इति स्नात्वाहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्तीति । सुमित्रिया इति मन्त्रेण स्नात्वा नूतनवस्त्राणि परिहितवन्तोऽनड्वाहमिति मन्त्रेण वृषपुच्छमन्वारभ्य उद्वयं तमिति मन्त्रेण यजमानामात्या ग्राममागच्छन्ति यद्यप्यत्र सुमित्रिया इति मन्त्रेण स्नानमुक्तं तथापि सुमित्रिया इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं परिषिञ्चतीति ( का० १९, ५, १५ ) द्वयं विधेयम् । दुर्मित्रिया द्विष्म इति यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चेत् तेनैव तं पराभावयतीति ( १३, ८, ४, ५ ) श्रुतेः ॥ व्याख्याता ( ६, २२ । २०, १९ ॥ १२ ॥

अनड्वाहमन्वारभामहे सौरभेयꣳस्वस्तये । स न इन्द्र इव देवेभ्यो वह्निः सन्तरणो भव ॥ १३ ॥

(२) अनडुत्पुच्छमन्वारब्धा आगच्छन्ति । अनड्वाहम् ।

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । सुमित्रिया न इति व्याख्यातम् ॥ १२ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । अनडुत्पुच्छमन्वारब्धा आगच्छन्ति अनड्वाहम् आनडुही अनुष्टुप् उत्तरोऽर्धर्चः प्रत्यक्षकृतः अतः सर्वनाम्नोऽध्याहारेण

आनडुही अनुष्टुप् । उत्तरोऽर्द्धर्चः प्रत्यक्षकृतः अतो यच्छ-ब्दाध्याहारेण सामर्थ्यम् । यन्त्वाम् अनड्वाहम् अन्वारभामहे आलभामहे । सौरभेयम् सुरभ्या अपत्यम् स्त्रीभ्यो ढक् । स्वस्तये अविनाशाय । स त्वम् नः अस्माकम् इन्द्र इव देवेभ्यः देवनामिति विभक्तिव्यत्ययः । वह्निर्वोढा संतारणश्च भव ॥१३॥

अनुष्टुप् अनडुद्देवत्या उत्तरोऽर्धर्चः प्रत्यक्षकृतः ततः सर्वनाम्नोऽध्याहारेण सामर्थ्यम् वयं यमनड्वाहमन्वारभामहे आलभामहे स्पृशामः । किम्भूतम् ? सौरभेयं सुरभ्याः अपत्यम् स्त्रीभ्यो ढगिति ( पा० ४, १, १२० ) ढक् । किमर्थम् ? स्वस्तये अविनाशाय । हे अनड्वन् ! स त्वं नोऽस्माकं सन्तरणः तारको दुःखनाशको भव । किञ्च त्वं वह्निः देवानां वोढा । तत्र दृष्टान्तः देवेभ्यः इन्द्र इव इन्द्रो यथा देवार्थं तारको भवति ॥ १३ ॥

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १४ ॥

उद्वयमिति व्याख्यातम् ॥ १४ ॥

उद्वयं तामिति ग्राममागच्छन्ति । व्याख्याता ( २०, २१ ) ॥ १४ ॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् । शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ १५ ॥

---

सामर्थ्यं यं त्वाम् नड्वाहम अन्वारभामहे आलभामहे सौरभेयं सुरभ्या अपत्यं स्त्रीभ्यो ढक् स्वस्तये अविनाशाय स त्वं नः अस्माकम् इन्द्र इव देवेभ्यः वह्निः वोढा संतारणश्च भव ॥ १३ ॥

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति तद्यथा । उद्वयमिति व्याख्यातम् ॥ १४ ॥

(१) मर्यादाया एव लोष्टमाहृत्यान्तरेण तोरणे निदधाति । इमञ्जीवेभ्यः । त्रिष्टुप् मृत्युदेवत्या । इमं लोष्टं जीवेभ्यः अर्थाय । परिधिम् परिधीयत इति परिधिः तम्पारिधिम् दधामि स्थापयामि । किमर्थमिति चेत् । मा गात् मा गच्छतु एषां जीवानां मध्ये अपरः नु क्षिप्रम् । वेदोक्तादायुषोऽर्वाक् पितृलोकम् एतमर्थं पुरस्कृत्य सर्वथा शतं जीवन्तु शरदः । पुरूचीः बह्वश्चनाः दानाध्ययनयागानुकूलाः । अन्तर्मृत्युन्दधताम् अन्तर्दधातु मृत्युम् पर्वतेन इव लोष्टेन ॥ १५ ॥

का० ( २१, ४, २४ ) ग्रामश्मशानान्तरे मर्य्यादालोष्टं निदधातीमं जीवेभ्य इति । स्वनिवासग्रामस्य श्मशानस्य च मध्ये मर्य्यादालोष्टं महत्तरं मृत्खण्डमध्वर्युरेव निदधाति ॥ मनुष्यदेवत्या त्रिष्टुप् सङ्कसुकदृष्टा । जीवेभ्यः विद्यमानजन्त्वर्थमिमं परिधिं मर्य्यादां दधामि स्थापयामि । कथमिति चेत् ? एषां जीवानां मध्ये अपरः कश्चित् नु क्षिप्रं वेदोक्तादायुषोऽर्वाक् एतमर्थं पितृलोकगमनलक्षणं कार्य्यमुद्दिश्य मा गात् मा गच्छतु । एते जीवाः शतं शरदः जीवन्तु शतवर्षायुषो भवन्तु । किम्भूताः शरदः ? पुरूचीः पुरु बहु अञ्चन्तीति पुरूच्यः दानाध्ययनयागानुकूलाः । किञ्च पर्वतेन लोष्टेनैव मृत्युमन्तर्दधताम् मृत्युमन्तर्हितं कुर्वन्तु एते जीवाः ॥ १५ ॥

अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥ १६ ॥

(२)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । मर्यादाया एव लोष्टमाहृत्यान्तरेण निदधाति इमं जीवेभ्यः त्रिष्टुप् मृत्युदेवत्या इमं लोष्टं जीवेभ्योऽर्थाय परिधिं परिधीयत इति परिधिः तं परिधिं दधामि स्थापयामि कथमिति चेत् मा गात् मा गच्छतु एषां जीवानां मध्ये ऽपरः नु क्षिप्रं वेदोक्तादायुषो ऽर्वाक् पितृलोकम् एतमर्थं पुरस्कृत्य सर्वथा शतं जीवन्तु शरदः पुरूचीः बह्वश्चना दानाध्ययनयागानुकूलाः अन्तर्दधताम् अन्तर्मृत्युं दधातु पर्वतेनैव लोष्टेनैव ॥ १५ ॥

(१) जुहोति द्वाभ्याम् । अग्न आयूꣳषि व्याख्यातम् ॥१६॥

का० ( २१, ४, २५ ) आञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य्य वारणान् परिधीन् परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्न आयूꣳष्यायुष्मानग्न इति । कज्जलादिना नेत्राञ्जनमाञ्जनम् तैलेन पादाञ्जनमभ्यञ्जनम् तद्द्वयं कृत्वा औपासनं कर्तुरावसथ्याग्नि दर्भैः परिस्तीर्य वारणवृक्षावयवांश्चतुरः परिधींश्चतुर्दिक्षु तूष्णीमेव परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोति ऋग्द्वयेन । औपासनः प्रेतस्यैव तस्यैवाद्वारेण निरसनीयत्वादिति हरिस्वामिनः कर्त्तुरेवौपासने होमस्तस्यैकदेशनिरसनमिति कर्कादयः ॥ व्याख्याता ( १९, ३८ ) ॥ १६ ॥

आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान् स्वाहा ॥ १७ ॥

(२) आयुष्मानग्ने । वसुरन्ता त्रिष्टुप् । इमान्स्वाहेति यजुः । हे अग्ने यः त्वम् आयुष्मान् तं त्वां ब्रवीमि । हविषा वृधानः वर्द्धमानः घृतप्रतीकः । प्रतीकं मुखम् । घृतयोनिः घृतसंसृष्टस्थानः एधि भव । उत्तरवेद्यां धारणाभिप्रायमेतत् घृतं च पीत्वा मधु मधुरसम् । चारु सुगन्धि । गव्यङ्गोविका-

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । जुहोति द्वाभ्याम् अग्न आयूंषि व्याख्यातम् ॥ १६ ॥

(२) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । आयुष्मानग्ने । यजुरन्ता त्रिष्टुप् हे अग्ने यस्त्वमायुष्मान् तं त्वां ब्रवीमि हविषा वृधानः वर्द्धमानः घृतप्रतीकः मुख प्रतीकः घृतयोनिः घृतसंसृष्टस्थानः एधि भव उत्तरवेद्या धारणाभिप्रायमेतत् घृतं च पीत्वा मधुरसं चारु सुगन्धि गव्यं गोविकारभूतं पिता इव पुत्रमभिरक्षतात् तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति तातङ्ङादेशः अभिरक्षतात् इमान् जीवान् स्वाहा सुहुतमस्तु ॥१७॥

रसम्भूतम् । पिता इव पुत्रम् अभिरक्षतात् । तुह्योस्तातङ्ङा-शिष्यन्यतरस्यामिति तातङादेशः । अभिरक्ष इमान् जीवान् स्वाहा सुहुतमस्तु ॥ १७ ॥

अग्निदेवत्या त्रिष्टुब्वैखानसदृष्टा । हे अग्ने ! त्वमेवम्भूत एधि-भव । किम्भूतः ? आयुष्मान् चिरञ्जीवी । तथा हविषा वृधानः ब-हुलं छन्दसीति ( पा० २, ४, ७३ ) शानचि शपो लुक् । तथा घृत-प्रतीकं मुखं यस्य । घृतयोनिः घृतं योनिरुत्पत्तिस्थानं यस्य उत्तर-वेद्याधारणाभिप्रायमेतत् । स त्वं गव्यं गोसम्बन्धि घृतं पीत्वा इमा-न् जीवान् अभिरक्षतादभिरक्ष तुह्योस्तातङ्ङाशिष्यन्यरस्यामिति ( पा० ७, १, ३५ ) हेस्तातङ्ङादेशः । तत्र दृष्टान्तः पिता पुत्रमि-व यथा पिता पुत्रं रक्षति । किम्भूतं घृतम् ? मधु मधुरं चारु सुग-न्धि स्वाहा सुहुतमस्तु ॥ १७ ॥

परीमे गामनेषत पर्यग्निमहृषत । देवेष्वक्रत श्रवः क इमाँ२॥ आदधर्षति ॥ १८ ॥

(१)अथैषां परिदां दधाति । अनुष्टुभा । परीमे गामनेषत । इमे जीवाः परि सर्वतः गाम् अनेषत। नयतेर्लुङि सिचि एतद्रूपम् परिणीतवन्तः गाम् अनडुत्पुच्छालम्बनाभिप्रायमेतत् । पर्य्य-

---

(१)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०ना० तद्यथा । अथैषां परिदां दधाति अनुष्टुभा पन्थ्या परीमे गामनेष त इमे जीवाः परि सर्वतः गामनेषत नयतेर्लुङि सिच्येतद्रूपं परिणी-तवन्तो गां परि अनेषत अनडुत्पुच्छालम्भनाभिप्रायमेतत् परि अहृ-षत हरतेर्लुङ्च्येतद्रूपम् अभिहृतवन्तोऽग्निं यस्मिन्नाग्नावेतत् कर्म क्रि-यते तमग्निं परिहृतवन्तः अङ्गारेणोपासनं निरस्यतीत्येतदभिप्रायमे-तत् देवेषु ऋत्विक्षु अक्रत अकृषतेति प्राप्ते सिचो लोपः श्रवो धनं दाक्षिणालक्षणम् अथेदानीं कृतकृत्यानिमान् को नाम आदधर्षति आ-धर्षयितुम् आक्रमितुं शक्नुयात् अशक्यप्रतिक्रिया ह्येते वर्तन्त इत्य-भिप्रायमेतत् ॥ १८ ॥

ग्निमहृषत । पर्य्यहृष्यत हरतेरेतद्रूपम् । परिहृतवन्तः अग्निम् । यस्मिन्नग्नावेतत्कर्म क्रियते तमग्निं परिहृतवन्तः । अद्वारेणोपासनं निरस्यतीत्येतदभिप्रायमेतत् । देवेषु ऋत्विक्षु । अक्रत । अकृषतेति प्राप्ते सिचो लोपश्छान्दसः ॥ श्रवः धनं दक्षिणालक्षणम् अथेदानीम् कृतकृत्यान् इमान् कः को नाम । आदर्षति । आधर्षयितुम् आक्रमितुम् शक्नुयात् अशक्यप्रतिक्रिया ह्येते वर्त्तन्त इत्यभिप्रायः ॥ १८ ॥

का० ( २१, ४, २६ ) अथैषां परिदां वदन्ति परीमे गामनेषतेति । अध्वर्युर्यजमानामात्यानां परिदाम् परिदा रक्षणम् सत्संज्ञं मन्त्रं वदति दाङ् पालने परिदीयते समन्ताद्रक्ष्यतेऽनेनेति परिदाः रक्षणः तम् ॥ इन्द्रदेवत्यानुष्टुप् भरद्वाजात्मजशिरिम्बिठदृष्टा । इमे जीवाः गामनड्वाहं पर्यनेषत परिणीतवन्तः अनडुत्पुच्छालभनाभिप्रायम् नयतेर्लुङि ताङ सिचि प्रथमबहुवचने रूपम् व्यवहिताश्चेति ( पा० १, ४, ८२ ) परेर्व्यवधानं क्रियापदेन । इमे जीवाः अग्निश्च पर्य्यहृषत परिहृतवन्तः यस्मिन्नग्नावेतत्कर्म कृतं तं परिजह्रुः अद्वारेणौपासनं निरस्यतीत्येतदभिप्रायम् । इमे देवाः दीव्यन्तिकर्मसु दीप्यन्ते ते देवाः ऋत्विजः तेषु श्रवः धनं दक्षिणालक्षणमक्रत कृतवन्तः अकृषतेति प्राप्ते सिचो लोपे अक्रतेति रूपम् । अत एतैः कर्मभिः कृतकृत्यानिमान् जीवान् को नाम आदधर्षति आधर्षयितुं शक्नुयात् अशक्यप्रतिक्रिया एते जाता इति भावः ॥ १८ ॥

क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः । इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ १९ ॥

(१) अद्वारेणोपासनं निरस्यति । क्रव्यादमग्निम् । त्रिष्टु-

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । अद्वारेणोपासनं निरस्यति क्रव्यादमग्निम् अथ येन

प् । अथ येन पुरुषं दहति स क्रव्यात् । क्रव्यादमग्निम् । प-रिहिणोमि प्रेषयामि दूरमपुनरागमनाय । यमराज्यं गच्छतु रि-प्रवाहः । रिप्रमिति पापनाम । रिप्रं मृतं वहति प्रापयति भस्मी-भावमिति रिप्रवाहः । जपति । इह ग्रहे एव अयम् इतरः क्र-व्यादादन्यः जातवेदाः जातप्रज्ञानः देवेभ्यः हव्यं हविः वहतु । प्रजानन् स्वमधिकारम् ॥ १९ ॥

का० ( २१, ४, ३७ ) अङ्गारेणौपासनं निरस्यति क्रव्यादमिति । आहुतिहोमानन्तरं यत्र हुतं तस्यौपासनस्यैकशेष निरस्यति प्रेतस्यै-वोपासन इति पक्षे सर्वमपि निरस्यति ॥ अग्निदेवत्या त्रिष्टुप् दम-नदृष्टा । येन पुरुषो दह्यते स क्रव्यात् तं क्रव्यादमग्निमहं दूरम् अ-पुनरागमनाय प्रहिणोमि प्रेषयामि स प्रहितः क्रव्यादग्निः यमराज्यं गच्छतु यमस्य राज्यं प्रति व्रजतु । किम्भूतः ? रिप्रवाहः रिप्रमिति पापनाम ( निरु० ४, २१ ) रिप्रं पापं वहति नाशयति रिप्रवाहः ॥ का० ( २१, ४, २८ ) इहैवायामिति जपति । यजमानो जपति ॥ अय-मितरः क्रव्यादादन्यो जातवेदाः जातप्रज्ञानोऽग्निः इहैवास्मिन्नेव गृहे सदने देवेभ्योऽर्थाय हव्यं हविः वहतु प्रापयते । किं कुर्वन् ? प्रजानन् स्वाधिकारं जानानः ॥ इति पितृमेधः समाप्तः । उपधानासन्दीवृषभ-यवानजीर्णान् तद्दाक्षिणात्वेन दद्यात् इच्छन् हेमाद्यपि दद्यात् ॥१९॥

वह॑ व॒पां जा॑तवेदः पि॒तृभ्यो॒ यत्रै॑नान्वे॒त्थ निहि॑-ता॒न् परा॒के । मेद॑सः कु॒ल्या उप॒ तान्त्स्र॑वन्तु स॒त्या ए॑षामा॒शिषः॒ सन्न॑मन्ता॒ᳪ स्वाहा॑ ॥ २० ॥

---

पुरुषं दहति स क्रव्यात् प्रहिणोमि प्रेषयामि दूरम् अपुनरागमनाय यमराज्यं गच्छतु रिप्रवाहः रिप्रमिति पापनाम रिप्रं वहति मृतकं प्रापयति भस्मीभावमिति रिप्रावाहः । जयति इह गृहे एव अय-मितरः क्रव्यादादन्यो जातवेदा जातप्रज्ञानः देवेभ्यो हव्यं हविः वहतु प्रजानन् स्वमधिकारम् ॥ १९ ॥

(१) वपां जुहोति । वह पपाम् । त्रिष्टुप् । वह प्रापय वपाम् हे जातवेदः पितृभ्यः । यत्र यस्मिन्प्रदेशे एतान् पितृन् वेत्थ जानासि । निहितान् स्थापितान् पराके पराक्रान्ते सुदूरेऽपि तस्याश्च वपायाः सकाशात् मेदसः कुल्या नद्यः निःसृत्य । उपस्रवन्तु पितृन् प्रति । एषां च दातृणाम् सत्या अवितथा आसिषः संनमन्ताम् प्रह्वीभवन्तु । स्वाहेति यजुः ॥ २० ॥

जावेदोदेवत्या त्रिष्टुप् । अस्या विनियोगः श्रौतसूत्रे नास्ति । गृह्यसूत्रेऽस्ति तथा हि ( पारस्कर० ३, ३ ) मध्यमा गवा तस्यै वपां जुहोति वह वपां जातवेदः पितृभ्य इति । अस्यार्थः मध्यमाष्टका गोपशुना कार्य्या तस्या धेनोर्वपां जुहोति वह वपामिति मन्त्रेणेत्यर्थः ॥ हे जातवेदः ! जातं वेदो धनं यस्मात् स जातवेदाः तत्सम्बोधने हे जातवेदः । पितृभ्योऽर्थाय त्वं वपां धेनुसम्बन्धिनीं चर्मविशेषं त्वं वह प्रापय । पराके पराक्रान्ते दूरेऽपि यत्र यस्मिन् देशे निहितान् स्थापितानेनान् पितृन् त्वं वेत्थ जानासि तत्र वहेत्यर्थः । तस्याः वपायाः निःसृत्य मेदसः धातुविशेषस्य कुल्याः नद्यः तान् पितृन् प्रति उपस्रवन्तु । किञ्च एषां दातृणामाशिषः मनोरथाः सत्याः अवितथाः सन्नमन्तां प्रह्वीभवन्तु । स्वाहा सुहुतमस्तु स्वाहेति ऋग्भिन्नं यजुः ॥२०॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ अप नः शोशुचदघम् ॥ २१ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । वपां जुहोति । वह वपां जातवेदसी त्रिष्टुप् वह प्रापय वपां हे जातवेदः पितृभ्यः यत्र यस्मिन् पितृन् वेत्थ विजानासि निहितान् स्थापितान् पराके पराक्रान्ते सुदूरेऽपि तस्याश्च वपायाः सकाशात् मेदसः कुल्याः नद्यः निः सृत्य उपस्रवन्तु तान् पितृन् प्रति एषां दातृणां सत्या अवितथा आशिषः संनमन्तां प्रह्वीभवन्तु स्वाहेति यजुः ॥ २० ॥

(१) स्योना पृथिवि । पार्थिवी गायत्री । स्योना सुखरूपा हे पृथिवि नः अस्माकम् भव । अनृक्षरा च नृक्षरः कण्टकः अ-नृक्षरा अकण्टका । निवेशनी च । साधुप्रतिष्ठाना । किञ्च । यच्छानः प्रयच्छ च नः अस्माकम् शर्म शरणम् सप्रथाः सर्वतः पृथुः । अप नः शोशुचदघमिति व्याख्यातम् ॥ २१ ॥

पृथिवीदेवत्या गायत्री मेधातिथिदृष्टा यजुरन्ता । अस्या अपि श्रौते विनियोगो नास्ति स्मार्त्ते स्रस्तरारोहणे शयने विनियोगः । तथा हि ( पारस्कर० ३, २ ) स्योना पृथिवि नो भवेति दक्षिणपार्श्वे प्राक्शिरसः संविशन्तीति ॥ हे पृथिवि ! त्वं नोऽस्माकं स्योना सुखरूपा भव । किम्भूता त्वम् ? अनृक्षरा ऋक्षरः कण्टकः ऋच्छतेः कण्टकः कन्तपो वा कण्टतेर्वा कृन्ततेर्वा स्याद्गतिकर्मण इति ( निरु० ९, ३२ ) यास्कः तद्ग्रहणं चौरदायादादिदुःखनिवृत्त्यर्थम् न-सन्ति ऋक्षराः कण्टकाः दुःखदायिनो यस्यां सा अनृक्षरा । तथा निवेशनी निविशन्ति जनाः यस्यां सा निवेशनी साधुप्रतिष्ठाना करणाधिकरणयोश्चेति ( पा०३, ३, ११७ ) ल्युट् । तथा सप्रथाः प्रथनं प्रथः विस्तारः प्रथसा सह वर्त्तमाना सप्रथाः सर्वतः पृथुः । किञ्च नोऽस्मभ्यं शर्म शरणं यच्छ देहि ॥ अतः परं यजुः तद्विनियोगो गृह्यसूत्रे सम्बन्धिमरणनिमित्ते स्नाने जलापनोदने । तथा हि ( पारस्कर० ३, १० ) सव्यस्यानामिकया अपनोद्याप नः शोशुचदघमिति । इदं जलं नोऽस्माकमघं पापमपशोशुचत् अपशोचयतु दहतु ॥ २१ ॥

अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः ।

(१)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०ना० तद्यथा । स्योना पृथिवि पृथिवी गायत्री । स्योना सुखरूपा । हे पृथिवि नः अस्माकं भव अनृक्षरा च नृक्षरः कण्डकः अकण्डका नृक्षरग्रहणं चौरदायादनिवृत्त्यर्थम् असुखकरत्वात् निवेशनी साधुप्रतिष्ठाना यच्छ नः प्रयच्छ चास्मभ्यं शर्म शरणं सप्रथाः । सप्रथाः सर्वतः पृथुः अप नः शोशुचदघमिति व्याख्यातम् ॥ २१ ॥

अ॒सौ स्व॒र्गाय॑ लो॒काय॒ स्वाहा॑ ॥ २२ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

(१) अस्मात्त्वम् । गायत्री यजुरन्ता एवात्राहुतिः । अनिरुक्ताग्नेयी । अस्माद्यजमानात् । हे अग्ने त्वम् अधिजातोऽसि यतः अतो ब्रवीमि । अयं पुनर्जायमानः त्वत् त्वत्तः जायतामुत्पद्यताम् । असाविति नामग्रहणम् तद्यथा देवदत्तः । स्वर्गाय लोकाय स्वर्गलोगप्राप्त्यर्थम् । त्वत्तो ह्ययं जायमानः त्वद्वंश्य एव स्यादित्यभिप्रायः । स्वाहेति संप्रदानमस्तु ॥ २२॥

इति उव्वटकृतौ मन्त्रभाष्ये पञ्चत्रिंशत्तमोऽध्यायः ॥ ३५ ॥

का० ( २५, ७, ३७ ) आहुतिं जुहोति पुत्रो भ्रातान्यो वा ब्राह्मणोऽस्मात्त्वमधिजातोऽसीति । साग्निकस्य पात्रप्रतिपत्त्यन्ते दाहात् पूर्वमाज्याहुतिं पुत्रादिर्जुहोति ॥ अग्निदेवत्या गायत्री अनिरुक्ता । हे अग्ने । त्वमस्मात् यजमानात् आधानकाले अधिजातोऽसि उत्पन्नोऽसि अतोऽयं यजमानः पुनः त्वत् त्वत्तः जायतामुत्पद्यताम् । असाविति विशेषनामवचनः तथा हि देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थं त्वत्तो जायतां त्वद्वंश्य एव भवत्विति भावः । स्वाहा सुहुतमस्तु ॥ २२ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
पञ्चत्रिंशोऽयमध्यायो पितृमेधाभिधोऽगमत् ॥ ३५ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । अस्मात्त्वम् । गायत्री यजुरन्ता एवात्राहुतिः । अनिरुक्ताग्नेयी अस्मात् यजमानात् हे अग्ने त्वम् अधि जातोऽसि आधानकाले यतः अतो ब्रवीमि अयं पुनर्यजमानः त्वत्तो जायतामुत्पद्यताम् असाविति विशेषनामवचनम् । तद्यथा देवदत्तः स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थं त्वत्तो ह्ययं जातः त्वद्वंश्य एव स्यादित्यभिप्रायः स्वाहेति संप्रदानमन्त्रः ॥ २२ ॥

इत्युव्वटकृतौ मन्त्रभाष्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

# षट्त्रिंशोऽध्यायः

ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये । वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥

(१) इदानीं प्रवर्ग्याग्निकाश्वमेधोपनिषत्संबद्धा मन्त्रास्तान् व्याख्यास्यामः । तत्राग्निका उग्रश्चेत्येवमादयः । तान्पुनः परमेष्ठ्यपश्यत् । प्राजापत्यो विमुख इति तस्य मन्त्रगणस्य संज्ञा । अग्निंꣳहृदयेनेत्याश्वमेधिकाः आ अध्यायात् प्रजापतेरार्षम् । परिशिष्टं दध्यङ्ङाथर्वणोऽपश्यत् । दध्यङ् ह वा आथर्वण इत्ये-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । इदानीम् आग्निकाः प्रवर्ग्याश्वमेधोपनिषत्संबद्धा मन्त्रा व्याख्येयाः । तत्राग्निकान् पुनः परमेष्ठ्यपश्यत् प्राजापत्यः विमुख इति तस्य मन्त्रगणस्य संज्ञा अग्निंꣳहृदयेनत्याश्वमेधिका आ अध्यायात् प्रजापतेरार्षं तत् सकाशात् परिशिष्टं दध्यङ्ङार्थवणोऽपश्यत् दध्यङ्ह वा आथर्वण इत्येवमादिकया श्रुत्या तस्यार्षं प्रतिपाद्यते ऋचं वाचं प्रवर्ग्यस्य आदावन्ते च शान्तिकरणोऽध्यायः । वैश्वदेवः आग्निकानामाश्वमेधिकानां च मन्त्राणाम् इह समाम्नातं दिवाकीर्तिसामान्यात् प्रथमा कण्डिका यजुः ऋचं वाचम् ऋग्रूपां वाचं प्रपद्ये प्रविशामि शरणं व्रजामि एवं मनोयजुः साममयं प्राणं चक्षुः श्रोत्रं व्याख्येयम् नहि त्रयीविद्याप्रपन्नस्य आयुषो विनाशं कुर्यात् प्रवर्ग्यः । तया वाङ्मनः प्राणाः चक्षुः श्रोत्राणि प्रपन्नस्य सप्तदशं ह्येतत्प्रजापतेर्लिङ्गमुपलक्षितम् अथैवं सति वाक् ओजो बलं मानसं गृह्यते धृष्टतानाम पुनरोजसो ग्रहणमादरार्थम् एतदुक्तं भवति वाक् चातिशायिकं चौजः प्राणापानौ च सह एकीभूतोः मयि वर्त्तन्तेऽतः प्रवर्ग्योऽस्मान्न हिनस्ति ॥ १ ॥

वमादिकया श्रुत्या तद्भावं प्रतिपद्यते ऋचं वाचम् । प्रवर्ग्यस्यादावन्ते च शान्तिकरणोऽध्यायः । विश्वे देवा आग्निकानामाश्वमेधिकानां च मन्त्राणाम् इह समाम्नातम् दिवाकीर्तिसामान्यात् । प्रथमकण्डिका यजुः । ऋचं वाचं प्रपद्ये प्रविशामि यामि वा । एवं मनोयजुः सामप्राणं चक्षुः श्रोत्रमिति व्याख्येयम् । नहि त्रयीविद्याप्रपन्नस्य प्रवर्ग्य आयुषो विनाशं कुर्यात् । तथा वाङ्मनःप्राणःचक्षुःश्रोत्राणि प्रपन्नस्य सप्तदशं ह्येतत्प्रजापतेर्लिङ्गमुपलक्षितम् । अथैवं सति । वाक् ओजो बलं मानसं धृष्टतानाम । पुनरोजोग्रहणमादरार्थम् । एतदुक्तं भवति वाक् च आतिशायिकमोजः प्राणापानौ च सह एकीभूताः मयि वर्त्तन्तेऽतः प्रवर्ग्योऽस्मान्न हिनस्ति ॥ १ ॥

पञ्चाध्यायी आथर्वणेन दधीचा दृष्टा दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदां चकारेति ( १४, १, १,२० ) श्रुतेः । उग्रश्चेत्याग्निको मन्त्रः ( ३९, ७, १७, ८६ ) अग्निं हृदयेनेत्याद्यध्यायसमाप्तिपर्यन्तमाश्वमेधिकम् ( ३९, ८—२३ ) तद्द्वयं वर्जयित्वा ॥ का० ( अनुक्रमण्याम् ) शान्तिकरणमाद्यन्तयोः । ऋचं वाचमित्यध्यायेन शान्तिकरणं कार्य्यम् स्वाध्याये मन्त्रपाठे प्रवर्ग्यमन्त्रादावस्याध्यायस्य दर्शनात् ॥ अथ मन्त्रार्थः । पञ्च यजूंषि लिङ्गोक्तदेवतानि । ऋचमृग्रूपां वाचमहं प्रपद्ये प्रविशामि शरणं व्रजामि । यजुः यजूरूपं मनः प्रविशामि । प्राणं प्राणरूपं साम प्रपद्ये । चक्षुरिन्द्रियं श्रोत्रेन्द्रियं च प्रपद्ये । वागादिग्रहणं सप्तदशावयवोपलक्षणम् सप्तदशावयवं प्रजापतेर्लिङ्गं प्रपद्ये इत्यर्थः त्रयीविद्यां लिङ्गशरीरं च प्रपन्नं प्रवर्ग्यो न नाशयेदिति भावः ॥ तथा वागिन्द्रियमोजो मानसं बलं धार्ष्ट्यम् । पुनरोजोग्रहणाच्छारीरं च बलम् प्राणापानौ उच्छ्वासनिश्वासवायू च एते सह एकीभूताः सन्तो मयि वर्त्तन्ते । अतोऽपि प्रवर्ग्योऽस्मान्न हन्तीति भावः ॥ १ ॥

यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृ-

हस्पतिर्मे तद्दधातु। शं नो भवतु भुवनस्य यस्पतिः॥२॥

(१) यन्मे बार्हस्पत्या पङ्क्तिः। यन्मे मम। छिद्रम् अवख-ण्डितम् चक्षुषः हृदयस्य वा हृदयग्रहणेन बुद्धिरुक्ता। मनसो वा अतितृण्णम् अतिहिंसितम् प्रवर्ग्याचरणेन। बृहस्पतिः मम तत् दधातु। अथैवं बृहस्पत्यनुग्रहीतानाम्। शं नः सुखरूपोऽ-स्माकम् भवतु। भुवनस्य भूतजातस्यः यः पतिः योऽधिपतिः प्रवर्ग्यरूपो यज्ञः॥ २॥

बृहस्पतिदेवत्या पङ्क्तिः। मे मम चक्षुषः चक्षुरिन्द्रियस्य यत् छिद्रमवखण्डनं जातम् प्रवर्ग्याचरणेन। हृदयस्य बुद्धेर्वा यत् छिन्द्रं-जातम्। मनसो वा यत् अतितृण्णमतिहिंसितम्। प्रवर्ग्याचरणेन यत् चक्षुर्बुद्धिमनसां व्याकुलत्वं जातम् बृहस्पतिर्देवगुरुः मे मम तत् छिद्रमतितृण्णं च दधातु सन्दधातु छिद्रं निवर्त्तयतु। भुवनस्य भूतजातस्य यः पतिरधिपतिः प्रवर्ग्यरूपो यज्ञः स नोऽस्माकं शं सुखरूपो भवतु। बृहस्पतिना छिद्रापाकरणात् प्रवर्ग्यः कल्याणरू-पोऽस्त्वित्यर्थः॥ २॥

भूर्भुवः स्वः। तत्सवितुर्वरेण्यं भर्गो देवस्य धी-महि। धियो यो नः प्रचोदयात्॥ ३॥

(२) भूर्भुवः स्वः यजूंषि। तत्सवितुरिति कया नास्तिस्त्रश्च

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति। तद्यथा। बार्हस्पत्या पङ्क्तिः यन्मम छिद्रमवखण्डितं चक्षुषो हृदयस्य वा हृदयग्रहणेन बुद्धिरुक्ता मनसो वातितृण्णं अतिहिंसितं प्रवर्ग्याचरणेन बृहस्पतिर्मे मम तत् दधातु तत् संदधातु अथैवं बृह-हस्पत्यनुगृहीतानां शं नः सुखरूपोऽस्माकं भवतु भुवनस्य भूतजात-स्य यः पतिः योऽधिपतिः प्रवर्ग्यरूपो यज्ञः॥ २॥

(२)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०

व्याख्याताः । ऋषिकृतो विशेषः ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ६ ॥

कयां नश्चित्र आभुंवदूती सदावृंधः सखां । कया शचिंष्ठया वृता ॥ ४ ॥

कस्त्वां सत्यो मदांनां मᳪहिंष्ठो मत्सदन्धंसः दृढा चिंदारुजे वसुं ॥ ५ ॥

अभी षु णः सखींनामविता जंरितॄणाम् । शतं भंवास्यूतिभिः ॥ ६ ॥

भूर्भुवः स्वः त्रीणि यजूंषि । तत्सवितुः कया नः कस्त्वा अभी षु णः एताश्चतस्र ऋचो व्याख्याताः ( ३, ३५ । २७, ३९—४१ ) अभी षु ण इत्यस्यामृचि शतं भवास्यूतिभिरिति बहुवचनम् पूर्वमूतय इत्येत्र पाठः ऊतिभिः अवनैर्हेतुभिः शतमसंख्यरूपो भवसीत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

कया त्वं नं ऊत्याभि प्रमंन्दसे वृषन् । कया स्तोतृभ्य आभंर ॥ ७ ॥

(१) कया त्वम् । गायत्री । ऐन्द्री आनिरुक्ता । हे इन्द्र

---

नास्ति । तद्यथा । भूर्भुवः स्वः यजूंषि तत्सवितुः कया नस्त्र्यृचो व्याख्याताः ऋषिकृतो विशेषः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । कया त्वं गायत्री ऐन्द्री आनिरुक्ता । हे इन्द्र कया ऊत्या केनागमनेन त्वं नः अस्मान् अभिप्रमन्दसे अभिमोदयासि । हे वृषन् सेक्तः कया उत्या केनागमनेन स्तोतृभ्यो दातुं धनान्याभर आहरसि तत्कथय येन तथानुतिष्ठामः । आभरेति च लडर्थे लोट्॥७॥

कया ऊत्या केन वागमनेन त्वम् नः अस्मान् अभिप्रमन्दसे अभिमोदयसि हर्षयसि । हे वृषन् सेक्तः । कया च ऊत्या केन वागमनेन स्तोतृभ्यः दातुं धनानि आभर आहरसि । लडर्थे लोट् । तत्कथय । येन तथानुतिष्ठामः ॥ ७ ॥

इन्द्रदेवत्या गायत्री अनिरुक्तेन्द्रपदहीना । आद्यपादे व्यूहद्वयम् ! हे वृषन् ! वर्षतीति वृषा हे सेक्तः ! इन्द्र ! वासवो वृत्रहा वृषेत्यभिधानम् ( अमर० १, १, ४२ ) कया ऊत्या केन तर्पणेन हविर्दानेन नोऽस्मानभिप्रमन्दसे अभिमोदयसि मदिस्तु स्वपने जाड्ये मदे मोदे स्तुतौ गतौ लट् । कया च ऊत्या तृप्त्या स्तोतृभ्यः स्तुतिकर्तृभ्यो यजमानेभ्यः आभर आहर आहरसि धनं दातुमिति शेषः तद्वयेन तथा वयं कुर्म इति भावः ! आभरेति लडर्थे लोट् ॥ ७ ॥

इन्द्रो विश्वस्य राजति । शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ८ ॥

(१) इन्द्रो विश्वस्य द्विपदा विराट् । यो ऽयं महावीर इन्द्र आदित्यो वा कस्याधिष्ठात्री देवता । विश्वस्य जगतः राजति देदीप्यते ईष्टे वा । तस्य प्रसादात् । अस्माकम् अस्तु द्विपदे शं चतुष्पदे । द्विपदाश्चतुष्पदां चेति विभक्तिव्यत्ययः ॥ ८ ॥

द्विपदा विराट् इन्द्रदेवत्या । विंशत्यक्षरा द्विपदा विराट् कथ्यते । विश्वस्य सर्वस्य जगतः इन्द्रः इदि परमैश्वर्ये इन्दतीतीन्द्रः प-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । इन्द्रो विश्वस्य द्विपदा विराट् योऽयं महावीर इन्द्रः आदित्यो वा कस्याधिष्ठात्री देवता विश्वस्य सर्वस्य जगतो राजति देदीप्यते ईष्टे वा तस्य प्रसादात् शं सुखं नः अस्माकम् अस्तु द्विपदे चतुष्पदे द्विपदां चतुष्पदां चेति विभक्तिव्यत्ययः ॥ ८ ॥

रमेश्वरः महावीरः आदित्यो वा यो राजति देदीप्यते ईष्टे वा स नोऽस्माकं द्विपदे विभक्तिव्ययत्यः द्विपदां पुत्रादीनां शं सुखरूपोऽस्तु चतुष्पदे चतुष्पदां गवादीनां च शं सुखरूपोऽस्तु॥८॥

**शं नो॑ मि॒त्रः शं वरु॑णः शं नो॑ भवत्वर्य॒मा शं न॒ इन्द्रो॒ बृह॒स्पति॒ः शं नो॒ विष्णु॑रुरुक्र॒मः ॥ ९ ॥**

(१) शन्नो मित्रः । द्वे अनुष्टुभौ । महावीरप्रसादात् आदौ च । शं सुखरूपः नोऽस्माकं भवतु मित्रः । शं च नः वरुणः भवतु । शं च नः इन्द्र बृहस्पतिः । शं च नः विष्णुः उरुक्रमः उरु विस्तीर्णः क्रमो यस्य स उरुक्रमः । शेषं दर्शितया व्याख्येयम् ॥ ९ ॥

द्वे अनुष्टुभौ मित्रवरुणादयो देवताः । मित्रो देवो नोऽस्माकं शं सुखरूपो भवतु महावीरप्रसादात् मेद्यति भक्तेषु स्निह्यतीति मित्रः । वरुणः शं सुखरूपो भवतु वृणोत्यङ्गीकरोति भक्तमिति वरुणः । अर्यमा नोऽस्माकं शं भवतु इयर्त्ति गच्छति भक्तं प्रतीत्यर्यमा । इन्द्रो देवेशो नोऽस्माकं शं भवतु । बृहस्पतिर्देवगुरुर्नः शं भवतु बृहतां वेदानां पतिः पालकः । उरुर्विस्तीर्णः क्रमः पादन्यासो यस्य स विष्णुः नोऽस्माकं शं भवतु वेवेष्टि व्याप्नोतीति विष्णुः ॥ ९ ॥

**शं नो॒ वात॑ः पवता॒ᳪ शं न॑स्तपतु॒ सूर्य॑ः । शं न॒ः कनि॑क्रदद्दे॒वः प॒र्जन्यो॑ अ॒भिव॑र्षतु ॥ १० ॥**

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । शन्नो मित्रः । द्वे अनुष्टुभौ महावीरप्रसादात् आदौ च शं सुखरूपो नः । अस्माकं मित्रो भवतु शं वरुणो नः शोभनो भवतु अर्यमा शन्नः इन्द्रः बृहस्पतिः शन्नो विष्णुरुरुक्रमः उरुः विस्तीर्णः क्रमो यस्य सः शेषं प्रदर्शितया व्याख्यया व्याख्येयम् ॥९॥

(१) शन्नः । शं सुखरूपः नोऽस्माकम् वातः अपरुषः अव्याधिजनकश्च । पवताम् वातु । शं सुखरूपः अदहनः भेषजरूपश्च नोऽस्माकं तपतु सूर्यः । शन्नः सुखरूपश्चास्माकम् । पर्जन्यो देवः काशनिक्षाररहितं पवित्रमुदकम् भेषजकर्तृ अभिवर्षतु । कनिक्रदत् । स्तनयित्नुशब्दं कुर्वन् ॥ १० ॥

वातो वायुर्नोऽस्माकं शं सुखकारी अपरुषः अव्याधिजनकश्च-पवतां वहताम् पव गतौ लोट् । सुवति जनान् स्वस्वव्यापारेषु प्रेरयति सूर्य्यः शं सुखरूपोऽदहनो भेषजरूपश्च नोऽस्माकं तपतु किरणान् प्रसारयतु । पर्जन्यः पिपर्ति पूरयति जनमिति पर्जन्यः। परोऽम्भः पूरो जन्यतेऽनेन वा। पर्जन्यौ रसदब्देन्द्राविति अभिधानम् (अमर० ३, ३, १५१) पर्जन्यः पर्जन्येशो देवः नोऽस्माकं शं सुखकरं काशनिक्षाररहितं यथा तथा अभिवर्षतु सिञ्चतु । कीदृशः ? कनिक्रदत् अत्यन्तं क्रन्दतीति शब्दं कुर्वन् दाधर्त्तिदर्धर्तीत्यादिना ( पा० ७, ४, ६५ ) यङ्लुगन्तो निपातः ॥ १० ॥

अहा॑नि॒ शं भव॑न्तु नः॒ शꣳ रात्रीः॒ प्रति॑धीयताम्। शं न॑ इन्द्रा॒ग्नी भ॑वता॒मवो॑भिः॒ शं न॒ इन्द्रा॒वरु॑णा रा॒तह॑व्या । शं न॑ इन्द्रापू॒षणा॒ वाज॑सातौ॒ शमिन्द्रा॒सोमा॑ सुवि॒ताय॒ शं योः ॥ ११ ॥

शं नो॑ दे॒वीर॒भिष्ट॑य॒ आपो॑ भवन्तु पी॒तये॑ । शं योर॒भिस्र॑वन्तु नः ॥ १२ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । शन्नो वातः । सुखरूपो वातोऽस्तु अपरुषः अव्याधिजनकश्च अस्माकं पवतां वहतां च नः शं सुखरूपः अदहनो भेषजरूपश्चास्माकं तपतु सूर्यः । शं नः सुखरूपः नः अस्माकं पर्जन्यो देवः करकाशनिक्षाररहितं गाङ्गमुदकं भेषजस्य कर्तृ अभिवर्षतु कनिक्रदत् शब्दं कुर्वन् ॥ १० ॥

(१) अहानि शम् । द्विपदा गायत्री । अहानि दिवसाः शं सुखरूपा भवन्तु नोऽस्माकम् । शं सुखरूपाः रात्रीः प्रातिधीयताम् प्रतिदधात्वस्मासु महावीरः । शं सुखरूपौ च इन्द्राग्नी भवताम् अवोभिः पालनैः सह । शन्नः सुखरूपौ चास्माकम् इन्द्रावरुणा इन्द्रावरुणौ रातहव्या दत्तहविष्कौ भवताम् । शं नः सुखरूपा चास्माकम् इन्द्रापूष्णौ भवताम् वाजसातौ अन्नसंभजने निमित्तभूते । शं सुखरूपौ च इन्द्रासोमौ भवताम् सुविताय साधुगमनाय साधुप्रसवाय वा । शं योः शमनाय रोगाणाम् यावनाय पृथक्करणाय च भयानाम् ॥ ११ ॥

शन्नो देवीः । अब्देवत्या गायत्री । सुखरूपा अस्माकम् देवीः देव्याः अभिष्टये अभिषेकाय अभीष्टाय वा । आपः भवन्तु । पीतये पानाय च । शं योः शमनाय रोगाणाम् यावनं पृथक्करणम् पृथक्करणाय भयानां वा । अभिस्रवन्तु नः अस्माकम् ॥ १२ ॥

द्विपदा गायत्री अहानि रात्रयश्च देवताः । अहानि दिनानि

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बइमु०पु० नास्ति । तद्यथा । अहानि शम् । द्विपदा गायत्री अहानि दिवसाः शं सुखरूपा रात्रीः प्रतिधीयतां प्रतिदधात्वस्मासु महावीरः शन्नः सुखरूपौ नः अस्माकम् इन्द्राग्नी भवताम् । अवोभिः पालनैः सह शन्नः इन्द्रवरुणौ रातहव्यौ गृहीतहव्यौ दत्तहविष्कौ सुखरूपौ भवेतां शं सुखं नः सुखरूपौ चास्माकम् इन्द्रपूषणौ भवेताम् वाजसातौ अन्नसंभजने निमित्तभूते शं च नः सुखरूपौ च नः अस्माकम् इन्द्रसोमौ भवेताम् सुविताय साधुगमनाय साधुप्रसवाय वा शं योः शमनाय रोगाणां यावनाय यावनं पृथक्करणम् पृथक्करणाय च भयानाम् शन्नो देवीः । अब्देवत्या गायत्री सुखरूपा अस्माकं देव्यः अभिष्टये अभिषेकायाभीष्टाय वा आपो भवन्तु पीतये पानाय च शं योः शमनाय रोगाणाम् अभिस्रवन्तु नोऽस्माकम् ॥ ११ ॥ १२ ॥

नोऽस्माकं शं सुखरूपाणि भवन्तु रात्रीः शं सुखरूपाः अस्मासु प्रतिधीयतां प्रतिदधातु महावीर इति शेषः कर्त्तरि यक् छान्दसः ॥ शं न इन्द्राग्नी । त्रिष्टुप् इन्द्राग्नी इन्द्रावरुणौ इन्द्रापूषणौ इन्द्रासोमौ देवताः । इन्द्राग्नी अवोभिः पालनैः कृत्वा नोऽस्माकं शं सुखरूपौ भवताम् । रातं दत्तं हव्यं ययोस्तौ रातहव्यौ हविस्तृप्तौ इन्द्रावरुणौ नः शं भवताम् । वाजसातौ वाजस्यान्नस्य सातौ दाने निमित्तभूते इन्द्रपूषणौ इन्द्रपूषसंज्ञौ देवौ नोऽस्माकं सुखरूपौ भवताम् । इन्द्रासोमा इन्द्रसोमौ देवौ शं सुखरूपौ भवताम् । किमर्थम् ? सुविताय सुष्ठु इतं सुवितम् साधुगमनाय साधुप्रसवाय वा । तथा शं रोगाणां शमनाय । योः यवनाय पृथक्करणाय च भयानाम् रोगं भयञ्च निवर्त्य सुखरूपौ भवतामित्यर्थः । देवताद्वन्द्वे चेति ( पा० ६, ३, २६ ) सर्वत्र पूर्वपदस्य दीर्घः ॥ ११ ॥

अब्देवत्या गायत्री । देवीः देव्यो दीप्यमाना आपो नोऽस्माकमभिष्टये अभिषेकायाभीष्टाय वा पीतये पानाय च शं सुखरूपा भवन्तु अस्माकं स्नाने पाने चापः सुखयित्र्यो भवन्तु । आपः शं योः रोगाणां शमनं भयानां यवनं पृथक्करणं च अभिस्रवन्तु नोऽस्माकं भयरोगनाशं कुर्वन्त्वित्यर्थः ॥ १२ ॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥ १३ ॥

(१) स्योना पृथिवीति व्याख्यातम् ॥ १३ ॥

आपो हि ष्ठा मयोभुवस्ता नं ऊर्जे दधातन । महे रणाय चक्षसे ॥ १४ ॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ १५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । स्योना पृथिवीति व्याख्यातम् ॥ १३ ॥

**तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥ १६ ॥**

(१) आपो हि ष्ठेति तिस्रश्च व्याख्याताः ॥१४॥१५॥१६॥

स्योना पृथिवि । व्याख्याता ( ३५, २१ ) ॥ आपो हि ष्ठा । त्र्यृचो व्याख्याताः ( ११, ५०—५२ ) ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

**द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ १७ ॥**

(२)द्यौः शान्तिः । या द्युलोकरूपा शान्तिः या चान्तरिक्षरूपा शान्तिः । या च पृथिवी । आपः ओषधयः । वनस्पतयः । विश्वेदेवाः । ब्रह्म त्रयीलक्षणं परं वा सर्वशान्तिः या च शान्तिरेव शान्तिः । या च स्वरूपत एव शान्तिः । सा । मा ममशान्ति एधि । अस्त्विति पुरुषव्यत्ययः । त्वत्प्रसादादित्यपेक्षा ॥ १७ ॥

यजूंषि संदृशि जीव्यासमित्यन्तानि ( क० १९ )। एकाधिका शक्वरी । द्यौः द्युलोकरूपा या शान्तिः अन्तरिक्षरूपा च या शान्तिः पृथिवी भूलोकरूपा या शान्तिः आपो जलरूपा या शान्तिः ओष-

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । आपो हिष्ठेति ऋचो व्याख्याताः ॥ १४ ॥ १५ ॥ १६ ॥

(२) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । द्यौः शान्तिः । द्युलोकरूपा शान्तिः या चान्तरिक्षरूपा शान्तिः पृथिवी आपः ओषधयः वनस्पतयः विश्वेदेवाः ब्रह्म त्रयीलक्षणं परं वा सर्वथा च स्वरूपत एव शान्तिः सा मा मम शान्तिः एधि अस्त्विति पुरुषव्यत्ययः । त्वत्प्रसादादित्यपेक्षा यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययात्सप्तम्यर्थे प्रथमा ततश्च प्रभृतिषु शान्तिः शान्तिरेव शान्तिः सा शान्तिः सा मयि अस्त्वित्यर्थः ॥ १७ ॥

धयः ओषधिरूपा या शान्तिः वनस्पतयः वृक्षरूपा या शान्तिः विश्वेदेवाः सर्वदेवरूपा या शान्तिः ब्रह्म त्रयीलक्षणं परं वा तद्रूपा या शान्तिः। सर्वं सर्वजगद्रूपा या शान्तिः शान्तिरेव शान्तिः या स्वरूपतः शान्तिः सा शान्तिः मा मां प्रति एधि अस्तु पुरुषव्यत्ययः। महावीरप्रसादात् सर्वं शान्तिरूपं मां प्रत्यस्त्वित्यर्थः। यद्वा द्यौरित्यादिषु विभक्तिव्यत्ययः सप्तम्यर्थे प्रथमा दिव्यन्तरिक्षे पृथिव्यामप्स्वोषधिषु वनस्पतिषु विश्वदेवेषु ब्रह्मणि सर्वस्मिंश्च या शान्तिः सा मां प्रत्यस्त्वित्यर्थः॥ १७॥

**दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम्। मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे। मित्रस्य चक्षुषा समीक्षामहे॥ १८॥**

(१)दृते दृꣳह मा। दृते यजुः। दृ विदारणे विदीर्णेऽपि शरीरे जरया। दृंह दृढीकुरु माम्। कथमिति। चेत्। मित्रस्य मा चक्षुषा सर्वाणि भूतानि सम् ईक्षन्ताम् पश्यन्तु। अहमपि मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे पश्यामि। शान्तं हि मित्रस्य चक्षुः। न वै मित्रः कञ्चन हिनस्ति। न मित्रं कश्चन हिनस्तीति। एवमहिंस्यमाना अहिंसन्तश्च परस्परमद्रोहेण सर्वथा मित्रस्य चक्षुषा समीक्षामहे॥ १८॥

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति। तद्यथा। दृते दृꣳह। यजुः। दृ विदारणे दृते विदीर्णेऽपि शरीरे जरया दृंह दृढीकुरु माम। यद्वा विदीर्णे शुभकर्मणि दृढीकुरु माम् यद्वा महावीरो दृतिशब्देनोक्तः। स हि शुषिरः सेक्ता च तेन दृढीकुरु माम कथमिति चेत् मित्रस्य मा च चक्षुषा सर्वाणि भूतानि ईक्षन्तां पश्यन्तु अहमपि मित्रस्य चक्षुषा सर्वाणि भूतानि समीक्षे पश्यामि शान्तं हि मित्रस्य चक्षुः। न वै मित्रः कञ्चन हिनस्ति। न मित्रं कश्चन हिनस्तीति एवम् अहिंस्यमानाः अहिंसन्तश्च परस्पराद्रोहेण सर्वथा मित्रस्य चक्षुषा समीक्षामहे॥ १८॥

दृते दृ विदारे विदीर्णे जराजर्जरितेऽपि शरीरे हे महावीर ! मा मां त्वं दृंह दृढीकुरु यद्वा दृते विदीर्णे कर्मणि मां दृंह अच्छिद्रं कर्म कुरु यद्वा ससुषिरत्वात् सेक्तृत्वाच्च दृतिशब्देन महावीरः हे दृते महावीर ? मां दृंह दृढीकुरु । कथं दार्ढ्यम् तदाह सर्वाणि भूतानि प्राणिनो मा मां मित्रस्य चक्षुषा समीक्षन्तां सम्यक् पश्यन्तु मित्रदृष्ट्या सर्वे मां पश्यन्तु नारिदृष्ट्या सर्वेषां प्रियो भूयासमित्यर्थः । किञ्च अहमपि सर्वाणि भूतानि मित्रस्य चक्षुषा समीक्षे पश्यामि सर्वे मे प्रियाः सन्तु । मित्रचक्षुः शान्तं भवति मित्रः कञ्चन न हन्ति मित्रं च कश्चन न हन्ति एवं परस्पराद्रोहेण सर्वानहिंसन्तो मित्रस्य चक्षुषा वयं समीक्षामहे पश्यामः ॥ १८ ॥

दृते दृंह मा । ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम् ॥ १९ ॥

(१)दृते दृꣳह । यजुः । दृते दृꣳह मा । अतिशयार्थं पुनर्वचनम् । ज्योक् चिरम् ते तव संदृशि संदर्शनं जीव्यासञ्जीवेयम् आदरार्थम् पुनर्वचनम् ॥ १९ ॥

हे दृते वीर ! मां दृंह आदरार्थं पुनर्वचनम् । हे महावीर ! ते तव संदृशि संदर्शने अहं ज्योक् चिरं जीव्यासं जीवेयम् जीवेराशीर्लिङि रूपम् । ज्योगिति निपातश्चिरार्थः । पुनरुक्तिरादरार्था ते संदृशि ज्योग् जीव्यासम ॥ १९ ॥

नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे । अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳशिवो भव ॥ २० ॥

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । दृते दृंह यजुः । हे दृते दृंह मामतिशयार्थं पुनर्वचनं ज्योक् चिरं ते तव संदृशि संदर्शने जीव्यासं जीवेयं पुनर्वचनमादरार्थम् ॥ १९ ॥

(१)नमस्ते हरसे इति व्याख्यातम् ॥ २० ॥

व्याख्याता ( १७, ११ ) ॥ २० ॥

**नम॑स्ते अस्तु वि॒द्युते॒ नम॑स्ते स्तनयि॒त्नवे॑ । नमस्ते भगवन्नस्तु यतः॒ स्वः॒ स॒मीह॑से ॥ २१ ॥**

(२)नमस्ते । द्वे अनुष्टुभौ । नमः ते तुभ्यम् अस्तु । विद्युते विद्युद्रूपाय । नमस्ते स्तनयित्नवे स्तनयित्नुरूपाय नमः ते हे भगवन् अस्तु । यतः यस्मात् स्वः स्वर्गं लोकं गन्तुम् समीहसे चेष्टसे । अमर्त्यत्वमित्यभिप्रायः ॥ २१ ॥

द्वे अनुष्टुभौ विद्युत्स्तनयित्नुरूपभगवद्दैवते । हे भगवन् महावीर ! विद्युद्रूपाय ते तुभ्यं नमोऽस्तु स्तनयित्नवे स्तनयित्नु गर्जितं तद्रूपाय ते नमोऽस्तु । यतः कारणात् स्वः स्वर्गं गन्तुं त्वं समीहसे चेष्टसे अतस्ते तुभ्यं नमोऽस्तु ॥ २१ ॥

**यतो॑ यतः स॒मीह॑से॒ ततो॑ नो॒ अभ॑यं कुरु । शं नः कुरु प्र॒जाभ्यो॒ऽभ॑यं नः प॒शुभ्यः॑ ॥ २२ ॥**

(३)यतो यतः । यस्माद्यस्मात् दुश्चरितात् अपाकर्तुं समीहसे

---

(१)अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०ना० तद्यथा । नमस्ते व्याख्यातम् ॥ २० ॥

(२)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति । तद्यथा । नमस्ते द्वेऽनुष्टुभौ नमस्ते तुभ्यमस्तु विद्युते विद्युद्रूपाय नमस्ते स्तनयित्नवे स्तनयित्नुरूपाय नमः ते हे भगवन् अस्तु यतः यस्मात् स्वः स्वर्गं गन्तुं समीहसे चेष्टसेऽमर्त्यत्वमित्यभिप्रायः ॥ २१ ॥

(३) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । यतो यतः । यस्मात् दुश्चरितात् अपकर्तुं समीहसे चेष्टसे ततस्ततः नः अस्माकम् अभयं कुरु किञ्च शं सुखं नः अस्माकं कुरु प्रजाभ्यश्चाभयं च नः पशुभ्यः कुरु ॥ २२ ॥

चेष्टसे ततस्ततः न अस्माकम् अभयङ्कुरु । किञ्च । शन्नः सुखमस्माकम् कुरु प्रजाभ्यः अभयन्नः कुरु ॥ २२ ॥

हे महावीर ! यतो यतः यस्माद् यस्माद् दुश्चरितास्त्वं समीहसे अस्मास्वपकर्त्तुं चेष्टसे ततस्ततो नोऽस्माकमभयं कुरु । किञ्च नोऽस्माकं प्रजाभ्यः शं सुखं कुरु नोऽस्माकं पशुभ्यश्चाभयं भीत्यभावं कुरु ॥ २२ ॥

**सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियस्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ २३ ॥**

(१)इत उत्तरं यजूंषि व्याख्यायन्ते आ अध्यायात् । तत्र सुमित्रिया न इति व्याख्यातम् ॥ २३ ॥

यजुः व्याख्यातम् ( ६, २२ ) ॥ २३ ॥

**तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥ २४ ॥**

**इति माध्यन्दिनीयायां वाजसनेयिसंहितायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥**

तच्चक्षुः । योऽयं महावीरोऽस्माभिस्तुतः तत् आदित्यरूपं

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । सुमित्रिया न इति व्याख्यातम् ॥ २३ ॥

(१)अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । तच्चक्षुः । पुर उष्णिक् सौरी । योऽयं महावीरोऽस्माभिः स्तुतः तदादित्यरूपं चक्षुः देवहितं देवैर्निहितं स्थापितं देवानां

चक्षुः। देवहितम् देवैर्निहितं स्थापितम् देवानां वा हितम्। पुरस्तात् प्राच्यां दिशि। शुक्रं शुक्रम् असंसृष्टं पाप्मभिः। शोचिष्मद्वा। उच्चरत् उदितम्। तत्प्रसादाच्च। पश्येम शरदः शतम्। जीवेम शरदः शतम्। शृणुयाम शरदः शतम्। प्रब्रवाम शरदः शतम्। अस्खलितवागिन्द्रिया भवामः। अदीनाः स्याम शरदः शतम् भूयश्च बहुतरं कालश्च शरदः शतात्॥ २४॥

इति उव्वटकृतौ मन्त्रभाष्ये षट्त्रिंशोऽध्यायः॥ ३६॥

सूर्यदेवत्या ब्राह्मी त्रिष्टुप् एतैर्मन्त्रैर्यो महावीरोऽस्माभिः स्तुतः तत् चक्षुर्जगतां नेत्रभूतमादित्यरूपं पुरस्तात् पूर्वस्यां दिशि उच्चरत् उच्चरति उदेति इतश्च लोपः परस्मैपदेष्विति ( पा० ३, ४, ९७ ) इकारलोपः। कीदृशं तत्? देवहितं देवैर्हितं स्थापितम् यद्वा-देवानां हितं प्रियम् शुक्रं शुक्लं पापासंसृष्टं शोचिष्मद्वा। तस्य प्रसादात् शतं शरदः वर्षाणि वयं पश्येम शतवर्षपर्य्यन्तं वयमव्याहतचक्षुरिन्द्रिया भवेम प्रार्थनायां लिङ् अत्यन्तसंयोगे द्वितीया। शतं शरदः जीवेम अपराधीनजीवनो भवेम। शतं शरदः शृणुयाम स्पष्टश्रोत्रेन्द्रिया भवेम। शतं शरदः प्रब्रवाम अस्खलितवागिन्द्रिया भवेम। शतं शरदः अदीनाः स्याम न कस्याप्यग्रे दैन्यं कुर्य्याम। शतात् शरदः शतवर्षोपर्य्यपि भूयश्च बहुकालम् पश्येमेत्यादि योज्यम्॥ २४॥

श्रीमन्महीधरकृते वेददीपे मनोहरे।
अध्यायः शान्तिपाठार्थः षट्त्रिंशोऽयं प्रकाशितः॥ ३६॥

---

वा हितं पुरस्तात् प्राच्यां दिशि शुक्रं शुक्लम् असंसृष्टं पाप्मभिः शोचिष्मद्वा उच्चरत् उदितं तत्प्रसादात् च पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम अस्खलितवागिन्द्रिया भवामः अदीनाः स्याम शरदः शतं भूयश्च बहुतरं कालं शरदः शतात्॥ २४॥

इत्युव्वटकृतौ मन्त्रभाष्ये षट्त्रिंशोऽध्यायः॥ ३६॥

# सप्तत्रिंशोऽध्यायः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नारिरसि ॥ १ ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा ॥ २ ॥

(१) महावीरसंभरणम् अभ्यादानम् । देवस्य त्वेति व्याख्यातम् नारिरसीति विशेषः ॥ १ ॥

(२)आलभ्य जपति । युञ्जते मन इति व्याख्यातम् ॥ २ ॥

का० ( २६ १, ३ ) देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीं सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति । उदुम्बरतरुत्थां विकङ्कततरुत्थां वा हस्तप्रमाणामभ्रिं देवस्य त्वा नारिरसीति मन्त्रेणादाय वामहस्ते तां कृत्वा दक्षिणहस्तेन स्पृष्ट्वा युञ्जते मन इति मन्त्रं जपतीति सूत्रार्थः ॥ देवस्य त्वा अभ्रिदेवत्यं यजुः । हे अभ्रे ! सवितुर्देवस्याज्ञायां स्थितोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि त्वं च नारिरसि स्त्रीनाम्नी भवसि ॥ युञ्जते मनः । व्याख्याता ( ५, १४ ) ॥ १ ॥ २ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । महावीरसम्भरणम् अभ्यादानम् । देवस्य त्वेति व्याख्यातम् । नारिरसीति विशेषः ॥ १ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । तामुपलभ्य जपति युञ्जते मन इति व्याख्यातम् ॥ २ ॥

**दे॒वीं द्या॑वापृथिवी म॒खस्य॑ वाम॒द्य शिरो॑ राध्यासं दे॒वयज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ३ ॥**

(१)मृत्पिण्डान्परिगृह्णाति । देवी द्यावापृथिवी हे देव्यौ द्यावापृथिव्यौ । मखस्य यज्ञस्य वां युवाम् उपादाय । मृदश्चोदकं चादायेत्यर्थः । अद्य शिरः राध्यासम् राध साध संसिद्धौ । संसाधयेयम् देवयजने देवा अस्मिन्निज्यन्ते इति देवयजनम् । पृथिव्याः मखाय यज्ञाय त्वा परिगृह्णामि । ततोऽपि विशेषापेक्षायामाह । मखस्य शीर्ष्णे त्वां परिगृह्णामीति ॥ ३ ॥

द्यावापृथिवीदेवतं यजुः ब्राह्मी गायत्री ॥ का० ( २६, १, ४ ) मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति । अध्वर्युर्देवीति मन्त्रेण विघणं मृत्पिण्डमादत्ते पिण्डवदिति पाणिभ्यां गृह्णाति दक्षिणः साभ्रिरिति लभ्यत इति सूत्रार्थः ॥ मन्त्रार्थस्तु हे देवी देव्यौ दीप्यमाने द्यावापृथिव्यौ । अद्यास्मिन् दिने पृथिव्याः देवयजने देवा इज्यन्ते अत्रेति देवयजनस्थाने मखस्य यज्ञस्य शिरो राध्यासं साधयेयम् राध साध संसिद्धौ । महावीरो यज्ञशिरः : किं कृत्वा ? वां युवां द्यावापृथिव्यौ आदायेति शेषः दिवोऽशं जलं पृथिव्यंशं मृदमादायेत्यर्थः एवं द्यावापृथिव्यौ प्रार्थ्य मृदमाह मखाय हे मृत् ! यज्ञाय त्वां गृह्णामि । एवं सामान्येनोक्त्वा विशेषमाह मखस्य यज्ञस्य शीर्ष्णे शिरसे महावीराय त्वां गृह्णामीति शेषः । तं मृत्पिण्डमुत्तरस्थापिते कृष्णाजिने निदध्यात् ॥ ३ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । मृत्पिण्डान् परिगृह्णाति देवी द्यावापृथिवी हे देव्यौ द्यावापृथिव्यौ मखस्य यज्ञस्य वां युवाम् उपादाय मृदं चोदकं चादायेत्यर्थः । अद्य शिरः राध्यासं राध साध संसिद्धौ संसाधयेयं देवयजने देवा अस्मिन् इज्यन्ते इति देवयजनं पृथिव्याः मखाय यज्ञाय त्वां परिगृह्णामि ततो विशेषापेक्षायां मखस्य शीर्णे त्वां परिगृह्णामीति ॥ ३ ॥

देव्यो॑ वम्र्यो भू॒तस्य॑ प्रथम॒जा म॒खस्य॑ वो॒ऽद्य शि॑रो॑ राध्यासं दे॒वयज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे ॥ ४ ॥

(१) अथ वल्मीकवपां गृह्णाति । देव्यो वम्र्यः । हे देव्यः वम्र्यः । उपजिह्विकाः सीमका इति पर्यायाः । या यूयं भूतस्य प्रथमजाः । पृथिवी भूतानां प्रथमजा तत्संबन्धाद्वम्र्योऽपि प्रथमजा उच्यन्ते । मखस्य शिरः राध्यासम् अद्य वः ताः युष्मान् उपादायेति शेषः । देवयजन इत्यादि व्याख्यातम् ॥ ४ ॥

का० ( २६, १, ५—६ ) उत्तरतो देव्यो वम्रय इति वल्मीकवपाम् । उपदीकृतो मृत्सञ्चयो वल्मीकस्तस्य वपेव वपा तां मध्यस्थं लोष्टमादाय कृष्णाजिने मृत्पिण्डादुत्तरे तूष्णीं निदध्यादिति सूत्रार्थः॥ वल्मीकवपादेवता आर्षी पङ्क्तिः । हे देव्यो दीप्यमानाः वम्रयः उपजिह्विकाः ! वो युष्मानादाय पृथिव्याः देवयजने मखस्य शिरो महावीरमद्य राध्यासं सम्पादयेयम् । मखाय त्वामाददे मखस्य शीर्ष्णे त्वामाददे इति व्याख्यातम् । किम्भूता वम्रयः ? भूतस्य प्राणिजातस्य प्रथमजाः प्रथमोत्पन्नाः पृथिवी जन्तूनां प्रथमजा तत्सम्बन्धात् वम्रयोऽपि प्रथमजा उच्यन्ते ॥ ४ ॥

इय॒त्यग्र॑ आसीन्म॒खस्य॑ ते॒ऽद्य शिरो॑ राध्यासं दे॒वयज॑ने पृथि॒व्याः । म॒खाय॑ त्वा म॒खस्य॑ त्वा शी॒र्ष्णे॥५॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । अथ वल्मीकवपां गृह्णाति देव्यो वम्र्यः हे देव्यः वम्र्यः उपजिह्विकाः सीमिकाः उपजिह्विकाः समीका इति पर्यायः । या यूयं भूतस्य प्रथमजाः पृथिवी भूतानां प्रथमजा तत्सम्बन्धात् वम्र्योऽपि प्रथमजा उच्यन्ते मखस्य शिरः राध्यासम् अद्य वः युष्मान् उपादायेति शेषः । देवयजन इत्यादि व्याख्यातम् ॥ ४ ॥

(१) वराहविहतमादत्ते । इयत्यग्रे युष्मदः संबन्धान्मध्यमोऽत्र पुरुषः । या त्वम् इयती प्रादेशमात्रा अभिनयेन निर्दिश्यते । अग्रे वराहस्योद्धरतः आसीत् आसीः अभूः । इयती ह वा इयमग्रे पृथिव्यास । प्रादेशमात्रीत्युपक्रम्य वराह उज्जघानेत्याह । तां त्वां ब्रवीमि मखस्य ते त्वामुपादाय अद्य शिरः राध्यासम् देवयजने पृथिव्याः मखाय त्वेति व्याख्यातम् ॥५॥

का० ( २६, १, ७, ) इयत्यग्र इति वराहविहतम् । वराहोत्खातमृदमादाय तूष्णीं कृष्णाजिने वल्मीकवपोत्तरे निदध्यादिति सूत्रार्थः ॥ वराहविहतमृद्देवतं यजुः ब्राह्मी गायत्री । हे पृथिवि ! भवती अग्रे आदौ वराहोद्धरणसमये इयती प्रादेशमात्राभिनयेन प्रदर्श्यते एतत्प्रमाणा आसीत् इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्रीत्यादि वराह उज्जघानेति श्रुतेः ( १४, १, २, १२ ) । ते इति द्वितीयार्थे षष्ठी तां त्वामादाय पृथिव्याः देवयजनेऽद्य मखस्य शिरो राध्यासम् । मखायेति व्याख्यातम् ॥ ५ ॥

इन्द्रस्यौजं स्थ मखस्यं वोऽद्य शिरों राध्यासं देवयजंने पृथिव्याः । मखायं त्वा मखस्यं त्वा शीर्ष्णे मखायं त्वा मखस्यं त्वा शीर्ष्णे मखायं त्वा मखस्यं त्वा शीर्ष्णे ॥ ६ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । राहाविहतमादत्ते इयत्यग्रे युष्मदः सम्बन्धात् मध्यमोऽत्र पुरुषःस्यात् या त्वमीयती प्रदेशमात्राभिनयेन प्रदर्श्यते अग्रे वराहस्योद्धृतवतः आसीत् अभूः इयती ह वा इयमग्रे पृथिव्या सप्रादेशमात्रत्युपक्रम्य वराह उज्जघानेत्याह तां त्वां ब्रवीमि मखस्य शिरः ते त्वामुपादाय अद्य राध्यासं देवयजने पृथिव्याः मखाय त्वेति व्याख्यातम् ॥ ५ ॥

(१) आदारानादत्ते । इन्द्रस्यौज स्थ ये यूयम् इन्द्रस्य ओजो भवथ तान्युष्मान् अद्य उपादाय शिरः राध्यासमित्यादि व्याख्यातम् । अजाक्षीरमादत्ते मखाय त्वेत्युक्तम् । सम्भृतानभिमृशति मखाय त्वेत्युक्तम् ॥ ६ ॥

का० ( २६, १, ८ ) इन्द्रस्यौजः स्थेति पूतीकान् । पूतीकान् रोहिषतृणान्यादाय तूष्णीं कृष्णाजिने वराहविहतोत्तरे निदध्यादिति सूत्रार्थः ॥ आदारदेवत्यम ऋक्त्रिष्टुप् । हे पूतीकाः ! यूयमिन्द्रस्य ओजः तेजोरूपाः स्थ भवथ वो युष्मानादाय पृथिव्याः देवयजने अद्य मखस्य शिरो राध्यासम् मखाय वा गृह्णामि मखस्य शीर्ष्णे महावीराय च गृह्णामीत्युक्तम् ॥ का० ( २६, १, ९ ) मखायेति पयः । पय आदाय तूष्णीं कृष्णाजिने पूतीकोत्तरे निदध्यादिति सूत्रार्थः ॥ पयोदेवत्यम । हे पयः ! मखाय मखशीर्ष्णे त्वां गृह्णामि ॥ तूष्णीं गवेधुका अपि ग्राह्याः ॥ का० ( २६, १, ११ ) सम्भृतानभिमृशति मखायेति । सम्भृतान् सम्भारान् करेण स्पृशेदित्यर्थः ॥ सम्भारदेवत्यम् । हे सम्भाराः ! मखाय तच्छीर्ष्णे च वः स्पृशामि ॥ ६ ॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ७ ॥

(१) परिश्रितमभिगच्छन्तो जपन्ति । प्रैत्विति व्याख्या-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति । तद्यथा । आदारानादत्ते आदाराः तृणविशेषमर्थः । इन्द्रस्यौजः ये यूयम् इन्द्रस्य तेजो भवथ तान् ब्रवीमि मखस्य वः युष्मानुपादाय शिरो राध्यासमित्यादि व्याख्यातम् अजाक्षीरमादत्ते मखाय त्वेत्युक्तं संभृतामभिसंमृशति । मखाय त्वेत्युक्तम् ॥ ६ ॥ नास्ति । तद्यथा । परिश्रितमभिगच्छन्तो जपन्ति प्रैत्विति व्याख्यातम् खरे सादयति मखाय त्वेत्युक्तम् प्रयाति मखाय त्वेति व्याख्यातम्

तम् । स्वरे सादयति । मखाय त्वेत्युक्तार्थम् मृत्पिण्डमादाय महावीरङ्करोति । मखाय त्वेत्युक्तम् ॥ ७ ॥

का० ( २६, १, १२ ) कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति प्रैतु ब्रह्मणस्पतिरिति । अध्वर्युप्रतिप्रस्थात्रादयः कृष्णाजिनं समन्तादादाय प्रैत्विति जपन्तोऽन्तःपात्यादुत्तरे परिवृतं प्रति गच्छन्ति । पञ्चारत्निमितः समचतुरस्रः प्राग्द्वारः सिकतोपकीर्णः पूर्वमेव कृतः सप्तभूसंस्कारसंस्कृतश्छादितप्रदेशः परिवृत उच्यते । इति सूत्रार्थः ॥ बृहती । व्याख्याता ( ३३, ८९ ) ॥ का० ( २६, १,१३-१४ ) परिवृते निदधाति सम्भारानुद्धतावीक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति । अध्वर्युः कृष्णाजिनस्थानेव सम्भारान् परिवृते निदधाति । कीदृशे ? उद्धतावीक्षिते उल्लिखितजलसिक्ते एतत्संस्कारद्वयं पञ्चाधिकम् सिकतायुक्ते प्राग्द्वारे चेति सूत्रार्थः । हे सम्भाराः ! मखाय युष्मान्निदधामि ॥ का० ( २६, १, १५ ) सम्भारैः सꣳसृजति मखायेति । गवेधुकाजापयसी पृथक्कृत्य वल्मीकवपादित्रिसम्भारैर्मृत्पिण्डं मिश्रयतीत्यर्थः ॥ हे सम्भाराः । युष्मान् मखाय मृत्पिण्डेन संसृजामि ॥ का० ( २६, १, १६, ) मृदमादाय मखायेति महावीरं करोति प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्त मध्यसंगृहीतमूर्ध्वे मेखलायास्त्र्यङ्गुलम् । महावीरपर्याप्तं तूष्णीं मृत्पिण्डमादाय मन्त्रेण महावीरं करोति । कीदृशम् ? प्रादेशोच्चं गर्त्तवन्तं मेखलायुतं मध्ये सङ्कुचितं मेखलोपरि त्र्यङ्गुलोच्चमिति सूत्रार्थः ॥ हे महावीर ! मखाय तच्छीर्ष्णे त्वां करोमि ॥ ७ ॥

मखस्य शिरोऽसि । मखार्य त्वा मखस्यं त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखार्यं त्वा मखस्यं त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखार्यं त्वा मखस्यं त्वा शीर्ष्णे । मखार्यं त्वा मखस्यं त्वा शीर्ष्णे । मखार्यं त्वा मखस्यं त्वा शीर्ष्णे । मखार्यं त्वा मखस्यं त्वा शीर्ष्णे ॥ ८ ॥

मृत्पिण्डमादाय महावीरं करोति मखाय त्वेति व्याख्यातम् ॥ ७ ॥

(१) निष्ठितमभिमृशति । मखस्य शिरोऽसीत्युक्तार्थम् एवं द्वितीयतृतीयौ । गवेधुकाभिः श्लक्ष्णयति । मखाय त्वेति त्रिभिर्मन्त्रैस्त्रीन्महावीरान् ॥ ८ ॥

का० ( २६, १, १७ ) निष्ठितमभिमृशति मखस्य शिर इति । निष्पन्नं महावीरं वामकरस्थं दक्षिणेन स्पृशतीत्यर्थः ॥ हे महावीर ! त्वं मखस्य शिरो मूर्धासि भवसि ॥ का० ( २६, १, १९ ) एवमितरौ प्रतिमन्त्रम् । इतरौ द्वौ महावीरौ प्रतिमन्त्रमेवमेव करोति अभिमृशति चेत्यर्थः ॥ मखाय द्वितीयं महावीरं करोमि मखस्य निष्पन्नं स्पृशामि मखाय तृतीयं महावीरं करोमि मखस्येति निष्पन्नं स्पृशति। मखस्य शिरोऽसि मखाय त्वा मखस्य शीर्ष्णे त्वामभिमृशामि ॥ का० (२६,१,२२) गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम् । गवेधुकाभिः महावीरान् घर्षणेन मृदून् करोति मखायेति प्रतिमन्त्रमेकैकम् ॥ मखाय मखस्य शीर्ष्णे च त्वां गवेधुकाभिः श्लक्ष्णयामि । एवमग्रिमौ मन्त्रौ ॥ ८ ॥

अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे। मखाय त्वा मखस्य त्वा शीर्ष्णे। मखाय त्वा मखस्य त्वा शीर्ष्णे॥९॥

(२) अश्वशकृतावधूपयति । अश्वस्य त्वा त्वाम् हे महा-

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । निष्ठितमभिमृशति त्वमश्वस्य शिरोऽसीत्युक्तार्थम् एवं द्वितीयम् एवं तृतीयं गवेधुकाभिः श्लक्ष्णयति मखाय त्वेति त्रिभिर्मन्त्रैस्त्रीन् महावीरान् ॥ ८ ॥

(२)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०

वीर वृष्णः सेक्तुः । शक्ना शकृच्छब्दस्य शकन्नादेशः । धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । एवं द्वितीयतृतीयौ । अपयति त्रीन्महावीरान् त्रिभिर्मन्त्रैः मखाय त्वेति प्रति मन्त्रम् ॥ ९ ॥

का० ( २६, १, २३ ) अश्वशकृता धूपयत्यश्वस्येति प्रतिमन्त्रम् । दक्षिणाग्निदीप्तनाश्वपुरीषेण त्रिभिर्मन्त्रैस्त्रीन्महावीरान् धूपयेत् एकैकधूपने सप्तसप्ताश्वशकृन्ति गृह्णाति ॥ हे महावीर ! पृथिव्याः देवयजने मखाय मखस्य शीर्ष्णे च वृष्णः सेक्तुरश्वस्य शक्ना शकृता पुरीषेण त्वा त्वां धूपयामि पद्दन्न इति सूत्रेण ( पा० ६, १, ६३ ) शकृच्छब्दस्य शकन्नादेशः । एवमितरमन्त्राभ्यामितरौ धूपयेत् ॥ का० ( २६, १, २४ ) प्रदहनं च मखायेति प्रतिमन्त्रम् । मखायेति त्रिभिर्मन्त्रैस्त्रीन्महावीरानुखावत् श्रपयेत् पिन्वनरौहिणैः सहेत्यर्थः ॥ मखाय मखस्य शीर्ष्णे त्वा त्वां निर्दहामि । एवमितरौ ॥ ९ ॥

ऋजवे॑ त्वा । साधवे॑ त्वा । सुक्षित्यै॑ त्वा॑ । मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे मखाय॑ त्वा मखस्य॑ त्वा शीर्ष्णे ॥ १० ॥

(१) पक्वानुद्धरति । ऋजवे त्वेति प्रतिमन्त्रम् । ऋजवे त्वा

---

नास्ति तद्यथा । अश्वशकृता धूपयति त्रिभिर्मन्त्रैः अश्वस्य त्वा अश्वस्य त्वां हे महावीर वृष्णः सेक्तुः शक्ना शकृच्छब्दस्य शकन्नादेशः । धूपयामि देवयजने पृथिव्याः मखाय त्वा मखस्य त्वा शीर्ष्णे एवं द्वितीयतृतीयौ अपयति त्रीन् महावीरान् त्रिभिर्मन्त्रैर्मखाय त्वेति प्रति मन्त्रम ॥ ९ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बइमुं०पु० नास्ति । तद्यथा । पक्वानुद्धरति ऋजवे त्विति प्रति मन्त्रम् असौ लोकः ऋजुः सत्यमेव तत्र कौटिल्यरहितं सत्यं वा आदित्यः ऋजवे त्वा आदित्याय त्वामुद्धरामीति शेषः । एषः प्रथमः प्रवर्ग्यः साधवे त्वा अयं वै साधुर्वायुः एष हीमान् लोकान् सिद्धोऽप्रतिहतः पवत एष उ

असौ वै लोकः ऋजुः । सत्यमेव तत्र कौटिल्यरहितम् । सत्यम्वा आदित्यः ऋजवे त्वा आदित्याय त्वाम् उद्धरामीति शेषः । एष उ प्रथमः प्रवर्ग्यः । साधवे त्वा अयं वै साधुर्वायुः । एष हीमान् लोकान् सिद्धोऽप्रतिहतः पवते । एष उ द्वितीयः प्रवर्ग्यः । सुक्षित्यै त्वा अयं वै लोकः सुक्षितः । अस्मिन्हि लोके सर्वाणि भूतानि क्षियन्ति । अग्निर्हि वा सुक्षितः । अग्निर्हि अस्मिन् लोके सर्वाणि भूतानि परिगृह्य वसति । एष उ तृतीयः प्रवर्ग्यः । अजापयसा परि सिञ्चति महावीरान् मखाय त्वेति प्रतिमन्त्रम् । महावीरसंभरणं समाप्तम् ॥ १० ॥

का० ( २६, १, २५ ) पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम । पक्वान्महावीरानापाकाद्विवोद्धरति त्रिभिर्मन्त्रैरित्यर्थः ॥ ऋजवे । असौ लोक ऋजुः तत्र सत्यमेव न तु कौटिल्यम् सत्यमादित्यः हे महावीर ! ऋजवे सत्यायादित्याय त्वा त्वामुद्धरामीति शेषः । तथा च श्रुतिः ( १४, १, २,२२ ) स उद्धरत्यृजवे त्वेत्यसौ वै लोक ऋजुः सत्यꣳ ह्यृजुः सत्यमेष य एष तपत्येष उ प्रथमः प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाहर्जवे त्वेति ॥ अथ द्वितीयम् साधवे त्वा । साधवे वायवेऽर्थाय वायुप्रीत्यै त्वामुद्धरामि । तथा च श्रुतिः ( १४, १, २, २३ ) साधवे त्वेत्ययꣳ साधुर्योऽयं पवत एष हीमां लोकान् सिद्धोऽनुपवत एष उ द्वितीयः प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाह साधवे त्वेति ॥ अथ तृतीयम् सुक्षित्यै त्वा । सुतरां क्षियन्ति निवसन्ति सर्वभूतानि यस्यां सा सुक्षितिर्भूमिः । तथा च श्रुतिः ( १४, १, २, २४ ) सुक्षित्यै त्वेत्ययं वै लोकः सुक्षितिरस्मिन् हि लोके सर्वाणि भूतानि क्षियन्त्यथोऽग्निर्वै सुक्षितिरग्निर्ह्येवास्मिन् लो-

---

द्वितीयः प्रवर्ग्यः सुक्षित्यै त्वा अयं लोकः सुक्षितिरस्मिन् हि लोके सर्वाणि भूतानि क्षियन्ति निवसन्ति । अग्निर्हि वा सुक्षितिः अग्निर्हि वा अस्मिन् लोके सर्वाणि भूतानि क्षियति परिगृह्य वसति एष उ तृतीयः प्रवर्ग्यः अजापयसा परिसिञ्चति महावीरान् मखाय त्वेति प्रति मन्त्रं महावीरसंभरणं समाप्तम् ॥ १० ॥

के सर्वाणि भूतानि क्षियत्येष उ तृतीयः प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाह सुक्षित्यै त्वेति ॥ का० ( २६, १, २६ ) अजापयसाव-सिञ्चति मखायेति प्रतिमन्त्रम् । अजादुग्धेन त्रीन्महावीरांस्त्रिभिः तुल्यमन्त्रैः सिञ्चतीत्यर्थः ॥ मखाय मखशीर्ष्णे चाजापयसा त्वां सिञ्चामीत्यर्थः ॥ १० ॥

इति महावीरसम्भरणं समाप्तम् ॥

यमार्य त्वा । मखार्य त्वा । सूर्य्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु । पृथिव्याः सᳬस्पृशंस्पाहि । अर्चिरसि शोचिरसि तपोऽसि ॥ ११ ॥

(१) महावीरं प्रोक्षति । यमाय त्वा मखाय त्वा सूर्यस्य-त्वा तपसे । प्रोक्षामीति शेषः । महावीरमनक्ति । देवस्त्वा सविता मध्वानक्तु इति व्याख्यातम् । रजतशतमानं खरे उपगूहति । पृथिव्याः सᳬस्पृशः । संस्पृशतीति संस्पृक् क्विबन्तस्यैतद्रूपम् । हे रजत पृथिव्याः संस्पृशो राक्षसात् महावीरम्पाहि गोपाय । महावीरमाज्यवन्तं निदधाति । अर्चिरसि शोचिरसि तपोऽसि ऋज्वर्थम् ॥ ११ ॥

का० ( २६, २, १३ ) ब्रह्मानुजातो यमाय त्वेति महावीरं प्रोक्षति । प्रचरेतिं ब्रह्मणानुज्ञातोऽध्वर्युरुपविश्य यमाय त्वेति मन्त्रत्रयेण

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । महावीरं प्रोक्षति यमाय त्वा मखाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे त्वां प्रोक्षामीति शेषः । महावीरमनक्ति देवस्त्वा सविता मध्वानक्त्विति व्याख्यातम् रजतशतमानं खरे उपगूहति । पृथिव्याः संस्पृशः संस्पृशतीति संस्पृक् क्विबन्तस्यैतद्रूपम् : हे रजत पृथिव्याः संस्पृशो राक्षसात् महावीरं पाहि गोपाय महावीरमाज्यवन्तं निदधाति अर्चिरसि शोचिरसि तपोऽसि यजूंषि अन्यहज्वर्थम् ॥ ११ ॥

प्रचरणीयं महावीरं वारत्रयं प्रोक्षतीत्यर्थः । त्रीणि यजूंषि । यमयति नियच्छति सर्वमिति यम आदित्यस्तत्प्रीत्यै त्वा त्वां प्रोक्षामि । तथा च श्रुतिः ( १४, १, ३, ४ ) स प्रोक्षति यमाय त्वेत्येष वै यमो य एष तपत्येष हीदꣳ सर्वं यमयत्येतेनेदꣳ सर्वं यतमेष उ प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाह यमाय त्वेति । मखाय त्वा । मखो यज्ञः प्रवर्ग्यः सूर्य्यरूपस्तस्मै त्वां प्रोक्षामि । तथा च श्रुतिः ( १४, १, ३, ५ ) एष वै मखाय एष तपत्येष उ प्रवर्ग्यस्तदेतमेवैतत् प्रीणाति तस्मादाह मखाय त्वेति । सूर्य्यस्य त्वा तपसे । तपतीति तपस्तेजः सूर्य्यतेजोरूपाय प्रवर्ग्याय त्वां प्रोक्षामि । तथा च श्रुतिः ( १४, १, ३, ६ ) एष वै सूर्य्यो य एष तपत्येष उ प्रवर्ग्यस्तदेवमेवैतत् प्रीणाति तस्मादाह सूर्य्यस्य त्वा तपस इति । का० ( २६, २, २० ) अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति महावीरमाज्यं संस्कृत्य । होत्रा अञ्जन्ति यं प्रथयन्तीति मन्त्रे पठ्यमानेऽध्वर्युराज्यं विधिना संस्कृत्य तेनाज्येन प्रचरणीयं महावीरं मन्त्रेणानक्ति । सविता देवः मध्वा मधुना मधुरेण सर्वजगद्रूपेणाज्येन हे महावीर ! त्वामनक्तु लिम्पतु मध्वेति नुमभावः आगमस्यानित्यत्वात् । तथा च श्रुतिः ( १४, १, ३, १३, ) सर्वं वा इदं मधु यदिदं किञ्च तदेनमनेन सर्वेण समनक्तीति । का० ( २६, २, २१ ) रजतशतमानं खर उपगूहति पृथिव्याः सꣳस्पृश इति । रजतस्य शतमानं शतरक्तिकामितं रजतं खरे सिकतान्तरुपगूहतीत्यर्थः । प्राजापत्या गायत्री रजतदेवत्या । संस्पृशति उपद्रवार्थं स्पर्शं करोति संस्पृक् राक्षसः किंभूतम् पृथिव्याः सम्बन्धिनः संस्पृशः राक्षसात् महावीरं हे रजत ! त्वं पाहि रक्ष । देवा राक्षसेभ्यो भीताः सन्तो यज्ञरक्षार्थमग्नेरपत्यं रजतं रक्षसां घाताय खरे निदधुः अथ च पृथिवी महावीरपाकेऽग्नेर्भीता ततोऽसौ मा दह्यतामिति रजतं खरेऽन्तर्हितमिति श्रुतौ कथा । तथा च श्रुतिः ( १४, १, ३, १४ ) देवा आबिभयुर्यद्वै न इममधस्ताद्रक्षाꣳसि नाष्ट्रा न हन्युरित्यग्नेर्वा एतद्रेतो यद्धिरण्यं नाष्ट्राणाꣳ रक्षसामपहत्या इति तथा ( १४, १, ३, १४ ) अथो पृथिव्यु ह वा एतस्माद्बिभयाञ्चकार यद्वै मायं तप्तः शुशुचानो न हिꣳस्यादिति तदेवास्या एतदन्तर्दधाति रजतमिति ॥ का० ( २६, ३, ३, ४ ) सꣳसीदस्वेत्युच्यमाने मुञ्जप्रलवान्

त्रिगुणानादीप्य प्रतिदिशं खरे करोति तेषु महावीरमाज्यवन्तम-र्चिरसीति । होत्रा संसीदस्वेति ( ११, ३७ ) पठ्यमानेऽध्वर्युस्त्रि-गुणितान् मुञ्जखण्डान् गार्हपत्ये प्रदीप्य खरे चतुर्दिक्षु कृत्वा ते-षु मुञ्जेषु संस्कृताज्यपूर्णं प्रचरणीयं महावीरं निदधातीति सू-त्रार्थः ॥ यजुस्त्रिष्टुप् घर्मदेवत्या । हे महावीर ! त्वमार्चिश्चन्द्रका-न्तिरूपोऽसि शोचिरग्नितेजोरूपोऽसि तपः सूर्यतपरूपोऽसि एष वै घर्मो य एष तपति सर्वं वा एतदेष तदेतमेवैतत् प्रीणातीति श्रु-तेः ( १४, १ ३ १७ ) यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति स्मृतेश्च ( भगव-द्गीता० १५, १२ ) ॥ ११ ॥

अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दाः । पुत्र-वती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः सुषदा प-श्चाद् देवस्य सवितुराधिपत्ये चक्षुर्मे दाः । आश्रु-तिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः । विधृतिरु-परिष्टाद् बृहस्पतेराधिपत्य ओजो मे दाः । विश्वा-भ्यो मा नाष्ट्राभ्यस्पाहि । मनोरश्वासि ॥ १२ ॥

(१) अनाधृष्टेति वाचयति प्रादेशमध्ये विधारयन् । हे पृ-

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अनाधृष्टेति वाचयति प्रादेशमध्यं विधारयन् हे पृथिवि या त्वम् अनाधृष्टा अनाधर्षिता रक्षोभिः पुरस्तात् तां त्वां ब्रवीमि अग्नेः आधिपत्ये सति आयुर्मे दाः देहि या त्वं पुत्रवती दक्षि-णतो भवसि तां त्वां ब्रवीमि इन्द्रस्याधिपत्ये सति प्रजां मे मह्यं द-द्याः । या त्वं सुषदा स्वास्थेया साधु अस्मिन् सीदन्तीति सुषदा पश्चाद् भवसि तां त्वां ब्रवीमि । देवस्य सवितुः आधिपत्ये सति च-क्षुर्मे दाः दद्याः या त्वम् आश्रुतिः आश्रयन्त्यास्मिन् यजमाना इति आश्रुतिः । यश्चिप्योऽसौ देशः या त्वमुत्तरतो भवसि तां त्वां ब्रवीमि धातुराधिपत्ये सति रायस्पोषं मे दाः धनस्य पुष्टिं मह्यं देहि या त्वं

थिवि या त्वम् अनाधृष्टा अधर्षिता रक्षोभिः पुरस्तात् तां त्वां ब्रवीमि । अग्नेः आधिपत्ये सति आयुर्मे दाः देहि । या त्वं पुत्रवती दक्षिणतो भवासि । तां त्वां ब्रवीमि इन्द्रस्याधिपत्ये सति प्रजाम्मे दाः मह्यं देहि । या त्वं सुषदा स्वास्थेया साध्वस्मिन्सीदतीति सुषदा । पश्चाद्भवासि तां त्वां ब्रवीमि । देवस्य सवितुः आधिपत्ये सति चक्षुर्मे दाः देहि । या त्वम् आश्रुतिः । आश्रयन्त्यस्मिन्यजमाना इत्याश्रुतिः । याज्ञियो ह्यसौ देशः । उत्तरतो भवासि । तां त्वां ब्रवीमि । धातुराधिपत्ये सति रायस्पोषम् धनस्य पुष्टिम् मे दाः देहि । या त्वं विधृतिः विधारिणी उपरिष्टाद्भवासि तां त्वां ब्रवीमि बृहस्पतेः आधिपत्ये सति ओजो मे दाः । दक्षिणत उत्तानेन पाणिना निह्नुते । विश्वाभ्यो मानाष्ट्राभ्यस्पाहि । सर्वाभ्यः माम् आर्त्तिभ्यः गोपायेति । इमामभिमृश्य जपति । मनोरश्वासि । अश्वा ह वा इयं भूत्वा मनुमुवाहेति श्रुतिः ॥ १२ ॥

का० ( २६, ३, ५ ) अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम् महावीरोपर्य्यङ्गुष्ठाङ्गुलिदेशं धरन्तं यजमानमध्वर्युर्मन्त्रान् वाचयतीति सूत्रार्थः ॥ सप्त यजूंषि पृथिवीदेवत्यानि यजमानस्याशीः । हे पृथिवि ! या त्वं पुरस्तात् पूर्वस्यां दिशि अनाधृष्टा रक्षोभिरनाधर्षिता अग्नेराधिपत्ये स्वामित्वे सति मे मह्यमायुर्दाः देहि ददातेर्लुङि मध्यमैकवचनेऽडभाव आर्षः अग्निमेवास्या अधिपतिं करोतीति ( १४, १, ३, १९ ) श्रुतेः ॥ या त्वं दक्षिणस्यां दिशि इन्द्रस्याधिपत्ये सति पुत्रवती पुत्रयुता सा मे मह्यं प्रजां पुत्रादिकां दाः देहि इन्द्रमेवास्या अधिपतिं करोति नाष्ट्राणाᳩ रक्षसामपहत्या इति

---

विधृतिः विधारिणी उपरिष्टाद्भवसि तां त्वां ब्रवीमि बृहस्पतेराधिपत्ये सति ओजो मे दाः दक्षिणत उत्तानेन पाणिना निह्नुते विश्वाभ्यो मानाष्ट्राभ्यस्पाहि सर्वाभ्यो माम् आर्त्तिभ्यो गोपाय पाहि इमामभिमृश्य जपति मनोरश्वासि अश्वा ह वा इयं भूत्वा मनुमुवाहेति श्रुतिः ॥१२॥

( १४, १, ३, २० ) श्रुतेः ॥ या त्वं पश्चात् पश्चिमायां दिशि सुषदा भवसि सुष्ठु अस्यां सीदन्ति जना इति सुषदा ईषद्दुःसुष्विति ( पा० ३, ३, १२६ ) खल्प्रत्यय. सवितुर्देवस्याधिपत्ये सति सा त्वं मे चक्षुः नेत्रेन्द्रियं दाः देहि देवमेवास्यै सवितारमधिपतिं करोतीति ( १४, १, ३, २१ ) श्रुतेः हे पृथिवि ! या त्वमुत्तरतः उत्तरस्यां दिशि धातुर्ब्रह्मण आधिपत्ये सति आश्रुतिरसि आश्रावयन्ति ऋत्विजो यस्यां सा आश्रुतिः यज्ञियो ह्युत्तरदेशः सा त्वं मे रायो धनस्य पोषं पुष्टिं दाः देहि धातारमेवास्या अधिपतिं करोतीति ( १४, १. ३, २२ ) श्रुतेः ॥ या त्वमुपरिष्टादुपरिप्रदेशे बृहस्पतेराधिपत्ये सति विधृतिरसि विशेषेण धारयतीति विधृतिः उपरिष्टाज्जुह्वादिकं ध्रियते सा त्वं मे मह्यमोजो बलं दाः देहि बृहस्पतिमेवास्या अधिपतिं करोतीति ( १४, १, ३, २३ ) श्रुतेः ॥ २६, ३, ७ ) विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति । महावीराद्दक्षिणभूमौ यजमानो मन्त्रं पठन् स्वकरं निदधात्युत्तानम् ॥ यजुर्बृहती । हे महावीरदक्षिणभूमे ! विश्वाभ्यः सर्वाभ्यः नाष्ट्राभ्यः नाशकर्त्रीभ्यः पिशाचादिभ्यो लोकप्रसिद्धं नोऽस्मान् पाहि रक्ष सर्वाभ्यो मार्त्तिभ्यो गोपायेति ( १४, १, ३, २४ ) श्रुतेः । छन्दसि वाप्राम्रेडितयोरिति ( पा० ८, ३, ४९ ) विसर्गस्य सत्वम् ॥ का० ( १६, ३, ८ ) मनोरश्वेति प्रादेशमुत्तरः । महावीरादुत्तरतो यजमानो निजप्रदेशं निदधातीति सूत्रार्थः दैवी पङ्क्तिः । हे घर्मोत्तरभूमे । त्वं मनोः राज्ञः अश्वा वडवासि वहनाय अश्वा ह वा इयं भूत्वा मनुमुवाहेति ( १४, १, ३, २५ ) श्रुतेः ॥ १२ ॥

स्वाहा॑ म॒रुद्भिः॒ परि॑श्रीयस्व । दि॒वः स॒ꣳस्पृश॑स्पाहि । मधु॒ मधु॒ मधु॑ ॥ १३ ॥

(१) [1]विकङ्कतशकलैः परिश्रपयति स्वाहा मरुद्भिः परि-

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । विकङ्कतशकलैः परिश्रपयति स्वाहा मरुद्भिः परिश्रीयस्व हे प्रवर्ग्य यः त्वं स्वाहाकारः तं त्वां ब्रवीमि मरुद्भिर्विशो वै मरुत इति श्रुतिः । एताभिः परिश्रीयस्व

श्रीयस्व । हे प्रवर्ग्य यस्त्वं स्वाहाकारः तं त्वां ब्रवीमि । मरुद्भिः रश्मिभिः यद्वा विशो वै मरुत इति श्रुतिः ताभिः परिश्रीयस्व । कर्मणि यक् । आश्रीयस्व । मरुतस्त्वामाश्रयन्त्वित्यर्थः । सुवर्णशतमानेनापि दधाति । दिवः द्युलोकस्य संस्पर्शनो रक्षसो महावीरे पाहि गोपाय । अथवा । द्युलोकस्य संस्पर्शनकर्तॄन् देवांस्त्वं हे महावीर पाहि । धवित्रैराधुनोति । मधु मधु मधु । मधु प्राणो मधुसामान्यादुच्यते । स ह्यङ्गानां रसः तं महावीरे स्थापयति ॥ १३ ॥

का० ( २६, ३, ९, १० ) धृष्टिभ्यां भस्मना परिकीर्य्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरित्यधिकं दक्षिणतो द्वौ मन्त्रेण । अध्वर्युर्धृष्टिभ्यां गार्हपत्यस्य भस्माङ्गारांश्च महावीरं परितो निक्षिप्य प्रागग्रैरुदगग्रैस्त्रयोदशविकङ्कतशकलैर्महावीरं वेष्टयति अङ्गारोपरि शकलान्निक्षिपतीत्यर्थः तन्मध्याद् द्वौ शकलौ मन्त्रेण प्राञ्चौ निदधाति शेषांस्तूष्णीम् एवं प्रतिदिशं त्रिषु त्रिषु स्थितेषु अधिकं त्रयोदशं दक्षिणतो निदधातीति सूत्रार्थः ॥ मासानां त्रयोदशत्वात् त्रयोदशशकलैराच्छादनम् त्रयोदश वै मासाः संवत्सरस्य संवत्सर एष य एष तपत्येष उ प्रवर्ग्य इति ( १४, १, ३, २ ) श्रुतेः । यजुःपङ्क्तिर्घर्मदेवत्या । हे घर्म ! त्वं स्वाहाकारोऽसि हविराधारत्वात् सूर्य्यरूपोऽसि एष वै स्वाहाकारो य एष तपत्येष उ प्रवर्ग्य इति ( १४, १, ३, २६ ) श्रुतेः अतस्त्वं मरुद्भिः प्रजाभिरस्मद्रूपाभिः परिश्रीयस्व सेव्यस्व कर्मणि यक् मरुतस्त्वामाश्रयन्त्वित्यर्थः विशो वै मरुतो विशैवैतत् क्षत्रं परिवृंहन्ति तदिदं क्षत्रमुभयतो विशा-

कर्मणि युक् आश्रीयस्व मरुतस्त्वमाश्रयन्त्वित्यर्थः । सुवर्णशतमानेनापि दधाति दिवः द्युलोकस्य संशिनो रक्षसो महावीरं पाहि गोपाय अथवा द्युलोकस्य संस्पर्शकर्तॄन् देवादीन् त्वं महावीरं पाहि गोपाय अथ धवित्रैराधुनोति मधु रसः प्राणो मधु रसस्तत्सामान्यादुच्यते । स ह्यङ्गानां रसस्तं महावीरं स्थापयति ॥ १३ ॥

परिवृढामिति ( १४, १, ३, २७ ) श्रुतिः ॥ का० ( २६, २, १० ) सुवर्णशतमानेनापिदधाति दिवः सᳬस्पृश इति । शतरक्तिकामितेन सुवर्णेन महावीरमाच्छादयतीति सूत्रार्थः ॥ दैवी जगती सुवर्णदेवत्या । हे शतमान ! दिवः द्युलोकसम्बन्धिनः संस्पृशः स्पर्शकर्त्रीन् देवान् पाहि देवा राक्षसेभ्यो भीता महावीररक्षायै स्वर्णं स्थापितवन्त इति श्रुतौ कथा देवा अबिभयुरित्यादिकार्या (१४,१,३,२९)। का० ( २६, ४, २ ) कृष्णाजिनावकृत्तैर्धवित्रैरुपवीजयति त्रिभिर्दण्डवद्भिर्मधु मध्विति । कृष्णाजिनकृतैर्दण्डयुक्तैस्त्रिभिर्व्यजनैरग्निं वीजयति दीपनायेति सूत्रार्थः ॥ त्रीणि यजूंषि प्राणदेवत्यानि दैव्युष्णिक्। मधुररससाम्यात् प्राणो मधु उच्यते मधु मधु मधु प्राणोदानव्यानत्रयं महावीरे स्थापयामीत्यर्थः तथा च श्रुतिः ( १४, १, ३, ३० ) अथ धवित्रैराधुनोति मधु मध्विति त्रिः प्राणो वै मधु प्राणमेवास्मिन्नेतद्दधाति त्रीणि भवन्ति त्रयो वै प्राणाः प्राण उदानो व्यानस्तानेवास्मिन्नेतद्दधातीति ॥ १३ ॥

गर्भो॑ दे॒वानां॑ पि॒ता म॑ती॒नां पतिः॑ प्र॒जाना॑म् । सं दे॒वो दे॒वेन॑ सवि॒त्रा ग॑त॒ सᳬ सूर्ये॑ण रोचते ॥ १४ ॥

(१)महावीरमुपतिष्ठते। गर्भो देवानामित्यवकाशैः तेन त्वष्टृमन्त इत्यतः प्राक् । यो गर्भो देवानाम् गृह्णातीति गर्भः आदित्यात्मना महावीरः । यश्च पिता मतीनां गोपायिता बुद्धीनाम् । यश्च पतिरधिपतिः प्रजानाम् । यश्च । सन्देवो देवेन सवित्रा

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । महावीरमुपतिष्ठन्ते गर्भो देवानामित्यवकाशैः । तेन त्वष्टृमन्त इत्यतः प्राक् यो गर्भो देवानां गृह्णातीति गर्भ आदित्यात्मना महावीरः । यश्च पिता मतीनां गोपायिता बुद्धीनां यश्च पतिरधिपतिः प्रजानां यश्च संदेवो देवेन सवित्रा गतः संगच्छते देवः प्रवर्ग्यः । देवेन सवित्रा सह संगच्छते यश्चापि संरोचते गर्भः सूर्येण सहैकीभूतः तं वयं स्तुम इति शेषः ॥ १४ ॥

गत । सङ्गत । सङ्गच्छते देवः प्रवर्ग्यः देवेन सवित्रा सह । यश्च संरोचते घर्मः सूर्येण सह एकीभूतः तं वयं स्तुम इति वाक्यशेषः ॥ १४ ॥

का० ( २६, ४, ११ ) परिक्रम्योपतिष्ठन्तेऽकृतं चेद् गर्भो देवानामिति । धवित्रैर्वीजनसमये उत्तरं देववत् परिक्रमणं प्रागकृतं चेदिह त्रिः परिक्रम्येतरथावृत्तिं सकृत् कृत्वा गर्भो देवानामित्यादिभिर्नमस्ते अस्तु मा मा हिंसीरित्यन्तैरवकाशसंज्ञकैर्मन्त्रैः सयजमाना ऋत्विजो महावीरमुपतिष्ठन्त इति सूत्रार्थः ॥ घर्मदेवत्या अवकाशमन्त्रा मा मा हिंसीरित्यन्ताः आद्या ऋचां पङ्क्तिः । अथ मन्त्रार्थः देवो दीप्यमानो महावीरः सवित्रा देवेन सह सङ्गत सङ्गच्छते गमेर्लुङि वा गम इति ( १, २, १३ ) आत्मनेपदे विकल्पेन सिचः कित्त्वादनुदात्तोपदेशेति ( पा० ६, ४, ३७ ) मलोपे ह्रस्वादङ्गादिति ( पा० ८, २, २७ ) सिचो लोपः बहुलं छन्दस्यमाङ्योगेऽपीति ( पा० ६, ४, ७५ ) अडभावः समो गमीत्यादिना ( पा० १. ३, २९ ) तङ् । यश्च घर्मः सूर्य्येण सहैकीभूतः सन् संरोचते सम्यग् दीप्यते तं वयं स्तुम इति शेषः । कीदृशः ? देवानां दीप्तानां रश्मीनां दृश्यमानानां सर्वेषां वा गर्भः गृह्णातीति गर्भः ग्रहीता एष वै गर्भो देवानां य एष तपत्येष हीद्ँ सर्वँ संगृभ्णात्येतेनेद्ँ सर्वं गृभीतमेष उ प्रवर्ग्य इति ( १४, १, ४, २ ) श्रुतिः । तथा मतीनां बुद्धीनां पिता पालकः बुद्धिप्रवर्त्तकः प्रजानां पतिः पालकः ॥ १४ ॥

समग्निरग्निना गत सं दैवेन सवित्रा सँ सूर्य्येणारोचिष्ट । स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा सँ सूर्य्येणारूरुचत ॥ १५ ॥

(१) समग्निः । अनुष्टुप् ब्राह्मी । यश्च । सङ्गत सङ्गच्छते

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । समग्निः । ब्राह्मी अनुष्टुप् यश्च संगतः संगच्छतेऽग्निः घर्मः अग्निना सूर्याख्येन संगच्छते च दैवेन सवित्रा समरोचि-

अग्निः घर्मः अग्निना सूर्याख्येन सह । यश्च सङ्गत सङ्गच्छते दैवेन सवित्रा सह। यश्च समरोचिष्ट संरोचते दीप्यते सूर्येण सह स्पर्द्धयन् । तं वयं स्तुम इति वाक्यशेषः । स्वाहाकारः आदित्यप्रीणनार्थः । यश्च स्वाहा अग्निः सङ्गत । सङ्गच्छते। तपसा अदित्यसम्बन्धिना सह। यश्च सङ्गत। सङ्गच्छते दैव्येन सवित्रा सह । यश्च समरूरुचत । समरोचत संरोचते सूर्येण सह स्पर्द्धयन्। तं वयं स्तुम इति वाक्यशेषः ॥ १५ ॥

ब्राह्म्यनुष्टुप्। यः अग्निः घर्मः अग्निना सह सङ्गत सङ्गच्छते एकीभवति देव एव दैवः सवित्रा दैवेन देवेन सह सङ्गच्छते यश्च सूर्य्येण सह समरोचिष्ट संरोचते ॥ अवरं स्वाहाकारं करोति परां देवतामसाविव बन्धुरिति ( १४, १, ४, ६ ) श्रुतेः। स्वाहा अग्निः। स्वाहासहितोऽग्निर्घर्मस्तपसा सूर्य्यतेजसा सङ्गत सङ्गच्छते दैव्येन देवेन सवित्रा च सङ्गच्छते सूर्य्येण सह समरूरुचत सर्वं सम्यक् रोचयति प्रकाशयति रोचतेर्णिजन्ताल्लुङ् वयं तं स्तुम इति शेषः ॥ १५ ॥

धर्ता दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः । वाचमस्मे नियच्छ देवायुवम् ॥ १६ ॥

(१) धर्ता दिवः। ऊर्ध्वबृहती। घर्मस्तुतिः। योऽयं धर्ता

ष्ट यश्च संरोचते दीप्यते सूर्येण सह स्पर्द्धया तं वयं स्तुम इति वाक्यशेषः। स्वाहाकार आदित्यप्रीणनार्थः । यमग्निं सङ्गतं सङ्गच्छते आदित्यसम्बन्धिना तपसा यः सङ्गच्छते देवेन सवित्रा समरूरुचत समारोचते स्म सूर्येण स्पर्द्धया तं वयं स्तुम इति वाक्यशेषः ॥१५॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ती। तद्यथा। धर्ता दिवः । ऊर्ध्वबृहती घर्मस्तुतिः । योऽयं धर्ता धारयिता दिवः द्युलोकस्य तपसश्च रश्मिजालस्य धारयिता

धारयिता दिवः द्युलोकस्य । यश्च तपसः रश्मिजालस्य धर्त्ता । विभाति च पृथिव्याम् अवस्थितः । धर्त्ता धारयिता च देवानाम् । स्वयं च देवः अमर्त्यः मनुष्यधर्मरहितः । तपोजाः । तपः आदित्यः तस्माज्जायते । सोऽयम् वाचम् अस्मे अस्मासु । नियच्छ । नियच्छत्विति पुरुषव्यत्ययः । निगृह्णातु स्थापयतु । देवायुवम् । या देवान् यौति मिश्रयति आगमयति सा तथोक्ता तां देवा युवम् ॥ १६ ॥

ऊर्ध्वबृहती । त्रिजागतोर्ध्वबृहती अत्राद्यौ त्रयोदशवर्णौ तृतीय एकादशवर्णस्तेनैकाधिका । स देवो घर्मः अस्मे अस्मासु विभक्तेः शे-आदेशः वाचं नियच्छ पुरुषव्यत्ययः यज्ञं नियच्छतु स्थापयतु । किम्भूतां वाचम ? देवयुवं देवान् यौति मिश्रयति देवयुः ताम् क्विपि तुगभाव आर्षः अनित्यमागमशासनमिति वचनात् देवसमूहमाह्वयन्तं यज्ञं समापयत्वित्यर्थः यज्ञो वै वाग्यज्ञमस्मभ्यं प्रयच्छ येन देवान् प्रीणामेत्येवैतदाहेति ( १४, १, ४, ८ ) श्रुतेः देवयुवमित्यत्र संहितायां वकारस्य दीर्घः । स कः ? यो देवः पृथिव्यां विभाति शोभते ॥ कीदृशः ? दिवो धर्ता द्युलोकस्य धारयिता । तपसः रश्मिजालस्य च धर्ता । देवतानाञ्च धर्त्ता । अमर्त्यः मनुष्यधर्मरहितः अजरामरः । तपोजाः तप आदित्यस्तस्माज्जायत इति तपोजाः सूर्योत्पन्नः ॥ १६ ॥

अपंश्यं गोपामनिंपद्यमानमा च परा च पथिभिश्चरंन्तम् । स सध्रीचीः स विषूचीर्वसान आवरीवर्त्ति भुवंनेष्वन्तः ॥ १७ ॥

विभाति च पृथिव्यामवस्थितः यः धर्ता धारयिता च देवानां स्वयं च देवः अमर्त्यः मनुष्यधर्मरहितः तपोजाः तप आदित्यः तस्माज्जायते सोऽयं वाचमस्मे अस्मासु नियच्छ नियच्छत्विति पुरुषव्यत्ययः निगृह्णातु स्थापयतु देवायुवं देवान् या मिश्रयति आगमयति सा तथोक्ता ॥ १६ ॥

(१) अपश्यम् । त्रिष्टुप् । आदित्यात्मना घर्मस्तुतिः । यमहमपश्यम् । गोपां गोप्तारम् । अनिपद्यमानम् अनालम्बने अन्तरिक्षे गच्छन्नासौ पतति । आच परा च पथिभिश्चरन्तम् । आचरन्तं च आगच्छन्तं च पराचरन्तं च । परागच्छन्तं च । पथिभिः देवैः सह । स सध्रीचीः । स एव स सध्रीचीः सहस्य सध्रिरादेशः । सहाञ्चनाः दिशो रश्मीन् वा सहस्रम् । स विषूचीः । विषु इति निपातो नानावचनः । अञ्चतेः परं क्विप् । नानाञ्चनाः दिशः नानाञ्चनान्वा रश्मीन् । वसानः आच्छादयन् । आवरीवर्त्ति । पुनः पुनरावर्त्तते । भुवनेषु त्रिषु लोकेषु । अन्तर्मध्ये व्यवस्थितः ॥ १७ ॥

त्रिष्टुब्दीर्घतमोदृष्टा । स घर्मो भुवनेषु त्रिलोकेषु अन्तर्मध्ये व्यवस्थितः आवरीवर्त्ति पुनः पुनरावर्त्तते वृतेर्यङ्लुकि रूपम् । कीदृशः ? सध्रीचीः सह अञ्चन्तीति सध्र्यच्यः सहस्य सध्रिरादेशः सहाञ्चना दिशो रश्मीन् वा वसानः आच्छादयन् वस आच्छादने शानच्प्रत्ययः । विषूचीः विषु निपातो नानार्थः विषु अञ्चन्तीति विषूच्यः ताः नानाञ्चना दिशो रश्मीन् वा वसानः क्विबन्तादुगितश्चेति ( पा० ४, १, ६ ) ङीपि अचश्चेति ( पा० ६, ४, १३८ ) अलोपे चाविति ( पा० ६, ३, १३८ ) पूर्वपददीर्घः । सध्रीचीश्च द्वाव

---

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति । तद्यथा । अपश्यम् । त्रिष्टुप् । आदित्यात्मना घर्ममिममहमपश्यं गोपां गोप्तारम् अनिपद्यमानम् अनालम्बनम् अन्तरिक्षे गच्छन् नासौ नीचैः पतति आच पराच पथिभिश्चरन्तम् आगच्छन्तं परागच्छन्तं च पथिभिः देवैः स एव सध्रीचीः सहस्य सध्रिः आदेशः । सहाञ्चनाः दिशो रश्मीन् वा सहाञ्चनाः स एव विषूचीः विषु इति निपातो नानावचनः । अञ्चतेः परं क्विन् अनुनासिकलोपः । स्त्रीप्रत्ययः अकारलोपः क्वाविति पूर्वपदस्य दीर्घः । नानाञ्चनाः दिशः नानाञ्चनान् वा रश्मीन् वसानः । आच्छादयन् अवरीवर्त्ति पुनः पुनः आवर्त्तते। भुवनेषु त्रिलोकेषु अन्तर्व्यवस्थितः॥१७॥

विषूचीश्च दिशो वस्तेऽथो रश्मीनिति ( १४, १, ४, १० ) श्रुतिः । एकः सशब्दः पादपूरणः । स कः ? यमहमपश्यमादित्यरूपं पश्यामि । कीदृशम् ? गोपाम् गोपायतीति गोपास्तम् क्विपि यलोपः । अनिपद्यमानं निपद्यते पततीति निपद्यमानः न निपद्यमानोऽनिपद्यमानस्तम् अन्तरिक्षे गच्छन्तमपि नाधः पतन्तम् । च पुनः पथिभिः देवमार्गैः आचरन्तमागच्छन्तम् पराचरन्तं परागच्छन्तं च गमनागमनं कुर्वाणम् ॥ १७ ॥

**विश्वा॑सां भुवां पते॒ विश्व॑स्य मनसस्पते॒ विश्व॑स्य वचसस्पते॒ सर्व॑स्य वचसस्पते । दे॒वश्रु॒त्त्वं दे॑व घर्म दे॒वो दे॒वान् पा॑हि । अत्र॒ प्रावी॒रनु॑ वां दे॒ववी॑तये । म॒धु माध्वी॑भ्यां॒ म॒धु माधू॑चीभ्याम् ॥ १८ ॥**

( १ ) विश्वासां भुवाम् । सर्वासां पृथिवीनां पते हे प्रवर्ग्य । विश्वस्य मनसः सर्वस्य प्राण्याश्रयस्य मनसः पते । विश्वस्य वचसः सर्वस्य त्रयीलक्षणस्य वचसः पते सर्वस्य वचसः सर्वस्य लौकिकस्य वचसः पते । त्वां स्तुम इति शेषः ।

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । विश्वासां भुवां सर्वासां पृथिवीनां पते प्रवर्ग्य विश्वस्य मनसः सर्वप्राण्याश्रयस्य मनसः पते विश्वस्य वचसः पते सर्वस्य त्रयीलक्षणस्य वचसस्पते सर्वस्य लोकस्य वचसस्पते त्वां स्तुम इति शेषः । यतश्च त्वं देवश्रुत् देवैः श्रुतः अतो याचे हे देव घर्म देवान् पाहि गोपाय अत्र प्रावीरनु वां देववीतये अस्मिन् सत्रे यज्ञे अस्मिन्नवसरे प्रावीरिति पुरुषस्य व्यत्ययः । प्रावीस्तर्पयतु घर्मो वा युवां हे अश्विनौ अनुदेववीतये अनन्तरं देवतर्पणाय नमः । करोत्विति शेषः । मधुमाध्वीभ्यां मधुनाम ब्राह्मणं तदश्विभ्यां ददौ दध्यङ्ङाथर्वणस्तदेतदुक्तं मधुमाध्वीभ्यां मधुब्राह्मणं प्रति यौ गच्छतः तौ मध्वश्विनौ ताभ्यां शेषश्च पूर्वं व्याख्यातः ॥ १८ ॥

यतश्च त्वं देवश्रुत् देवैः श्रुतः अतो त्वां याचे । हे देव घर्म त्वं देवः सन् देवान् पाहि गोपाय । अत्र प्रावीरनु वां देववीतये । अत्र सत्रे अस्मिन्नवसरे वा । प्रावीरिति पुरुषव्यत्ययः । प्रावतु तर्पयतु घर्मः । वां युवाम् हे अश्विनौ । अनुदेववीतये । ततोऽनन्तरम् देवतर्पणाय नमस्करोत्विति वाक्यशेषः । मधुमाध्वीभ्याम् । मधुनाम ब्राह्मणं तदश्विभ्यां ददौ दध्यङ्ङाथर्वणः । तदेतदुक्तम् । मधुमाधूचीभ्याम् । मधुब्राह्मणं प्रति अञ्चतो गच्छतः तौ ताभ्यां मध्वञ्चनाभ्याम् । शेषं पूर्ववद् व्याख्येयम् ॥ १८ ॥

अत्यष्टिः । हे विश्वासां भुवां पते सर्वासां पृथिवीनां स्वामिन् ! विश्वस्य सर्वप्राणिगतस्य मनसः पते ! अधिपते ! विश्वस्य वचसः पते ! सर्वप्राणिवचनस्य पालक ! सर्वस्य त्रयीलक्षणस्य वचसः पते ! प्रवर्त्तक ! हे देवश्रुत् ! देवैः श्रूयत इति देवश्रुत् देवप्रसिद्धः हे देव ? दीप्यमान ? हे घर्म ? देवस्त्वं देवान् पाहि रक्ष । एवं घर्मं सम्प्रार्थ्याश्विनावाह हे अश्विनौ । अत्र यज्ञे देववीतये देवतर्पणाय अनु अनन्तरं घर्मो वां प्रावीः प्रावीत् तर्पयतु लोडर्थे लुङ् पुरुषव्यत्ययश्च युवयोस्तृप्त्या सर्वदेवास्तृप्यन्तीति भावः याभ्यां युवाभ्यां दध्यङ्ङाथर्वणो मधुसंज्ञकं ब्राह्मणमुवाच दध्यङ् ह वा आभ्यामाथर्वणो मधुनाम ब्राह्मणमुवाचेति(१४,१,४,१३) श्रुतेः । कीदृशाभ्यां युवाभ्याम ? माध्वीभ्यां मधुब्राह्मणमीयाते तौ माध्व्यौ ताभ्याम् ई गतौ क्विप् । तथा माधूचीभ्यां मधुब्राह्मणमञ्चतः पूजयतस्तौ मध्वञ्चौ ताभ्यां मध्वग्भ्यामिति प्राप्ते ङीपि अलोपे मधूचीभ्यामिति लिङ्गव्यत्ययः आदिदीर्घश्छान्दसः ॥ १८ ॥

हृदे त्वा मन॑से त्वा दि॒वे त्वा सूर्या॑य त्वा । ऊ॒र्ध्वो अ॑ध्व॒रं दि॒वि दे॒वेषु॑ धेहि ॥ १९ ॥

( १ ) हृदे त्वा । परोष्णिक् । हृदे त्वा हृदयार्थं त्वां स्तुम

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु०

इति शेषः । एवं मनसे त्वां स्तुमः । दिवे अर्थाय त्वां स्तुम इति शेषः । सूर्याय त्वा सूर्यतर्प्पणाय त्वां स्तुमः । यस्माच्च सर्वकार्येषु त्वामेव स्तुमः । अतो ब्रूमः । ऊर्ध्वः अवहितचित्तः सन् अध्वरन्दिवि देवेषु धेहि निधेहि स्थापय ॥ १९ ॥

परोष्णिक् । आद्यावष्टार्णौ तृतीयो द्वादशार्णः सा परोष्णिक् परोष्णिक् परत इत्युक्तः । आद्ययोर्व्यूहः । हे घर्म ! हृदे त्वा हृदयस्वास्थ्याय त्वा त्वां स्तुम इति शेषः मनसे मनःशुद्ध्यर्थं त्वा त्वां स्तुमः दिवे स्वर्गप्राप्त्यै त्वा त्वां स्तुमः सूर्याय सूर्यतृप्त्यै त्वा त्वां स्तुमः हृदयं संशोध्य मनो निर्मलं कृत्वा दिवमस्मान्नीत्वा सूर्यं तर्पयेति भावः । किञ्च ऊर्ध्वः सावधानः सन् अध्वरमस्मदीयं यज्ञं दिवि द्युलोके वर्त्तमानेषु देवेषु धेहि स्थापय यज्ञे गते यजमानो गच्छत्येवेति भावः ॥ १९ ॥

पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳसीः । त्वष्टृमन्तस्त्वा सपेम पुत्रान् पशून् मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ सहपत्या भूयासम् ॥ २० ॥

( १ ) पिता नोऽसि । गायत्री । यतश्च त्वम् पिता नः

नास्ति । तद्यथा । हृदे त्वा । परोष्णिक् हृदे त्वा हृदयार्थे त्वा स्तुम इति शेषः । मनसे त्वां स्तुमः दिवेऽर्थाय त्वां स्तुमः । सूर्याय त्वां सूर्यतर्पणाय त्वामेव स्तुमः । यस्माच्च सर्वकार्येषु त्वामेव स्तुमः अतो ब्रूमः ऊर्ध्वः अवहितचित्तः सन् अध्वरं दिवि देवेषु धेहि स्थापय ॥ १९ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । पिता नः ऋ० गायत्री यस्त्वं नः अस्माकं पिता भवसि अतो ब्रवीमि पितेव भूत्वा अस्मान् बोधय सर्वथा-नमस्तेऽस्तु मा मा हिंसीथाः पत्नीं वाचयति महावीरं वीक्षमाणं त्वष्टृमन्तः यजुः यतश्च त्वष्ट्रा संयुक्ताः त्वष्टा रेतसामाधिकर्ता

अस्माकमासि भवासि। अतो ब्रवीमि। पितेव भूत्वा नः अस्मान् बोधि बोधय सर्वथा। नमः ते अस्तु मा मा हिंसीः हिंसीथाः। पत्नीं वाचयति महावीरमीक्षमाणाम्। त्वष्टृमन्तस्त्वा। यजुः। यतश्च त्वाष्ट्रसंयुक्ताः। त्वष्टा हि चेतसां विकर्त्ता। त्वामेव सपेम। सपतिः स्पृशतिकर्मा। मैथुनार्थमुपस्पृशामः। अतः पुत्रान् पशून् मयि धेहि स्थापय। प्रजां च भूयोभूयः अस्मासु धेहि स्थापय। किञ्च। अरिष्टा अनुपहिंसिता अहम्। सहपत्या सह भर्त्रा भूयासम्। आशीः॥ २०॥

ऋग्गायत्री। हे महावीर! त्वं नोऽस्माकं पितासि पालको भवसि पितेव नोऽस्मान् बोधि बोधय सर्वथा नमस्ते अस्तु मा मां मा हिंसीः मा जहि॥ महावीरोपस्थानं समाप्तम्॥ का० (२६, ४, १३) त्वष्टृमन्त इत्येनां वाचयति। महावीरमीक्षमाणामपनीतशिरोवस्त्रां घर्मं पश्यन्तीं पत्नीमध्वर्युर्वाचयतीत्यर्थः॥ ऋचां त्रिष्टुप् घर्मदेवत्या पत्न्याशीः। हे घर्म! वयं त्वा त्वां सपेम सपतिः स्पृशतिकर्मा मैथुनाय त्वामुपस्पृशामः। कीदृशा वयम्? त्वष्टृमन्तः त्वष्टा विद्यते येषां ते त्वष्टृमन्तः त्वष्टा रेतसामधिकारी तत्सहिताः मैथुनार्थोपस्पर्शे वीर्य्याधिष्ठातापेक्षितोऽत एतद्गुताः। अतः पुत्रान् पशून् च मयि विषये त्वं धेहि स्थापय प्रजामुत्तरोत्तरवंशवृद्धिमस्मासु धेहि स्थापय। किञ्च पत्या भर्त्रा सहारिष्टा अनुपहिंसिता अहं भूयासं भवेयम् भर्तृमती चिरं जीवेयमित्यर्थः। वृषा वै प्रवर्ग्यो योषा पत्नी मिथुनमेवैतत् प्रजननं क्रियत इति (१४, १, ४, १६) श्रुतेः॥२०॥

अहः केतुना जुषताᳮं सुज्योतिर्ज्योतिषा स्वाहा। रात्रिः केतुना जुषताᳮं सुज्योतिर्ज्योतिषा

---

त्वामेव सपेम सपति स्पृशतिकर्मा मैथुनार्थमुपस्पृशामः अतः पुत्रान् पशून् मयि धेहि स्थापय प्रजां च भूयो भूय अस्मासु धेहि स्थापय किञ्च अरिष्टा अनुपहिंसिता सह पत्या सह भर्त्रा भूयासम् आशीः॥ २०॥

स्वाहा ॥ २१ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

(१) रौहिणं जुहोति । अहः केतुना प्रज्ञया कर्मणा वा सहितम् जुषताम् । परिगृह्णातु । कथम्भूतम् । यदहः सुज्योतिः । ज्योतिषां शोभनज्योतिष्कम् केन ज्योतिषा स्वकीयेनैव । स्वाहा सुहुतं चैतद्धविर्भवतु । रात्रिः केतुना । अधस्तनेन व्याख्यातम् ॥ २१ ॥

इति उव्वटकृतौ मन्त्रभाष्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

का० ( २६, ४, १४ ) अहः केतुनेति दक्षिणं रौहिणं जुहोति । उपस्थानगानयोः समाप्तौ रौहिणहवन्या स्रुचा दक्षिणं रौहिणं पुरोडाशं सर्वहुतं जुहोतीत्यर्थः ॥ घर्मदेवत्ये यजुषी सामानुष्टुभौ । केतुः प्रज्ञा कर्म वा केतुना प्रज्ञया कर्मणा वा सहितमहः दिनं जुषतां रौहिणहोमेन प्रीयताम् । कीदृशमहः ? ज्योतिषा स्वकीयेनैव तेजसा सुज्योतिः शोभनं ज्योतिर्यस्य तत् विशिष्टतेजस्कम् स्वाहा एतद्धविः सुहुतमस्तु । रोहति स्वर्गं यजमानो याभ्यां तौ रौहिणौ अग्न्यादित्यौ अहोरात्रे वा इमौ लोकौ वा चक्षुषी वा शिरः प्रवर्ग्यो रौहिणौ चक्षुषी तत्र दधातीत्यादिरौहिणप्रशंसा श्रुतौ ( १४, २, १, १—५ ) ज्ञेया ॥ का० ( २६, ४ १४ ) रात्रिरिति सायम् । सायंकालीने प्रवर्ग्ये रात्रिरिति मन्त्रेण द्वावपि प्रवर्ग्यौ यथाकालं जुहोतीत्यर्थः ॥ केतुना सहिता रात्रिः जुषतां प्रीयताम् ज्योतिषा कृत्वा सुज्योतिरित्युक्तम् ॥ २१ ॥

श्रीमन्महीधरकृते वेददीपे हरिप्रिये ।
अग्न्यादिरौहिणान्तोऽयं सप्तत्रिंशो निरूपितः ॥ ३७ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा रौहिणं जुहोति अहः केतुना । केतुना प्रज्ञया कर्मणा वा सहितम् अहः जुषतां परिगृह्णातु कथम्भूतं यदहः सुज्योतिर्ज्योतिषा शोभनज्योतिष्कं यदहः । केन ज्योतिषा स्वकीयेनैव स्वाहा सुहुतं चैतद्धविर्भवतु रात्रिः केतुना अधस्तनेन व्याख्यातम् ॥ २१ ॥
इति श्रीमदुव्वटकृतौ मन्त्रभाष्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टात्रिंशोऽध्यायः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददेऽदित्यै रास्नासि ॥ १ ॥

(१) अथ धर्मधुग्दोहनार्थं रज्जुमादत्ते ॥ देवस्य त्वेति व्याख्यातम् । आददे गृह्णामि । यतस्त्वम् । अदित्यै रास्नासि ॥ १ ॥

का० ( २६, ५, १ ) देवस्य त्वेति रज्जुसन्दानमादायेड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् । अध्वर्युर्देवस्य त्वेति रज्जुसन्दानमादाय गार्हपत्यस्य पश्चाद् गच्छन् इड एहीति वाक्यत्रयेण धर्मदुघां गामाह्वयति असावेहीति गोर्नाम्ना चोच्चैस्त्रिवारमाह्वयतीति सूत्रार्थः ॥ रज्जुदेवत्यं यजुः प्राजापत्या गायत्री । हे रज्जो ! सवितुर्देवस्याज्ञायां वर्त्तमानोऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां त्वामाददे गृह्णामि यतः त्वमदित्यै अदित्या देवमातुः रास्ना रसना मेखलासि भवसि षष्ठ्यर्थे चतुर्थी ॥ १ ॥

इड एहि । अदित एहि । सरस्वत्येहि । असावेहि । असावेहि । असावेहि ॥ २ ॥

(२) गामाह्वयति । इड एहि । अतस्मिंस्तच्छब्दस्तदातिदे-

(१) अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । धर्मधुग्दोहार्थं रज्जुमादत्ते । देवस्य त्वेति व्याख्यातम् । आददे गृह्णामि यतस्त्वमदित्यै रास्नासि ॥ १ ॥

(२) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । गामाह्वयति ईड एहि अदित एहि सरस्वति एहि अतस्मिस्तच्छब्दस्तदातिदेशार्थः । हे इडे मानवि आ इहि आगच्छ । दोहाय अदिते देवमातः एहि सरस्वति वाक् एहि । नाम्ना त्रिरुच्चैरसौ धवलि एहि त्रिः आमन्त्रितस्येत्यादिरुदात्तः ॥ २ ॥

शार्थः । हे इडे मानवि आ इहि आगच्छ दोहाय । हे अदिते देवमातः एहि । हे सरस्वति वाक् एहि असाविति नामग्रहणन्त्रिरुच्चैः असौ धवले एहि । त्रिः । आमन्त्रितस्येत्यादिरुदात्तः॥२॥

हे इडे मानवि ! एहि आगच्छ, हे अदिते देवमातः ! एहि हे सरस्वति वाक् ! एहि । अतस्मिंस्तच्छब्दस्तत्साद्दश्यार्थः । इडा हि गौरादितिर्हि गौः सरस्वती हि गौरिति ( १४, २, १, ७ ) श्रुतेः ॥ नाम्ना त्रिरुच्चैराह्वयति असौ धवलि एहि एवं त्रिः ॥ २ ॥

अदि॑त्यै रास्ना॑सीन्द्राण्या उ॒ष्णीषः॑ । पू॒षासि॑ । घ॒र्माय॑ दीष्व ॥ ३ ॥

(१) अदित्यै रास्नासीति गां पाशेन प्रतिमुञ्चति अदित्यै रास्नासि । इन्द्राण्या उष्णीषः इन्द्राणी इन्द्रस्य पत्नी तस्याः शिरोवेष्टनं त्वमसि ॥ वत्समुत्सृजति । पूषासि । यथा पूषा वायुपुष्टिमाप्याययति । एवं त्वमपि प्रस्रावनेन जगदुत्पत्तिबीजं पय आप्याययसि । वत्समुन्नयति । घर्माय दीष्व । दयसि । रूपदयाकर्मापि यस उपदयां कुरु मा सर्वमुपासीः ॥ ३ ॥

का० ( २६, ५, ३ ) अदित्यै रास्नेति गां पाशेन प्रतिमुच्य स्थूणायां बध्वा पूषासीति वत्समुत्सृजति । आगतां गामदित्या इति मन्त्रेण पाशेन बध्वा तं पाशं स्तम्भे बध्वा पूषासीति वत्सं मुञ्चतीत्यर्थः ॥ हे रज्जुपाश ! त्वमदित्यै रास्ना रसनासि इन्द्राण्या इन्द्रपत्न्याः उष्णीषः शिरोवेष्टनमसि एतेन पाशमिन्द्राण्युष्णीषं करो-

---

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । अदित्यै रास्नेति आगतां गां पाशेन प्रतिमुञ्चति अदित्यै रास्नासीन्द्राण्या उष्णीषः इन्द्राणी इन्द्रस्य प्रिया पत्नी तस्याः उष्णीषः शिरोवेष्टनं त्वमसि । वत्समुत्सृजति पूषासि यथा पूषा वायुः वृष्टिमाप्याययति एवं त्वमपि प्रस्रवनेन जगदुत्पत्तिबीजं पय आप्याययसि वत्समुन्नयति घर्माय दीष्व घर्मार्थे दीष्व दयतिर्दानकर्मा पयस उपशेषं कुरु मा सर्वं पासीः ॥ ३ ॥

तीत्यर्थः तमेवैनमेतत्करोतीति ( १४, २, १, ८ ) श्रुतेः । वत्सं मुञ्चति पूषासि दैव्यनुष्टुप् वत्सो देवता हे वत्स ! त्वं पूषा वायुरसि वायुर्यथा वृष्टिमाप्याययति तथा त्वं प्रस्रवेण पय आप्याययस्वेति भावः अयं वै पूषा योऽयं पवत एष हीद ँ सर्वं पुष्यत्येष उ प्रवर्ग्य इति ( १४, २, १, ९ ) श्रुतेः ॥ का० ( २६, ५, ४ ) सन्दाय घर्माय दीष्वेति वत्समुन्नयति । धेनुं रज्ज्वा पश्चिमपादयोर्बध्वा वत्समपाकरोतीत्यर्थः ॥ दैवी पङ्क्तिः वत्सो देवता हे वत्स ! घर्माय घर्मार्थं दीष्व देहि पयः पयः शेषय मा सर्वं पासीरित्यर्थः दो दाने बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुक् ॥ ३ ॥

अ॒श्विभ्यां॑ पिन्वस्व । सर॑स्वत्यै पिन्वस्व । इन्द्रा॑य पिन्वस्व । स्वाहेन्द्र॑वत् । स्वाहेन्द्र॑वत् । स्वाहेन्द्र॑वत् ॥४॥

(१) पिन्वने दोग्धि । अश्विभ्यां पिन्वस्व । अश्विभ्याम-र्थाय पिन्वस्व प्लावयस्व । एवमेव सरस्वत्यै इन्द्राय च । विप्रुषाभिमन्त्रयते । स्वाहेन्द्रवदिति । यद् दुह्यमानं स्कन्नं तत्सुहुतमस्तु इन्द्रवत् इन्द्रसंयुक्तम् इति त्रिः ॥ ४ ॥

का० ( २६, ५, ५ ) अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि । पिन्वने पात्रे प्रतिमन्त्रं गां दोग्धीत्यर्थः ॥ अश्विभ्यां पिन्वस्व इन्द्राय पिन्वस्व यजुर्गायत्र्यौ सरस्वत्यै पिन्वस्व यजुरनुष्टुप् लिङ्गोक्ता देवताः । हे पयः ! अश्विभ्यामर्थाय त्वं पिन्वस्व संप्लवस्व सरस्वत्यै च पिन्वस्व अश्विनौ वा एतद्यज्ञस्य शिरः प्रत्यधत्तां तावेवैतत् प्रीणातीति श्रुतिः ( १४, २, १, १३ ) सरस्वत्या वाचा कृत्वा इन्द्राय यज्ञशिरोऽश्विभ्यां सहितमिति तयोरर्थे क्षरस्वेति भावः ॥ का० २६, ५, ६ ) स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते । पिन्वनपातितान् पयः

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा पिन्वने दोग्धि अश्विभ्याम् । अश्विभ्यामर्थाय पिन्वस्व संप्लवस्व एवमेव सरस्वत्यै इन्द्राय च विप्रुषोऽभिमन्त्रयते स्वाहा इन्द्रवत् यत् दुह्यमाने स्कन्नं तत् सुहुतमस्तु । इन्द्रसंयुक्तं च ॥ ४ ॥

कणानभिमन्त्रयत इत्यर्थः ॥ यजुर्जगती विष्णुर्वो देवता । यत् दुह्यमाने स्कन्नं तत् स्वाहा सुहुतमस्तु इन्द्रवत् इन्द्रसंयुक्तं चास्तु ॥ ४ ॥

यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः ॥ उर्वन्तरिक्षमन्वेमि ॥ ५ ॥

(१) स्तनमालभते । यस्ते स्तनः । त्रिष्टुब्वाग्देवत्या । वाग्देवी सरस्वतीति श्रुतिः । यः ते तव स्तनः । कथम्भूतः । शशयः । शीङ् स्वप्ने । सुप्त । इवास्ते अनुपभुक्तोऽन्यैः । यश्च मयोभूः मयः सुखम्भावयति सर्वभूतानाम् । यश्च रत्नधाः । रमणीयानां धनानां धारयिता । यश्च वसुवित् वसु विन्दति । यश्च सुदत्रः कल्याणदानः । धनवानपि सन् कश्चिन्नोत्सहते दातुम् । अत एवं विशेष्यते । येन विश्वा । येन च विश्वा विश्वानि पुष्णासि वार्याणि वरणीयानि । हे सरस्वति तं स्तनम् इह । धातवे । धेट् पाने । पानाय । अकः कुरु । गच्छति । उर्वन्तरिक्षमिति व्याख्यातम् ॥ ५ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । स्तनमालभते यस्ते त्रिष्टुप् । वाग्देवत्या वाग्वै सरस्वतीति श्रुतिः यस्ते तव स्तन इव स्तनतः कथम्भूतः शशयः शीङ् स्वप्ने सुप्त इवास्तेऽनुपभुक्तोऽन्यैः यश्च मयोभूः मयः सुखं भावयति सर्वभूतानां यश्च रत्नधाः रमणीयानां धनानां धारयिता यश्च वसुवित् वसु च विन्दति यश्च सुदत्रः कल्याणदानः धनवानपि कश्चिन्नोत्सहते दातुम् अत एवं विशेष्यते येन येन च विश्वा विश्वानि पुष्यसि पुष्णासि वार्याणि वरणीयानि हे सरस्वति तं स्तनम् इह धातवे धेट् पाने पानाय अकः कुरु गच्छति उर्वन्तरिक्षमिति व्याख्यातम् ॥ ५ ॥

का० ( २६, ५, ७ ) यस्ते स्तन इति स्तनमालभते । गोस्तनानालभते जातावेकवचनमित्यर्थः ॥ वाग्देवत्या त्रिष्टुप् दीर्घतमोदृष्टा ! हे सरस्वति ! तं स्तनमिहास्मिन् स्थाने धातवे धेट् पाने तुमर्थे तवेप्रत्ययः पानार्थमकः कुरु मम पानाय प्रयच्छेत्यर्थः लोडर्थे लङ् शपि लुप्त गुणः । तं कम् ? यस्ते तव स्तनः स्तन इव स्तनः शशयः शेते इति शशयः अच्प्रत्यये द्वित्वम् पूर्वस्यात्वं च छान्दसम् सुप्त इवास्ते अन्यैरनुपभुक्तत्वात् यस्ते स्तनो निहितो गुहायामिति ( १४, २, १, १५ ) श्रुतेः । यश्च स्तनो मयोभूः मयः सुखं भावयति प्रापयति सर्वभूतानामिति मयोभूः । यश्च रत्नधाः रत्नानि दधाति रत्नधाः रमणीयानां धनानां धारयिता । यश्च वसुवित् वसु धनं विन्दति वेत्ति वा वसुवित् । यश्च सुदत्रः सुष्ठु ददातीति सुदत्रः दाता धनवानन्यो दातुं न शक्नोति त्वत्स्तनस्तु धनवान् दाता चेति अन्येभ्य आधिक्यम् । किञ्च येन स्तनेन विश्वा विश्वानि सर्वाणि वार्य्याणि वरणीयानि वस्तूनि त्वं पुष्यसि पुष्णासि तं स्तनं मत्पानाय प्रयच्छेत्यर्थः ॥ का० ( २६, ५, ११ ) उपद्रव पयसेत्युच्यमाने गच्छत्युर्वन्तरिक्षमिति । उपद्रवेति मन्त्रे होत्रोच्यमाने उर्विति मन्त्रेणाध्वर्युर्गोसमीपाद् गार्हपत्यं प्रति गच्छतीत्यर्थः ॥ प्राजापत्या गायत्री । विशालमन्तरिक्षमनु एमि गच्छामि ॥ ५ ॥

गायत्रं छन्दोऽसि । त्रैष्टुभं छन्दोऽसि । द्यावापृथिवीभ्यां त्वा परिगृह्णामि । अन्तरिक्षेणोपयच्छामि । इन्द्राश्विना । मधुनः सारघस्य घर्मं पात वसवो यजत वाट् । स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥ ६ ॥

(१) परीशासावादत्ते । गायत्रं छन्दोऽसि त्रैष्टुभं छन्दो-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । परीशासावादत्ते । गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसि ऋजुमहावीरं गृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामि परीशासयोर्द्यौश्च पृथिवी चाध्यास्ते महावीरे चादित्यः उपय-

ऽसि ॥ ऋक्षु महावीरं गृह्णाति । द्यावापृथिवीभ्यां त्वां परिगृह्णामि । परीशासयोः द्यौश्च पृथिवी च अध्यस्ते महावीरे चादित्यः । उपयमन्या उपगृह्णाति । अन्तरिक्षेणोपयच्छामि । अन्तरिक्षेण उपगृह्णामि । उपयमन्या अन्तरिक्षरूपेण संस्तवः । पयसा सिञ्चति ॥ इन्द्राश्विना । हे इन्द्र हे अश्विनौ । मधुनः सारघस्य । सरघा मधुकृतः भ्रमरा इव ऋत्विजः तैः कृतस्य सारघस्य मधुनः घर्मं पात रसं पिबत । हे वसवः वासयितारः। यजत च वाट् वषट्कारेण । स्वाहा सुहुतमस्तु । सूर्यस्य । रश्मये । वृष्टिवनये । वृष्टेः संभक्त्रे दात्रे वा । सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नामेति श्रुतिः ॥ ६ ॥

का० ( २६, ५, १२ ) परीशासावादत्ते गायत्रं छन्दोऽसीति प्रतिमन्त्रम् । गायत्रमिति मन्त्राभ्यां परीशासौ गृह्णातीत्यर्थः ॥ यजुर्गायत्र्यौ परीशासौ देवते । हे परीशास ! त्वं गायत्रं छन्दोऽसि गायत्र्येव गायत्रं स्वार्थेऽण् गायत्रीच्छन्दरूपोऽसि । त्रिष्टुबेव त्रैष्टुभं त्रिष्टुप्छन्दरूपोऽसीति द्वितीयम् ॥ का० ( २६, ५, १४ ) ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामीति । ताभ्यां परीशासाभ्यां महावीरमादत्त इत्यर्थः ॥ यजुर्जगती महावीरो देवता । हे महावीर ! द्यावापृथिवीभ्यां द्युभूमिभ्यां कृत्वा त्वा त्वां परिगृह्णामि परीशासयोर्द्यावाभूमी अध्यस्ते महावीरे चादित्योऽध्यस्तः । तथा च श्रुतिः ( १४, २, १, १६ ) इमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्योऽमुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परि-

मन्या उपगृह्णाति अन्तरिक्षेणोपयच्छामि अन्तरिक्षेणोपगृह्णामि । उपयमन्या अन्तरिक्षरूपेण संस्तवः । पयांसि सिञ्चति इन्द्राश्विनौ हे इन्द्राश्विनौ मधुनः माध्विव मधुसारघस्य वा सारघा मधुकृतः भ्रमरा इव ऋत्विजः ऋत्विग्भिः कृतं सारघं मधु यत्तस्य घर्मं रसं पात पिबत वसवः हे वसवो वासयितारः यजत वाट् वषट्कारेण स्वाहा सुहुतमस्तु सूर्यस्य रश्मये वृष्टिवनये वृष्टेः सम्भक्त्रे दात्रे वा वृष्टेः सूर्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नामेति श्रुतिः ॥ ६ ॥

गृह्णातीति ॥ का० ( २६, ५, १५ ) उद्यम्य मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणोपयच्छामीति । परीसासगृहीतं महावीरमूर्ध्वं कृत्वा मुञ्जकृतवेदेन सम्मार्ज्योपयमन्या स्रुचा तं गृह्णातीत्यर्थः ॥ यजुर्बृहती घर्मो देवता । हे घर्मान्तरिक्षेणाकाशेनोदरेण वा त्वामुपयच्छामि निगृह्णामि उपयमन्यन्तरिक्षत्वेनोदरत्वेन च स्तूयते । तथा च श्रुतिः ( १४, २, १, १७ ) अन्तरिक्षं वा उपयमन्यन्तरिक्षेण हीदᳬ सर्वमुपयतमथो उदरं वा उपयमन्युदरेण हीदᳬ सर्वमन्नाद्यमुपयतं तस्मादाहान्तरिक्षेणोपयच्छामीति ॥ का० ( २६, ५, १६ ) अजापयसावसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति । अजादुग्धे न महावीरं तूर्ष्णीं सिक्त्वा शान्ते क्षीणज्वाले तत्र गोपयः सिञ्चतीत्यर्थः । ब्राह्मी गायत्री विश्वे देवा देवताः । हे इन्द्र ! हे अश्विना अश्विनौ ! हे वसवः वासयितारः ! यूयं मधुनो मधुरस्य पयसो घर्मं रसं पात पिबत पिबादेशाभावश्छान्दसः । कीदृशस्य मधुनः ? सारघस्य सरघा मधुमक्षिका अत्र सरघा मधुकृतो भ्रमरा इव ऋत्विजः तैः कृतं सारघं तस्य । घर्मं पातेति रसं पातेत्येवैतदाहेति ( १४, २, १, २० ) श्रुतिः । किञ्च हे इन्द्रादयः ! वाट् वषट्कारेण स्वाहा सुष्ठु हुतं सारघं मधु सूर्य्यस्य रश्मये किरणाय यूयं यजत दत्त यजतिर्दानार्थः वषट्कृतᳬ हुतमेवमस्यैतद्भवतीति श्रुतेः ( १४, २, १, २० ) किम्भूताय रश्मये ? वृष्टिवनये वृष्टिं वनति ददाति वृष्टिवानिस्तस्मै यो रश्मिर्वृष्टिं दत्ते तस्मै मधु दत्तेत्यर्थः । तथा च श्रुतिः ( १४, २, १, २१ ) सूर्य्यस्य ह वा एको रश्मिर्वृष्टिवनिर्नाम येनेमाः सर्वाः प्रजा बिभर्त्ति तमेवैतत्प्रीणातीति ॥ ६ ॥

समुद्राय त्वा वाताय स्वाहा । सरिराय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा । आशिमिदाय त्वा वाताय स्वाहा ॥७॥

(१) इत उत्तरं द्वादशवातनामानि यजत्यध्वर्युः । समुद्राय

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु०

त्वेति । एतस्माद्वै समुद्रात्सर्वाणि भूतानि समुद्रवन्तीति समुद्रो वातः । समुद्राय त्वां हे प्रवर्ग्य वाताय स्वाहा जुहोमि । इयमेवोत्तरत्रापि योजना । सरिराय । एतस्मात्सरिरात्सर्वाणि भूतानि लब्धकार्याणि सन्ति । सह ईरते गच्छति । अनाधृष्याय अशक्याय आधर्षितुम् । अप्रतिधृष्याय अशक्याय प्रतिधर्षितुम् । अवस्यवे अवनशीलाय । अशिमिदाय । शिमीति कर्मनाम । क्लेशात्मकश्चैतत् अक्लेशदाय ॥ ७ ॥

का० ( २६, ६, १ ) प्रैतु ब्रह्मणस्पतिरित्युच्यमाने समुद्राय त्वेति वातनामानि जपति गच्छन्नाहवनीयम् । प्रैत्विति होत्रोच्यमाने आहवनीयं प्रति गच्छन्नध्वर्युः समुद्रायेत्यादीनि द्वादश वातनामानि स्वरेण जपतीत्यर्थः ॥ द्वादश यजूंषि वातनामदेवत्यानि । हे घर्म ? वाताय त्वा त्वां स्वाहा जुहोमि कीदृशाय वाताय ? समुद्राय समुद्रवन्त्युद्रवन्ति सर्वाणि भूतानि यस्मात् स समुद्रस्तस्मै अयं वै समुद्रो योऽयं पवत एतस्माद्वै समुद्रात् सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति तस्मा एवेनं जुहोतीति ( १४, २, २, २ ) श्रुतेः ॥ सरिराय । सह ईरते गच्छन्ति सर्वभूतानि सिद्धार्थानि यस्मात् सरिरस्तस्मै वाताय घर्म त्वां जुहोमि अयं वै सरिरो योऽयं पवत एतस्माद्वै सरिरात् सर्वे देवाः सर्वाणि भूतानि सहेरत इति(१४,२,२,३) श्रुतेः ॥ अनाधृष्याय । न आधर्षितुं पराभवितुं शक्योऽनाधृष्यः तस्मै । अप्रतिधृष्याय न प्रतिधर्षितुं प्रतियोद्धुं शक्योऽप्रतिधृष्यस्त-

---

नास्ति तद्यथा । इत उत्तरं द्वादशवातनामानि यजत्वध्वर्युः समुद्राय त्वा एतस्माद्वै समुद्रात् सर्वे देवाः सर्वाणि भूतानि समुद्रवन्ति इति समुद्रो वातः समुद्राय त्वा हे प्रवर्ग्य वाताय स्वाहा जुहोमि इयमेव उत्तरत्रापि योजना सरिराय एतस्मात् सरीरात् सर्वाणि भूतानि लब्धकार्याणि सन्ति स हि ईरिते गच्छति अनाधृष्याय अशक्याय आधर्षयितुम् अप्रतिधृष्याय अशक्याय प्रतिधर्षयितुम् अवस्यवे अवनशीलाय अशिमिदाय शिमीति कर्मनाम । क्लेशात्मकं चैतत् । अक्लेशदाय ॥ ७ ॥

स्मै वातायेत्युक्तम् अयं वा अनाधृष्योऽप्रतिधृष्यो योऽयं पवत इति ( १४, २, २, ४ ) श्रुतेः ॥ अवस्यवे । अवो रक्षणमिच्छति अवस्यति अवस्यतीत्यवस्युः सुप आत्मनः क्यच् क्याच्छन्दसीति ( पा० ३, २, १७० ) उप्रत्ययः अवनशीलाय ॥ अशिमिदाय । क्लेशात्मकं कर्म शिमि तन्न ददातीत्यशिमिदस्तस्मै क्लेशानिवर्त्तकाय वाताय अयं वा अवस्युरशिमिदो योऽयं पवत इति (१४, २, २, ५) श्रुतेः ॥७॥

इन्द्राय त्वा वसुमते रुद्रवते स्वाहा । इन्द्राय त्वादित्यवते स्वाहा । इन्द्राय त्वाभिमातिघ्ने स्वाहा । सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहा । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥ ८ ॥

(१) इन्द्राय त्वा । इन्द्राय त्वा वसुमते रुद्रवते स्वाहा । इन्द्राय त्वा आदित्यवते स्वाहा । इन्द्राय त्वा अभिमातिघ्ने । सपत्नो वा अभिमातिः । सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहा । ऋभुर्विभुर्वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुः । तेषामयं संस्तवः । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ॥ ८ ॥

वसवो विद्यन्ते यस्य स वसुमान् रुद्रा विद्यन्ते यस्य रुद्रवान् तस्मै वसुयुताय रुद्रयुतायेन्द्राय वाताय हे घर्म ? त्वां स्वाहा जुहोमि अयं वा इन्द्रो योऽयं पवत इति ( १४, २, २, ६ ) श्रुतेः ॥ आदित्या विद्यन्ते यस्य स आदित्यवान् तस्मै आदित्ययुक्ता-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बइमु०पु० नास्ति तद्यथा । इन्द्राय त्वा वसुमते रुद्रवते स्वाहा । इन्द्राय त्वादित्यवते स्वाहा । इन्द्राय त्वाभिमातिघ्ने स्वाहा । सपत्नो वाभिमातिः । सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहा । ऋभुर्विभुर्वाज इति सुधन्वनः आङ्गिरसस्य त्रयः पुत्राः बभूवुः तेषामयं संस्तवः बृहस्पतये त्वा विश्वदेव्यावते सर्वदेव्यावते स्वाहा ॥ ८ ॥

येन्द्राय वाताय स्वाहा ॥ अभिमातीन् सपत्नान् हन्तीत्यभिमातिहा सपत्नो वा अभिमातिरिति ( १४, २, २, ८ ) श्रुतेः । शत्रुनाशकायेन्द्राय वाताय त्वां जुहोमि ॥ सूते स सविता तस्मै चेष्टयित्रे वाताय त्वां जुहोमि अयं वै सविता योऽयं पवत इति ( १४, २, २, ९ ) श्रुतेः । कीदृशाय ? ऋभुमते ऋभुरस्यास्ति ऋभुमान् विभुरस्यास्ति विभुमान् वाजोऽस्यास्ति वाजवान् आङ्गिरसस्य सुधन्वनस्त्रयः पुत्रा ऋभुविभुवाजास्तद्युक्ताय वाताय ॥ बृहस्पतये बृहतां महतां पतिर्वातस्तस्मै अयं बृहस्पतिर्योऽयं पवत इति ( १४, २, २, १० ) श्रुतेः । कीदृशाय ? विश्वदेव्यावते विश्वेषां देवानां समूहो विश्वदेव्यम् तदस्यास्ति विश्वेदेव्यवान् तस्मै मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मताविति ( पा० ६, ३, १३१ ) दीर्घः सर्वदेवसहिताय जुहोमि ॥८॥

यमाय त्वाङ्गिरस्वते पितृमते स्वाहा । स्वाहा घर्माय । स्वाहा घर्मः पित्रे ॥ ९ ॥

(१) यमाय त्वा । अङ्गिरस्वते पितृमते स्वाहा । उपयमन्या आसिञ्चति । स्वाहा घर्माय सुहुतो घर्माय चैतत्स्यात् । स्वाहा घर्मः सुहुतो घर्मः पित्रे स्यादिति शेषः ॥ ९ ॥

यमाय वायवे हे घर्म ? त्वां जुहोमि अयं वै यमो योऽयं पवत इति ( १४, २, २, ११ ) श्रुतेः । कीदृशाय यमाय ? अङ्गिरस्वते अङ्गिरसो मुनयोऽस्य सन्ति अङ्गिरस्वान् अयस्मयादीनि छन्दसीति ( पा० १, ४, २० ) भसंज्ञायां सस्य विसर्गाभावः पितृमते पितरोऽस्य सन्ति । पितृमान् आङ्गिरः पितृयुताय वातायेत्यर्थः । वातनामानि समाप्तानि । का० ( २६, ६, २ ) स्वाहा घर्मायेत्युपयमन्या सिञ्चति घर्मे । उपयमन्या स्रुचा स्रुक्स्थं घृतं घर्मे सिञ्चतीत्यर्थः । घर्माय स्वाहा एतदाज्यं सुहु-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । यमाय त्वा । अङ्गिरस्वते मितृमते स्वाहा । उपयमन्या सिञ्चति । घर्माय स्वाहा सुहुतं घर्माय तत् स्यात् । एतज्जपति स्वाहा घर्मः सुहुतो घर्मः पित्रे स्यादिति सम्बन्धः ॥ ९ ॥

तमस्तु। का० ( २६, ६, ३ ) स्वाहा घर्मः पित्र इति जपित्वातिक्रम्याश्राव्याह घर्मस्य यजेति। अपसव्यवान् दक्षिणास्यः स्वाहेति मन्त्रं स्वरेण जपित्वा सव्येन जलं स्पृष्ट्वा घर्महस्तोऽतिक्रम्याश्राव्य घर्मस्य यजेत्याहेत्यर्थः। स्वाहा घर्मः पित्रे पित्रर्थायास्तु ॥ ९ ॥

विश्वा आशा दक्षिणसद्विश्वान् देवानयाडिह।
स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥ १० ॥

(१) वषट्कृते जुहोति। विश्वा आशाः। अनुष्टुबाश्विनी। विश्वाः सर्वाः आशाः काष्ठाः। दक्षिणसत्। दक्षिणसद इति वचनव्यत्ययः। दक्षिणासीदन्ति। कस्मात्। यतः विश्वान् सर्वान्देवान् अयाट्। यजतेरेतद्रूपम्। अयाक्षीत् इष्टवान् इह स्थितः। दक्षिणतो हि स्थित आहुतीर्जुहोति। आहुतिश्च यज्ञः। यत एवमतो ब्रवीमि। दक्षिणतोऽग्नेरस्माभिः स्वाहाकृतस्य। वषट्कारानन्तरं स्वाहाकृतस्य घर्मस्य मधोः पिबतम् मध्वास्वादस्य पिबतम् अश्विनौ ॥ १० ॥

का० ( २६, ६, ४, ) वषट्कृते जुहोति विश्वा आशा इति। वषट्कृते सति घर्मं जुहोतीत्यर्थः। अश्विदेवत्यानुष्टुप्। इह यज्ञे दक्षिणसत् दक्षिणस्यां दिशि सीदति तिष्ठति दक्षिणसत् सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः दक्षिणतः स्थितोऽध्वर्युर्विश्वाः सर्वाः आशाः दिशो विश्वान् सर्वान् देवान् च अयाट् अयाक्षीत् यजेर्लुङि च्ले-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा। वषट्कृते जुहोति। विश्वा आशाः। अनुष्टुप् आश्विनी। विश्वाः सर्वाः आशाः कामाः दक्षिणसद इति वचनव्यत्ययः। दक्षिणां सीदन्ति कस्मात् यत विश्वान् सर्वान् देवान् अयाट् यजतेरेतद्रूपम्। अयाक्षीत् यष्टवान् इह स्थितः। दक्षिणतो हि स्थितः आहुतीर्जुहोति। आहुतिश्च यज्ञः यत एवमतो ब्रवीमि दक्षिणतोऽग्नेरस्माभिः। स्वाहाकृतस्य वषट्कारानन्तरं स्वाहाकृतस्य घर्मस्य मधोः मध्वास्वादस्य पिबतम् अश्विना। हे अश्विनौ ॥१०॥

लोपे रूपम् इष्टवान् दक्षिणतः स्थितो ह्याहुर्तीर्जुहोति । अतो ब्रवीमि हे अश्विना अश्विनौ ! स्वाहाकृतस्य वषट्कारानन्तरं हुतस्य मधोर्मधुरास्वादस्य घर्मं युवां पिबतम् कर्मणि षष्ठी ॥ १० ॥

**दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः । स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः ॥ ११ ॥**

(१) त्रिरुत्कम्पयति । दिविधाः । द्युलोके स्थापय इमं यज्ञम् इमं यज्ञं दिविधाः । अभ्यासे भूयांसमर्थं मन्यन्ते । अनुवषट्कृते जुहोति । स्वाहाग्नये यज्ञियाय यज्ञहिताय । शं सुखं च यजुर्भ्यः सकाशात् अस्माकमस्त्विति शेषः । यद्वा शं यजुर्भ्यो देहि ॥ ११ ॥

का० ( २६, ६, ५ ) दिवि धा इति त्रिरुत्कम्पयति । महावीरं त्रिरूर्ध्वं कम्पयति सकृन्मन्त्रेण द्विस्तूष्णीमिति सूत्रार्थः । यजुर्घर्मदेवत्यं सामोष्णिक् ! हे महावीर ! इमं मदीयं यज्ञं त्वं दिवि द्युलोके धाः धेहि स्थापय इमं यज्ञं दिवि धा इति पुनरुक्तिरादरार्था अभ्यासे भूयांसमर्थं मन्यन्त इति ( निरु १०, ४२ ) वचनात् । का० ( २६, ६, ६ ) स्वाहाग्नय इत्यनुवषट्कृते । अनुवषट् स्वाहेति मन्त्रेण घर्मं जुहोतीत्यर्थः । यज्ञियाय यज्ञहितायाग्नये स्वाहा सुहुतमस्तु यजुर्भ्यः सकाशात् अस्माकं शं सुखमस्तु ॥ ११ ॥

**अश्विना घर्मं पातᳬहार्द्वानमहर्दिवाभिरूतिभिः । तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥ १२ ॥**

(१) अत्र वाराणसी॰लि॰पु॰ संमतोऽयं पाठक्रमः मुम्बईमु॰पु॰ नास्ति तद्यथा । दिवि धाः । द्युलोके इमं यज्ञं दिविधाः अभ्यासे भूयांसमर्थं मन्यन्ते अनुवषट्कृते जुहोमि स्वाहाग्नये स्वाहा सुहुतमस्तु अग्नये यज्ञियाय यज्ञहिताय शं सुखं यजुर्भ्यः सकाशात् अस्माकमस्त्विति शेषः । यद्वा शं यजुर्भ्यो देहि ॥ ११ ॥

(१) ब्रह्मानुमन्त्रयते। अश्विना घर्मम्। उष्णिगाश्विनी हेऽश्विनौ घर्मं पातं पिबतम् हार्द्वानम् हृदयस्य प्रियम् हृदयं वा योऽनुवर्त्तते। अहार्दिवाभिः। अहःशब्दः पूर्वाह्नवचनः। दिवाशब्दस्तु सायाह्नवचनः। स हि प्रवर्ग्याय कालः। एतत्कालोपलक्षिताभिः ऊतिभिः अवनैर्निमित्तभूतैः। तन्त्रायिणे नमो द्यावापृथिवीभ्याम्। तन्त्रायिणे। लोके ये प्रसारिताः तन्तवः तुरीशलाकाप्रोताः ते तन्त्रमित्युच्यन्ते। तन्तुनालिरिव सूत्रपूरणाय एति त्रीन् लोकान् स तन्त्रायी आदित्यः तस्मै नमः। उत्तरत्राप्यनुषङ्गः। द्यावापृथिवीभ्याम् नमः अस्तु ॥ १२ ॥

का० ( २६, ६, ७ ) अश्विना घर्ममिति ब्रह्मानुमन्त्रयते। ब्रह्मा घर्ममभिमन्त्रयत इत्यर्थः। स्वराडुष्णिक्। अश्विनावादित्यो द्यावापृथिव्यौ च देवताः। हे अश्विना! अश्विनौ? युवां घर्मं पातं पिबतम। काभिः? ऊतिभिरवनैः निमित्तैः अवनं कृत्वा पिबतमित्यर्थः। कीदृशीभिरूतिभिः? अहर्दिवाभिः अहःशब्देन प्रातःकालः दिवाशब्देन सायंकालः प्रातःसायंकालोपलक्षिताभिः प्रवर्ग्यकालः स एव यतः। कीदृशम् घर्मम? हार्द्वानम् गतिगन्धनयोः ल्युट् हृदि वानं गमनं यस्य स हृद्वानः हृद्वान एव हार्द्वानस्तम् स्वार्थेऽण् हृदयप्रियमित्यर्थः! एवं घर्मपानायाश्विनौ सम्प्रार्थ्य

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा। ब्रह्मानुमन्त्रयते अश्विनौ घर्मम्। उष्णिक् आश्विनी हे अश्विनौ घर्मं पातं पिबतम्। हार्द्वानं हृदयस्य प्रियं हृदयं वा- योऽनुवर्त्तते। अहर्दिवाभिः अहः शब्दः पूर्वाह्नवचनः। दिवाशब्दस्तु सायंवचनः स हि प्रवर्ग्ययागकालः। एतत्कालोपलक्षिताभिः ऊतिभिरवनैः निमित्तभूतैः तन्त्रायिणे नमो द्यावापृथिवीभ्यां तन्त्रायिणे लोके ये प्रसारितास्तन्तवः तुरी शलाका प्रोक्तास्तन्त्रमित्युच्यते तन्तुनालिरिव सूत्रपूर्णाय एति त्रिलोकीमादित्यस्तन्त्रायी। एष हीमांल्लोकांस्तन्त्रमिवानुसंचरतीति श्रुतिः तस्मै नमः। उत्तरत्रानुषङ्गः नमो द्यावापृथिवीभ्याम् ॥ १२ ॥

तस्साहाय्याय सूर्य्यादीन्नमति तन्त्रायिणे नमः तन्यते तन्त्रम् पटरचनाय तुरीशलाकाप्रोतास्तन्तवस्तन्त्रमुच्यते तद्वन्नभासि कालचक्रमपि तन्त्रमुच्यते तथा चाभिधानम् तन्त्रे राष्ट्रे परच्छन्दाप्रधानयोः अगदे कुटुम्बकृत्ये तन्तुवाने परिच्छदे श्रुतिशाखान्तरे शास्त्रे करणे ह्यर्थसाधके इतिकर्त्तव्यतातन्त्वोरिति तन्त्रे कालचक्रे एति निरन्तरं गच्छति तन्त्रायी तस्मै आदित्याय नमोऽस्तु एष वै तन्त्रायी य एष तपत्येष हीमान् लोकाँस्तन्त्रमिवानुसञ्चरतीति (१४, २, २, २२) श्रुतेः। द्यावापृथिवीभ्यामुभाभ्यां लोकाभ्यां तदधिष्ठात्रीभ्यां नमः ॥ १२ ॥

**अपातामश्विना घर्ममनु द्यावापृथिवी अमᳪसाताम् । इहैव रातयः सन्तु ॥ १३ ॥**

( १ ) यजमानोऽनुमन्त्रयते । अपाताम् । आश्विनी ककुप् । अपाताम् पीतवन्तौ अश्विनौ घर्मम् । अनुद्यावापृथिवी अमंसाताम् । तच्च घर्मपानमश्विनोः द्यावापृथिवी अपि अमंसाताम् अनुमतवत्यौ साध्वभूदिति । यत एवमतो ब्रवीमि । इह एव अवस्थितानामस्माकम् रातयः धनानि सन्तु॥१३॥

का० ( २६, ६, ८ ) अपातामिति यजमानः । यजमानः घर्ममभिमन्त्रयत इत्यर्थः । ककुबुष्णिक् अश्विदेवत्या मध्यमपादो द्वादशार्णः आद्यन्तावर्णौ सा ककुप् मध्यमश्चेत् ककुबित्युक्तेः । अश्विना घर्ममपातामपिबतां लुङ् द्यावापृथिवी अन्वमंसातामनुमतवत्यौ साधु कृतमिति अनुमेनाते इत्यर्थः अत एवाश्व्यादिप्रसादात् इहैवास्मद्गृहे स्थितानामस्माकं रातयो धनानि सन्तु इहैव रा-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा ; यजमानोऽनुमन्त्रयते । आपाताम् आश्विनी ककुप् । आपातां पीतवन्तौ अश्विनौ घर्ममनुद्यावापृथिवीम् अमंसाताम् अनुमतवत्यौ तथा घर्ममपातामश्विनौ द्यावापृथिव्यावपि अमंसाताम् अनुमतवत्यौ द्यावापृथिव्यौ साध्वभूदिति । यत एवमतो ब्रवीमि इहावस्थितानामस्माकं रातयो धनानि सन्तु ॥ १३ ॥

तथःसन्त्वितीहैव नो धनानि सन्त्वित्यैवैतदाहेति ( १४, २, २, २१ ) श्रुतेः ॥ १३ ॥

**इषे पिन्वस्व । ऊर्जे पिन्वस्व । ब्रह्मणे पिन्वस्व । क्षत्राय पिन्वस्व । द्यावापृथिवीभ्यां पिन्वस्व धर्मासि सुधर्मे । अमे न्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥ १४ ॥**

( १ ) पिन्वमानमनुमन्त्रयते । इषे पिन्वस्व । वृष्टितर्पणाय विप्रुषो मुञ्च । एवम् ऊर्ज्जे अन्नाय । ब्रह्मणे ब्राह्मणेभ्यः । क्षत्राय क्षत्रियेभ्यः द्यावापृथिवीभ्यां पिन्वस्वेति । उत्क्रामत्युत्तरपूर्वार्द्धम् । धर्मासि सुधर्म । धर्मासि धारणं समस्तस्य जगतोऽस्याहुतिपरिणामद्वारेण । हे सुधर्म साधुधारणशील । खरे सादयति । अमेनि । मिङ् हिंसायाम् । अहिंसन् अक्रुध्यन् । अस्मे अस्मासु । नृम्णानि । नृन्नमयन्तीति नृम्णानि धनानि । धारय स्थापय । ब्रह्म धारय क्षत्रं धारय विशन्धारय । त्रैवर्णिकानस्मासु स्थापय ॥ १४ ॥

का० ( २६, ६, ९ ) इषे पिन्वस्वेति । पिन्वमानमनुमन्त्रयते ।

---

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति तद्यथा । पिन्वमानमनुमन्त्रयते । इषे पिन्वस्व वृष्टितर्पणाय विप्रुषो मुञ्च उर्ज्जे अन्नाय ब्रह्मणे ब्राह्मणेभ्यः क्षत्राय क्षत्रियेभ्यः द्यावापृथिवीभ्यां तर्पणाय पिन्वस्व । उत्क्रामत्युत्तरपूर्वार्द्धं धर्मासि सुधर्म धारणं समस्तस्य जगतोऽसि । आहुतिपरिणामद्वारेण सुधर्म । हे सुधर्म साधुधरणशील खरे सादयति अमेनि । मिङ् हिंसायाम् । अहिंसन् अक्रुध्यन् अस्मे अस्मासु नृम्णानि धनानि नृन् नमयतीति नृम्णं धनं धारय स्थापय ब्रह्म धारय क्षत्रं धारय विशं धारय त्रैवर्णिकान् अस्मासु स्थापय ॥ १४ ॥

पिन्वमानमतितप्तं घर्ममभिमन्त्रयत इत्यर्थः ॥ ऋचां पङ्क्तिः घर्मदेवत्या । हे पिन्वमान घर्म ! इषे वृष्ट्यै पिन्वस्व पुष्टो भव वृष्ट्यर्थम् ऊर्जेऽन्नाय पिन्वस्व अन्नं वर्धय ब्रह्मणे ब्राह्मणेभ्यः पिन्वस्व क्षत्राय क्षत्रियेभ्यः पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ब्राह्मणक्षत्रियद्यावापृथिवीस्तर्पयेत्यर्थः ॥ का० ( २६, ६, १० ) धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम् । ऐशानीं दिशं प्रत्युत्क्रामतीत्यर्थः ॥ यजुर्गायत्री घर्मदेवत्या । हे धर्म ! हे सुधर्म । सुष्ठु धारयतीति सुधर्मः हे साधुधरणशील ! त्वं धर्म असि सर्वजगतो धारणमसि आहुतिपरिणामद्वारेण सर्वं धरसीत्यर्थः ॥ का (२६, ६, ११) अमेन्यस्मे इति खरे करोति । महावीरं खरे आसादयतीत्यर्थः ॥ ऋग्बृहती घर्मदेवत्या । हे धर्म ! अमेनि मिञ् हिंसायां मिनोति हिनस्तीति मेनिः न मेनिरमेनिः सुपां सुलुगिति (पा० ७, १, ३९) सुलोपः अमेनिः अहिंसन् अक्रुध्यन् सन् अस्मे अस्मासु नृम्णानि धनानि धारय स्थापय नृन्नमयतीति नृम्णं अक्रुध्यन्नो धनानि धारयेति ( १४, २, २, ३० ) श्रुतिः ब्रह्म क्षत्रं विशं च धारय विप्रादीनस्मद्वशान् कुर्वित्यर्थः ॥ १४ ॥

**स्वाहा॑ पू॒ष्णे शर॑से । स्वाहा॒ ग्राव॑भ्यः । स्वाहा॑ प्रतिर॒वेभ्यः॑ । स्वाहा॑ पि॒तृभ्य॑ ऊ॒र्ध्वब॑र्हिभ्यो॒ घ॒र्मपा॑वभ्यः। स्वाहा॒ द्यावा॑पृथि॒वीभ्या॑म् । स्वाहा॒ विश्वे॑भ्यो दे॒वेभ्यः॑ ॥ १५ ॥**

( १ ) शकलैर्जुहोति । स्वाहा पूष्णे । अयं वै पूषा योऽयं

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । शाकलैर्जुहोति स्वाहा पूष्णे । अयं वै पूषा योऽयं पवते वायुः । एष हीदं सर्वं पुष्यति एष उ प्राणः प्राणमेवास्मिन् निदधाति इत्येतदुक्तं शरसे अस्ति शरः शब्दः काण्डवचनः । अस्ति च सान्तः । दध्न उपरि स्नेहः प्रकृतिभूतः । शर इति यजमानाः प्राहुः तदभिप्रायेण एतदुच्यते स्वाहा ग्रावभ्यः प्राणेभ्यो विषयग्रहणशीलेभ्यः स्वाहा प्रति रवेभ्यः प्राणाः प्रतिरवाः तान् सर्वं जगत् रमते

पवते । इति वायुः । एष हीदं सर्वं पुष्यति । एष उ प्राणः । प्राणमेवास्मिन्निदधाति । इत्येतदुक्तम् । शरसे । अस्ति शर-शब्दः काण्डवचनः । अस्ति च सान्तः दध्न उपरिस्नेहः शर इति यजमानाः प्राहुः तदभिप्रायेणैतदुच्यते । स्वाहा ग्रावभ्यः प्राणेभ्यः विषयग्रहणशीलेभ्यः । स्वाहा प्रतिरवेभ्यः । प्राणाः प्रतिरवाः तान्प्राप्य सर्वं जगद्रमते । स्वाहा पितृभ्यः उदूर्ध्वब-र्हिर्भ्यः । ऊर्ध्वम्प्रागग्रं बर्हिर्येषां त एवमुच्यन्ते । सोमपा ह्येत इत्यर्थः । घर्मपावभ्यः घर्मपातृभ्यः । स्वाहा द्यावापृथिवीभ्या-म् । प्राणोदानौ वै द्यावापृथिवी । स्वाहा विश्वेभ्यो देवेभ्यः । प्राणो वै विश्वेदेवाः ॥ १९ ॥

का० ( २६, ६, १२ ) विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् । घर्मे नितरामक्त्वा विकङ्कत-शकलैर्घर्माज्यं जुहोति स्वाहा पूष्ण इति प्रतिमन्त्रमित्यर्थः ॥ सप्त लिङ्गोक्तदेवतानि यजूंषि । शरःशब्दो दध्युपरिस्थस्नेहवाचकः अत्र स्नेहमात्रवाची शरसे स्नेहकर्त्रे पूष्णे वाताय प्राणरूपाय स्वाहा सु-हुतमस्तु । अवरꣳ स्वाहाकारं करोति परां देवतामिति(१४,२,२,३२) श्रुतेरादौ स्वाहाकारस्ततो देवतापदानि । अयं वै पूषा योऽयं प-वत एष हीदꣳसर्वं पुष्यत्येष उ प्राणः प्राणमेवास्मिन्नेतद्दधातीति ( १४ , २, २, ३२ ) श्रुतिः ॥ गृह्णन्ति ते ग्रावाणः प्राणा विषयग्रहण-शीलाः तेभ्यः स्वाहा प्राणा वै ग्रावाणः प्राणानेवास्मिन्नेतद्दधाती-ति ( १४, २, २, ३३ ) श्रुतिः ॥ प्रतिरुवन्ति शब्दं कुर्वन्ति प्रतिरवाः प्राणान् हीदꣳ सर्वं प्रतिरतामिति ( १४, २, २, ३४ ) श्रुतिः ॥ का० ( २६, ६, १४ ) चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षि-णतो बर्हिष्युपगूहति । चतुर्थं शकलमहुतमेवोदीचीं पश्यन् वेदेः द-

---

स्वाहा पितृभ्यः उर्ध्ववर्हिर्भ्यः उर्ध्वं प्रागग्रं बर्हिर्येषां ते एवमुच्यन्ते । सोमपा ह्येते इत्यर्थः । घर्मपावभ्यः घर्मपातृभ्यः स्वाहा द्यावापृ-थिवीभ्यां प्राणोदानौ वै द्यावापृथिवी । स्वाहा विश्वेभ्यो देवेभ्यः । प्राणो वै विश्वेदेवाः ॥ १९ ॥

क्षिणभागे आतिथ्यावर्हिषि प्रवेशयतीत्यर्थः ॥ पितृभ्यः स्वाहा । कीदृशेभ्यः ? ऊर्ध्वबर्हिर्भ्यः ऊर्ध्वं प्रागग्रं बर्हिर्येषां ते ऊर्ध्वबर्हिषः तेभ्यः सोमपाभ्य इत्यर्थः तथा घर्मपावभ्यः . घर्मं पिबन्ति घर्मपावानः तेभ्यः स्वाहा ॥ द्यावापृथिवीशब्देन प्राणोदानावुच्येते ताभ्यां सुहुतमस्तु प्राणोदानौ वै द्यावापृथिवी प्राणोद.नावेवास्मिन्नेतद्दधातीति ( १४, २, २, ३६ ) श्रुतिः ॥ विश्वेभ्यो देवेभ्यः स्वाहा प्राणा वै विश्वेदेवाः प्राणानेवास्मिन्नेतद्दधातीति ( १४,२,२,३७)श्रुतिः॥१५॥

स्वाहा॑ रु॒द्राय॑ रु॒द्रहू॑तये । स्वाहा॒ संज्योति॑षा॒ ज्योतिः॑ । अहः॑ के॒तुना॑ जुषता॒ᳪ सु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑ । रात्रिः॑ के॒तुना॑ जुषता॒ᳪ सु॒ज्योति॒र्ज्योति॑षा॒ स्वाहा॑ । मधु॑ हु॒तमिन्द्र॑तमे अ॒ग्नाव॒श्याम॑ ते देव घर्म॒ नमस्ते अस्तु॒ मा मा॑ हिᳪसीः ॥ १६ ॥

( १ ) स्वाहा रुद्राय रुद्रहूतये । रुद्र इति स्तोतृनामसु पठितम् । रुद्रैः स्तोतृभिराहूयते स रुद्रहूतिः । महावीरादुपयमन्यां प्रत्यानयति । स्वाहा सञ्ज्योतिषा ज्योतिः । स्वाहा सङ्गच्छतां ज्योतिषा ज्योतिः । ज्योतिर्वा इतरस्मिन् वायौ भवति । ज्यो-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । स्वाहा रुद्राय रुद्रहूतये । रुद्र इति स्तोतृनामसु पठितम् रुद्रैः स्तोतृभिः य आहूयते स रुद्रहूतिः महावीरादुपयमन्यां प्रत्यानयति स्वाहा संज्योतिषा ज्योतिः स्वाहा संगच्छतां ज्योतिषा ज्योतिः ज्योतिर्वा इतरस्मिन् पयो भवति ज्योतिरितरस्यामिति श्रुतिः अहः केतुना रात्रिः केतुना व्याख्यातम् भक्षयति मधुहुते यस्मात् उत्कटरसं हुतं मधु क इन्द्रतमे इन्द्रियवत्तमे वीर्यवत्तमे अग्नौ तवास्माभिः अतोऽवशिष्टम् अश्याम व्याप्नुयामः भक्षयामः ते तव अंशं हे देव घर्म सर्वथा नमस्तेऽस्तु मा मां हिंसीरित्यात्मनः परित्राणमाह ॥ १६ ॥

तिरितरस्यामिति श्रुतेः । अहः केतुना रात्रिः केतुना इति च व्याख्यातम् । भक्षयति । मधुहुतम् यस्मान्मधु उत्कटरसम् हुतम् । क्व । इन्द्रतमे इन्द्रियवत्तमे वीर्यवत्तमे । अग्नौ तवास्माभिः अत अवशिष्टम् अश्याम व्याप्नुयामः भक्षयामः । ते तवाशम् । हे देव घर्म सर्वथा नमस्ते अस्तु । मा मा हिंसीरित्यात्मनः परित्राणमाह ॥ १३ ॥

का० ( २६, ६, १५ ) सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । मूलाग्रावधि घर्मघृताभ्यक्तं सप्तमं शकलं दक्षिणं पश्यन् प्रतिप्रस्थात्रे ददातीत्यर्थः ॥ रुद्र इति स्तोतृनामसु [ निघ० ३, १६, १२ ] पठितम् । रुद्रैः स्तोतृभिर्हूयते आहूयत इति रुद्रहूतिः तस्मै स्तोतृस्तुताय रुद्राय सुहुतमस्तु ॥ एवं सप्तयजुषां मध्ये चतुर्थसप्तमयोर्विनियोग उक्तः शेषैः पञ्चशकलैराज्यहोमः ॥ का० ( २६, ६, १७ ) स्वाहा संज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम् । घर्मसम्बन्धि घृतमुपयमन्यामासिञ्चति पूर्वं स्रुक्स्थं घर्मे नीतमधुना घर्मस्थं स्रुचि नयतीत्यर्थः ॥ पयोदेवत्यम् यजुरनुष्टुप् । ज्योतिः घर्मस्थं घृतं ज्योतिषोपयमनीस्थेन घृतेन सङ्गच्छताम् स्वाहा सुहुतमस्तु ज्योतिर्वा इतरस्मिन् पयो भवति ज्योतिरितरस्यां ते ह्यतउभे ज्योतिषी सङ्गच्छेते इति (१४,२,२,४० ) श्रुतेः पयो देवता ॥ का० ( २६,६, १८ ) मन्त्रक्रमेणोत्तरꣳ रौहिणं जुहोति । उत्तरं रौहिणं मन्त्रक्रमेण संज्योतिषा ज्योतिरेतन्मन्त्रक्रमेणोऽनन्तरं जुहोतीत्यर्थः ॥ अहः केतुना । व्याख्याते यजुषी ( ३७, २१ ) का० ( २६, ६, २० ) अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति मधु हुतमिति । उपयमन्यामानीतं घर्माज्यमग्निहोत्रहोमप्रकारेण समन्त्रकं हुत्वा वाजिनवदुपहवप्रार्थनपूर्वकं भक्षयन्ति होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीद्यजमानाः ॥ घर्मदेवत्यम् ऋग्बृहती । अग्नौ मधु मधुरं घर्माज्यं हुतमस्माभिः । कीदृशेऽग्नौ ? इन्द्रतमे इन्द्रं वीर्य्यमस्यास्ति इन्द्रवान् अत्यन्तमिन्द्रवानिन्द्रतमः वतुप्रत्यये लोपः वीर्य्यवत्तमे इत्यर्थः । मधु हुतमिन्द्रियवत्तमेऽग्नावित्येवैतदाहेति ( १४ २, २, ४२ ) श्रुतेः । हे घर्म ! हे देव । ते तव हुतशेषमंशं

घयमश्याम भक्षयाम अश्नोतेर्विकरणव्यत्ययेन बहुलं छन्दसीति ( पा० २, ४, ७३ ) शपो लुक् लिङि उत्तमबहुवचने । ते तुभ्यं नमोऽस्तु मा मां हिंसीः आत्मनः परित्राणमर्थ्यते ॥ १६ ॥

**अभीमं महिमा दिवं विप्रो बभूव सप्रथाः । उत श्रवसा पृथिवीᳪ सᳪसीदस्व महाँ २॥ असि रोचस्व देववीतमः । वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ १७ ॥**

( १ ) महावीरमासन्द्यां करोति । अभीमम् गायत्रीबृहत्यौ । नच गायत्र्या अवसानमस्ति । अतिशक्करी वा आग्नेयी अभिबभूव अभिभवति । इमन्दिवं महिमा यस्य तव । कथम्भूतः विप्रः मेधावी । सप्रथाः सर्वतः पृथुः महिम्नो विशेषणद्वयम् । तं त्वां ब्रवीमि उत श्रवसा । अपि च धनेन श्रवणीयेन वा यशसा । पृथिवीम् अभिबभूवेत्यनुषङ्गः । संसीदस्वेति व्याख्यातम् । रोचस्व दीप्यस्वेत्यनर्थान्तरम् ॥ १७ ॥

का० ( २६, ६, २५ ) अभीममिति महावीरम् । प्रचरणीयं घर्ममासन्द्यां करोति मन्त्रेणेतराणि तूष्णीम् ततः शान्तिपाठ इत्यर्थः ॥ गायत्रीबृहत्यौ मध्येऽवसानहीने अभीमं गायत्री संसीदस्व बृहती यद्वावसानत्रयोपेतातिशक्करी षष्ट्यक्षराग्निदेवत्या एकैव ऋक् ऋग्द्वयं वेत्यर्थः । हे अग्ने । तव महिमा इमं दिवमभिबभूव अभिभ-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । महावीरमासन्द्यां करोति अभीमम् गायत्रीबृहत्यौ नच गायत्र्या अवसानमस्ति । अतिशक्करी वा आग्नेयी अभिबभूव अभिभवति इमं दिवं महिमा यस्य तव कथम्भूतः विप्रः मेधावी सप्रथाः सर्वतः पृथूः महिम्नो विशेषणं ते त्वां ब्रवीमि उतापि च श्रवसा धनेन श्रवणीयेन वा यशसा पृथिवीमाभिबभूवेति अनुषङ्गः । संसीदस्वेति व्याख्यातम् रोचस्वेति नार्थान्तरम् ॥ १७ ॥

वति छन्दसि लुङ्लङ्लिटः ( पा० ३. ४, ६ ) दिवशब्दः पुंलिङ्गः अर्धर्चादित्वात् । कीदृशो महिमा ? विप्रः विशेषेण प्राति पूरयति सर्वमिति विप्रो मेधावी । सप्रथाः प्रथनं प्रथो विस्तारस्तेन सहितः सप्रथाः । उतापि च श्रवसा धनेन यशसा वा पृथिवीमभिभवतीत्यनुषङ्गः ॥ संसीदस्वेति पाठेऽत्र रोचस्वेति अर्थ एक एव ॥ १७ ॥

या ते घर्म दि॒व्या शुग्या गा॑य॒त्र्याᳬ ह॑वि॒र्धाने॑ । सा त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तस्मै॑ ते॒ स्वाहा॑ ॥ या ते॑ घर्मा॒न्तरि॑क्षे॒ शुग्या त्रि॒ष्टुभ्याग्नी॑ध्रे । सा त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ॥ या ते॑ घर्म पृ॒थि॒व्याᳬ शुग्या जग॑त्याᳬ सद॒स्या॑ । सा त॒ आप्या॑यतां॒ निष्ट्या॑यतां॒ तस्यै॑ ते॒ स्वाहा॑ ॥ १८ ॥

( १ ) इत उत्तरे उत्सादनमन्त्राः । शालाकेषु जुहोति । या ते तव हे घर्म । दिव्या दिविभवा द्युलोकं प्रविष्टा । शुक् दीप्तिः । या च गायत्र्यां प्रविष्टा । या च हविर्द्धाने प्रविष्टा । सा ते तव आप्यायतां वर्द्धताम् । निष्ट्यायताम् स्त्यै ष्ट्यै शब्दसङ्घातनयोः । निष्ट्याना संहता भवतु । तस्यै शुचे तुभ्यञ्च हे घर्म स्वाहा । या ते अन्तरिक्षे त्रिष्टुभि आग्नीध्रे ।

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति तद्यथा इत उत्तरे उत्सादनमन्त्राः या ते शालाकेषु जुहोति या ते तव हे घर्म दिव्या दिवि भवा दिव्या द्युलोके प्रविष्टा शुक् दीप्तिः या च गायत्र्यां प्रविष्टा या च हविर्द्धाने प्रविष्टा सा ते तव आप्यायतां वर्द्धयतां निष्ट्यायतां ष्ट्यै स्त्यै शब्दसंघातयोः । निष्ट्याना संहता भवतु तस्मै शुचे स्वाहा तस्यै शुचे ते तुभ्यं च हे घर्म स्वाहा या ते अन्तरिक्षे त्रिष्टुभि आग्नीध्रे समानमन्यत् व्याख्यातम् । तेन या ते पृथिव्यां जगत्यां सदस्या सदसि भवा सदसि प्रविष्टा ॥ १८॥

समानमन्यत् याते पृथिव्याम् जगत्याम् । सदस्या सदसि भवा सदस्या । सदसि प्रविष्टा । समानमन्यत् ॥ १८ ॥

का० ( २६, ७, ४ ) चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति प्रतिमन्त्रम् । अध्वर्युराज्यं संस्कृत्य चतुर्गृहीतं कृत्वा तेन जुहोति अग्नीध्रा ध्रियमाणेषु त्रिषु शलाकात्रिकेषु त्रिभिर्मन्त्रैस्तृतीयेनापविध्येत्यर्थः ॥ त्रीणि यजूंषि घर्मदेवत्यानि ऋक्पङ्क्तयः हे घर्म ! या ते तव दिव्या दिवि भवा शुक् दीप्तिः या गायत्र्यां छन्दसि प्रविष्टा या हविर्धाने यज्ञगृहे प्रविष्टा सा ते तव शुक् आप्यायतां वर्धताम् निष्ट्यायतां संहिता दृढा भवतु ष्ट्यै स्त्यै शब्दसंघातयोः लोट् तस्यै शुचे ते तुभ्यं च स्वाहा ॥ हे घर्म ! या ते तवान्तरिक्षे शुक् त्रिष्टुभि छन्दसि अग्नीध्रे सदने च प्राविष्टा सा त इति पूर्ववत् ॥ या ते हे घर्म ! पृथिव्यां शुक् जगत्यां छन्दसि प्रविष्टा । कीदृशी ? सदस्या सदसि प्रविष्टा यज्ञगृहे स्थिता सा त इत्युक्तम् ॥१८॥

क्षत्रस्य॑ त्वा पर॒स्पा॑य ब्रह्म॑णस्त॒न्वं॑ पाहि । वि॒शस्त्वा॒ धर्म॑णा व॒यमनु॑ क्रामाम सुवि॒ताय॒ नव्य॑से ॥ १९ ॥

( १ ) निष्क्रामति । क्षत्रस्य त्वा महावीरोऽभिधीयते बृहत्या । क्षत्रस्य सम्बन्धिनः परस्पाय परस्य पालनाय । हे महावीर अनुक्रामामेति चतुर्थपादे भविष्यति तस्येह सम्बन्धः । अनुक्रामाम । किञ्च ब्रह्मणः तन्वं शरीरं पाहि गोपाय । किञ्च विशः । यज्ञो वै विशः यज्ञस्य धर्मणा धारणेन निमित्त-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । निष्क्रामति क्षत्रस्य त्वा महावीरोऽभिधीयते बृहत्या क्षत्रस्य संबन्धिनः परस्पाय परस्य पालनाय अर्थे त्वां हे महावीर अनुक्रामामेति चतुर्थपादे भविष्यति तस्येह सम्बन्धः किञ्च ब्रह्मणः तन्वं शरीरं पाहि गोपाय । किञ्च विशः यज्ञो वै विशः । यज्ञस्य धर्मणा धारणेन निमित्तभूतेन त्वा त्वां महावीरं वयम् अनुक्रामाम ॥ १९ ॥

भूतेन त्वा त्वाम् हे महावीर वयम् अनुक्रामाम अनुगच्छेम । सुविताय सुगताय सुसूताय वा । नव्यसे नवतराय च कर्मणे अनुक्रामाम ॥ १९ ॥

का० ( २६, ७, ६ ) क्षत्राय त्वेति निष्क्रमणं पुरस्तात् पत्नीमन्तर्धाय । होमानन्तरमध्वर्युः पत्नीमग्रे कृत्वा शालायाः निष्क्रामतीत्यर्थः ॥ उपरिष्टाद् बृहती घर्मदेवत्या । हे घर्म ! वयं त्वा त्वामनुक्रामाम अनुगच्छाम त्वं ब्रह्मणः तन्वं शरीरं पाहि पालय । किमर्थमनुगमनम् ? क्षत्रस्य क्षत्रियस्य देवस्य सूर्य्यस्य परस्पाय पः शब्दोऽव्ययम् पर उत् कृष्टं पायते रक्ष्यते इति परस्पम् तस्मै एतद् वै दैवं क्षत्रं य एष तपतीति ( १४, ३, १, ९ ) श्रुतेः । किञ्च विशः यज्ञस्य धर्मणा धारणेन निमित्तेन वयं त्वामनुक्रामाम यज्ञो वै विड्यज्ञस्य त्वारिष्ट्यै इति । ( १४,३,१,९ ) श्रुतेः । किमर्थम् ? नव्यसे सुविताय नवीयसे नूतनाय सुगताय सुप्रसूताय कर्मणे कर्मसिद्ध्यर्थं त्वामनुगच्छामेत्यर्थः सुष्ठु इतं सुवितम् इण् गतौ क्तः उपसर्गस्योवङादेशः यद्वा पू प्रेरणं सूयते प्रेर्यते सुवितम् इडागमे धातोरुवङ् ॥ १९ ॥

चतुःस्रक्तिर्नाभिर्ऋतस्यं सप्रथाः स नो विश्वायुः सप्रथाः । स नः सर्वायुः सप्रथाः अपद्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिम ॥ २० ॥

( १ ) महावीरं निदधाति । चतुःस्रक्तिः । दिशो महावी-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । महावीरं निदधाति । चतुःस्रक्तिः महाबृहती चतुः स्रक्तिः दिशो महावीरस्य स्रक्तयः कोणा यश्चतुः स्रक्तिः यश्च नाभिर्नहनम् ऋतस्य यज्ञस्य सत्यस्य वा एवं सप्रथाः अभ्यासे भूयांसमर्थं मन्यन्ते इति त्वत्प्रसादाच्च अपद्वेषः अपगच्छतु द्वेषोऽस्मत्तः वीतरागाः स्यामेति अभिप्रायः । अपह्वरः ह्वर ह्वल चलने अपगच्छतु चलनम् अस्मत्तः जनित्वा म्रियते मृत्वा जायते इत्येतच्चलनमभिप्रेतम् । अन्यव्रतस्य सश्चिम अन्यद् व्रतं कर्म यस्य

रस्य स्रक्तयः कोणाः । यः चतुःस्रक्तिः । यश्च नाभिः नहनम् ऋतस्य सत्यस्य वा यज्ञस्य वा । एवं सप्रथाः सर्वतः प्रथुः । सः नः अस्माकम् विश्वायुः सर्वस्यायुषः दाता । सप्रथाः सर्वतश्च प्रथयिता अस्तु । स नः सर्वायुः सप्रथाः । अभ्यासे भूयांसमर्थं मन्यन्ते । तत्प्रसादाच्च । अपद्वेषः । अपगच्छतु द्वेषः अस्मत्तः । वीतरागाः स्यामेत्यभिप्रायः । अपह्वरः । ह्वर ह्वल चलने । अपगच्छतु ह्वरः चलनम् अस्मत्तः । जनित्वा म्रियते मृत्वा जायते इत्येतच्चलनमभिप्रेतम् । अन्यव्रतस्य सश्चिम । अन्यत् व्रतं कर्म यस्य मनुष्यकर्मणः सकाशात् जगदनुग्रहात्मकं यस्य स तथोक्तः । तस्य कर्म वयं सेवामहे सायुज्यं प्राप्ताः सन्तः ॥ २० ॥

का० ( २६, ७, १४ ) नाभिस्पृशं प्रवृञ्जनीयं निदधाति चतुःस्रक्तिरिति । प्रवृञ्जनीयं महावीरमुत्तरवेदौ नाभिलग्नं स्थापयतीत्यर्थः ॥ महाबृहती घर्मदेवत्या । स घर्मो नोऽस्माकं सर्वायुरस्तु सर्वं पूर्णमायुर्यस्मात् स सर्वायुःपूर्णायुः प्रदोऽस्त्वित्यर्थः पुनरुक्तिरादरार्था । कीदृशः सः ? चतुः स्रक्तिः चतस्रः स्रक्तयः कोणा दिग्रूपा यस्य सः एष वै चतुः स्रक्तिर्य एष तपति दिशो ह्येतस्य स्रक्तय इति ( १४, ३, १, १७ ) श्रुतेः । तथा ऋतस्य सत्यस्य यज्ञस्य वा नाभिः नहनं बन्धनस्थानम् । सप्रथाः सविस्तारः । विश्वायुः विश्वस्य जगतः आयुर्यस्मात् जगत आयुर्दाता सप्रथाः सर्वतः प्रथयिता च । हे । घर्म ! त्वत्प्रसादात् द्वेषः अप गच्छत्विति शेषः अस्मत्तो द्वेषः गच्छतु वीतरागाः स्यामेति भावः । ह्वर चलने ह्वरः चलनं जन्ममरणलक्षणं चास्मत्तोऽपगच्छतु ! वयमन्यव्रतस्य सश्चिम अन्यत् मनुष्यकर्मणः सकाशाद्भिन्नं व्रतं कर्म जगदनुग्रहरूपं यस्य सोऽन्यव्रतः परमात्मा तस्य कर्माणि षष्ठी सश्च सेवने धातुः अन्यव्रतं पर-

मनुष्यकर्मणः सकाशात् जगदनुग्रहात्मकं स तथोक्तः । तस्य कर्म वयं सेवामहे सायुज्यं प्राप्ताः सन्तः ॥ २० ॥

मात्मानं सेवामहे सायुज्यं प्राप्तुम इति भावः अन्यद्वा एतस्य व्रतमन्यन्मनुष्याणामिति ( १४, ३, १, ९ ) श्रुतेः ॥ २० ॥

घर्मैतत्ते पुरीषं तेन वर्धस्व चा च प्यायस्व । व-र्धिषीमहि च वयमा च प्यासिषीमहि ॥ २१ ॥

( १ )पयसा पूरयति । घर्मैतत् । अनुष्टुप् । घर्म उच्यते । हे घर्म एतत् पयः ते तव पुरीषम् पूरयितृ । तेन वर्द्धस्वेत्यादि व्याख्यातम् ॥ २१ ॥

का० ( २६, ७, ३२ ) आसेचनवन्ति पयसः पूरयति घर्मैतत्त इति । आसेचनं गर्त्तः तद्युतानि पात्राणि दुग्धेन पूरयति तानि-सप्त महावीरत्रयं द्वे पिन्वने उपयमनी स्रुवश्चेत्यर्थः ॥ अनुष्टुप् घ-र्मदेवत्या । हे घर्म ! एतत्पयः ते तव पुरीषम् पृणाति पूरयति पुरीषं पूरयितृ अन्नम् अन्नं वै पुरीषमन्नमेवास्मिन्नेतद्दधातीति ( १४, ३, १, २३ ) श्रुतेः । तेन पयसा वर्धस्व आप्यायस्व च भ-वत्प्रसादाद् वयं वर्धिषीमहि आप्यासिषीमहि चेति व्याख्या-तम् ( २, १४ ) ॥ २१ ॥

अचिक्रदद् वृषा हरिर्महान्मित्रो न दर्शतः । सᳫं सूर्य्येण दिद्युतदुदधिर्निधिः ॥ २२ ॥

( २ ) परिषिञ्चति । अचिक्रदत् परोष्णिक् । घर्मात्मना-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । पयसा पूरयति । घर्मैतत् । अनुष्टुप् घर्म उच्यते हे घर्म एतत्पयः । तेन च पुरीषं पूरयितृ तेन च बर्द्धस्वेत्यादि व्याख्यातम् ॥२१॥

(२) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । परिषिञ्चति । अचिक्रदत् परोष्णिक् । घर्मात्मना-दित्यः स्तूयते योऽयं महावीरः प्रमृज्यमानः अचिक्रदत् क्रन्दतिः शब्दार्थः पुनः पुनः शब्दमकरोत् वृषा वर्षिता आहुतिपरिणामद्वा-रेण हरिः हरितवर्णः हर्ता वा रसानां महान् प्रभावतः मित्रो न

दित्यः स्तूयते । योऽयं महावीरः प्रवृज्यमानः अचिक्रदत् क्रन्दति: शब्दार्थः । पुनः पुनः शब्दमकरोत् । वृषा वर्षिता आहुतिपरिणामद्वारेण । हरिः हरितवर्णः हर्त्ता वा रसानाम् महान् प्रभावतः । मित्रो न दर्शतः मित्र इव दर्शनीयः । मित्रो हि सर्वस्यैव मित्रम् । संसूर्येण दिद्युतत् । सङ्गत्य सूर्येण सह द्योतते समान इव । उदधिः उदकधारणः । निधिश्च सुखानाम् ॥ २२ ॥

का० ( २६, ७, १२ ) त्रिः परिषिच्याचिक्रददिति । सामगानानन्तरमुत्सादनदेशे परिषिच्य वक्ष्यमाणं करोतीत्यर्थः ॥ परोष्णिक् घर्मदेवत्या । घर्मः सूर्य्यात्मना स्तूयते । वृषा आहुतिद्वारेण वृष्टिकर्त्ता घर्मः प्रवृज्यमानः सन् अचिक्रदत् क्रदि शब्दे पुनः पुनः शब्दमकरोत् । कीदृशः ? हरिः हरितवर्णः रसानां हर्त्ता वा एष वै वृषा हरिर्य एष तपत्येष उ प्रवर्ग्य इति ( १४, ३, १, २६ ) श्रुतिः । महान् प्रभावान् । मित्रो न दर्शतः न उपमार्थः मित्र इव दर्शनीयः अत एव सूर्य्येण सह सदिद्युतत् सूर्यतुल्यो द्योतते द्युतेर्लुङि णिजन्तस्य रूपमडभावः सूर्य्यवत् सर्वं द्योतयतीत्यर्थः उदकं धीयते यस्मिन् जलस्य धर्त्ता निधिः सुखानामिति शेषः सुखनिधिः ॥ २२ ॥

सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रि यस्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ २३ ॥

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ २४ ॥

दर्शतः । मित्र इव दर्शनीयः मित्रो हि सर्वस्यैव सन्मित्रं संसूर्येण दिद्युतत् सङ्गत्य सर्वतः पृथुः स नोऽस्माकं विश्वायुः विश्वस्यायुषो दाता सर्वायुः सर्वस्यायुषो दाता सर्वतश्च प्रथयितास्तु । सूर्येण सह द्योतते समान इव उदधिः उदकधारणः निधिश्च सुखानाम ॥ २२ ॥

एधोऽस्येधिषीमहि । समिदसि तेजोऽसि तेजो मयि धेहि ॥ २५ ॥

( १ ) सुमित्रिया न उद्वयमेधोऽसीति व्याख्यातास्त्रयो मन्त्राः ॥ २३ ॥ २४ ॥ २५ ॥

का० ( २६, ७, ३७ ) चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न इति । सपत्नीकाः ऋत्विग्यजमानाः चात्वाले मार्जनं कुर्वते । पत्न्या अपि मन्त्रपाठः ॥ व्याख्याता ( ६, २२ । २०, १९ । ३५, १२ । ३६, २३ ) ॥ २३ ॥

का० ( २६, ७, ३८ ) उद्वयमित्युत्क्रामत्युत्तरपूर्वार्धम् । ऐशानीं दिशं प्रति यजमानो गच्छतीत्यर्थः ॥ व्याख्याता ( २०, २१ । २७, १० । ३५, १४ ) ॥ २४ ॥

का० ( २६, ७, ३९ ) अनपेक्षमेत्यैधोऽसीति समिधमादायाहवनीयेऽभ्यादधाति समिदसीति । यजमानः पश्चादनवलोकयन्नीशानदेशादेत्यैधोऽसीति मन्त्रेणैकां समिधं गृहीत्वा समिदसीति मन्त्रेणाहवनीये दधातीत्यर्थः ॥ मन्त्रद्वयं व्याख्यातम् ( २०, २३ )॥२५॥

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे । तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् ॥ २६ ॥

( २ ) दधिघर्मग्रहणम् । यावती द्यावापृथिवी । महाबृहती

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । सुमित्रिया न उदुद्वयम् एधोऽसीति व्याख्यातास्त्रयो मन्त्राः ॥ २३ ॥ २४ ॥ २५ ॥

(२) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । दधिघर्मग्रहणम् । यावती द्यावापृथिवी बृहती ऐन्द्री यावती यावत्परिमाणे द्यावापृथिव्यौ यावच्च क्षेत्रं सप्त सिन्धवः सप्त समुद्राः वितस्थिरे आप्नुवन्ति तावन्तं हे इन्द्र ते तव ग्रहम्

ऐन्द्री यावती यावत्परिमाणे द्यावापृथिव्यौ । यावच्च क्षेत्रम् सप्त सिन्धवः सप्त समुद्राः वितस्थिरे आप्नुवन्ति । तावन्तम् हे इन्द्र ते तव ग्रहम् उर्ज्जा अन्नेन सह गृह्णामि । अक्षितमनुपक्षीणम् । गृह्णामि । मयीत्यधिकरणनिर्देशः । विज्ञानायेति शेषः । गृह्णामीत्यादि व्याख्यातम् ॥ २६ ॥

का० ( २६, ७, ५४ ) यावती द्यावापृथिवी इति दधिघर्मग्रहणम् । सपवित्रायामग्निहोत्रहवण्यां दधिघर्मं गृह्णातीत्यर्थः ब्राह्मी उष्णिक् दधिघर्मदेवत्या इन्द्रदेवत्या च । हे इन्द्र ! ऊर्जा अन्नेन सह अक्षितमनुपक्षीणं ते तव ग्रहं तावन्तं तत्परिमाणमहं गृह्णामि मयि च अक्षितं यथा स्यात्तथा गृह्णामि तव ग्रहग्रहणेन मयि यज्ञक्षयो मास्त्वित्यर्थः । तावन्तं कियन्तम् द्यावापृथिवी यावती द्यावाभूमी यत्परिमाणे च पुनः सप्त सिन्धवः सप्त समुद्राः क्षीरोदाद्याः यावत् यत्परिमाणे देशे वितस्थिरे विशेषेण स्थिताः तावन्तमतिमहत्तरं दधिघर्मं गृह्णामीत्यर्थः ॥ २६ ॥

मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः । घर्मस्त्रिशुग्विराजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह ॥ २७ ॥

( १ ) भक्षयति । मयि त्यत् । पङ्क्तिः । यजमानाशीः ।

---

ऊर्ज्जा अन्नेन सह गृह्णामि अक्षितम् अनुपक्षीणं मयि गृह्णाति मयीत्यधिकरणनिर्देशो विज्ञानाय विशेषः गृह्णामीति व्याख्यातम् ॥२६॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । भक्षयति मयि त्यत् । पङ्क्तिः यजमानाशीः मयि त्यत् तत् इन्द्रियं वीर्यं बृहत् अस्तु मयि च दक्षः सङ्कल्पः सम्पत्तिः अस्तु मयि च क्रतुः सङ्कल्पः विशिष्टोऽस्तु मयि च घर्मस्त्रिशुक् तिस्रः शुचोऽस्येति त्रिशुक् ताश्च व्याख्याताः शालाकमन्त्रेषु विराजति विराजत्विति लकारव्यत्ययः विराजा आदित्याख्येन ज्योतिषा सह ब्रह्मणा अग्न्याख्येन तेजसा सह ॥ २७ ॥

मयि त्यत् तत् इन्द्रियं । वीर्यम् । बृहत् । अस्तु । मयि च दक्षः सङ्कल्पसम्पत्तिः अस्तु । मयि च क्रतुः सङ्कल्पः विशिष्टोऽस्तुः । मयि च घर्मः त्रिशुक् । तिस्रः शुचोऽस्येति त्रिशुक् । ताश्च व्याख्याताः शाकलमन्त्रेषु । विराजति विराजत्विति लकारव्यत्ययः । विराजा आदित्याख्येन ज्योतिषा सह । ब्रह्मणा त्रय्याख्येन तेजसा सह ॥ २७ ॥

का० ( २६, ७, ५५ ) मयि त्यदिति भक्षणम् । हुतशेषं दधिघर्मं यजमानर्त्विजः सोपहवं भक्षयन्तीत्यर्थः ॥ पङ्क्तिः अष्टाक्षरपञ्चपादा दधिघर्मदेवत्या यजमानाशीर्देवतेति केचित् । बृहत् महत् त्यत् तत् इन्द्रियं प्रसिद्धं वीर्यं मयि विराजति विराजतु लकारव्यत्ययः । दक्षः संकल्पसिद्धिः मयि विराजतु । क्रतुः सत्संकल्पो मयि विराजतु । विशेषेण राजते विराट् तेन जगत्प्रसिद्धेन ज्योतिषा तेजसा आदित्याख्येन सह ब्रह्मणा त्रयीलक्षणेन ज्योतिषा च सह घर्मो मयि विराजतु । कीदृशो घर्मः ? त्रिशुक् तिस्रः शुचः दीप्तयो यस्य सः तास्तिस्रः शुचो या ते घर्म दिव्या शुगित्यष्टादश्यां कण्डिकायां शाकलमन्त्रे व्याख्याताः ॥ २७ ॥

पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तराᳬ समाम् । त्विषः संवृक् क्रत्वे दक्षस्य ते सुषुम्णस्य ते सुषुम्णाग्निहुतः । इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमत उपहूत उपहूतस्य भक्षयामि ॥ २८ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायाम् अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

(१)किञ्च । पयसो रेतः । पयसः यत् रेतः जगदुत्पत्तिबी-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु०

जम् । आभृतमाहृतम् । यस्य दोहं प्रपूरणम् । अशीमहि व्याप्नुयाम । उत्तरामुत्तरां समाम् । उत्तरामुत्तरामिति वीप्सावचनम् । समाशब्दः संवत्सरवचनः । प्रतिसंवत्सरं च अशीमहि । सदाकालं यायजूकाः स्यामेत्यर्थः । त्विषः संवृक् । महाव्रतीये भक्षणं दधिघर्मस्य । यस्त्वम् । त्विषः । दीप्तेः संवृक् । संपूर्वो वृजिः स्वीकरणे वर्त्तते । दीप्तेः स्वीकरणः । तस्य तव । क्रत्वे क्रत्वोरिति विभक्तिव्यत्ययः । साधुक्रतुभूतस्य । दक्षस्य । सङ्कल्पसिद्धिभूतस्य च । सुषुम्णस्य साधुसुखभूतस्य । हे सुषुम्ण । सुसुखस्वभाव । ते सुषुम्णाग्निहुतः । षष्ठ्यन्तमेतत् । अग्नौ हूयत इत्यग्निहुत् तस्याग्निहुतः । अपि च इन्द्रपीतस्य प्रजापतिभक्षितस्य । मधुमतः रसवतः उपहूतः उपहूतस्य ग्रहस्य भक्षयामि ॥ २८ ॥

इति उव्वटकृतौ मन्त्रभाष्येऽष्टात्रिंशत्तमोऽध्यायः ॥ ३८ ॥

---

नास्ति । तद्यथा । किञ्च पयसः यत् रेतः जगदुत्पत्तिबीजम् आभृतम् आहृतं तस्य दोहं प्रपूरणम् अशीमहि व्याप्नुयाम उत्तरामुत्तरामिति वीप्सावचनं समाशब्दः संवत्सरवचनः प्रतिसंवत्सरं चाशीमहि सदाकालं यायजूकाः स्यामेत्यर्थः त्विषः संवृक् महाव्रतीये भक्षणं दधिघर्मस्य यस्त्वं त्विषा दीप्तेः संवृक् सम्पूर्वो वृजिः स्वीकरणे वर्तते । दीप्तेः स्वीकरणः तस्य तव क्रत्वे क्रत्वोरिति साधुक्रतुभक्तस्य दक्षस्य सङ्कल्पसिद्धिभूतस्य सुषुम्नस्य सुखभूतस्य हे सुषुम्ना हे सुखस्वभाव अग्निहुतः षष्ठ्यन्तमेतत् अग्नौ हूयते इत्यग्निहुत् तस्याग्निहुतः अपि च इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमतो रसवतः उपहूतः उपहूतस्य ग्रहस्य भक्षयामि ॥ २८ ॥

इत्युव्वटकृतौ मन्त्रभाष्येऽष्टात्रिंशत्तमोऽध्यायः ॥३८॥

गायत्र्यवसानहीना । दधिघर्मभक्षणे एवं विनियुक्ता । पयसो रेतो वीर्यं सारं जगदुत्पत्तिबीजं यत् आभृतमाहृतम् दधिघर्मरूपं यत् तस्य दोहं प्रपूरणं वयमुत्तरामुत्तरां समामुत्तरोत्तरमस्मिन् वर्षे अशीमहि व्याप्नुयाम कालाध्वनोरिति ( पा० २, ३, ५ ) द्वितीया वयं सर्वदा यायजूकाः स्यामेत्यर्थः ॥ का० ( २६, ७, ५६ ) त्विषः संवृगिति महाव्रतीये । महाव्रतीयेऽहनि त्विष इति मन्त्रेण हुतशेषदधिघर्मभक्षणं कार्य्यमित्यर्थः । अतिजगती दधिघर्मदेवत्या । संवृणक्ति स्वीकरोतीति संवृक् स्वीकर्त्ता सम्पूर्वो वृजिः स्वीकरणार्थः हे त्विषः संवृक् कान्तेः स्वीकर्तः । हे सुषुमृण ! शोभनं सुम्नं सुख यस्मात् सुषुमृणः तत्सम्बोधनम् हे सुखदातः । हे दधिघर्म । अहमुपहूतः कृतोपहवः सन् ते तवांशं भक्षयामि कर्मणि षष्ठी वा त्वां भक्षयामि एकस्तेशब्दः पादपूरणः । कीदृशस्य ते ? क्रत्वे दक्षस्य चतुर्थी षष्ठ्यर्थे क्रतोः संकल्पस्य दक्षः सिद्धिदाता तस्य सङ्कल्पसिद्धिदातुः क्रतुशब्दस्य चतुर्थ्येकवचने गुणाभाव आर्षः । तथा सुषुमृणस्य शोभनसुखभूतस्य । अग्निहुतः अग्नौ हूयत इत्यग्निहुत् तस्य अग्नौ हुतस्य । इन्द्रपीतस्य इन्द्रेण पीतो भक्षितस्तस्य । प्रजापतिभक्षितस्य प्रजापतिना भक्षितस्य । मधुमतः मधुरस्वादोपेतस्य । उपहूतस्य कृतोपहवस्य । एवंविधस्य तवांशं हे दधिघर्माहं भक्षयामीत्यर्थः ॥ समाप्ता घर्मेतिकर्त्तव्यता ॥ २८ ॥

श्रीमन्महीधरकृते वेददीपे निरूपितः ।
अष्टात्रिंशोऽयमध्यायो महावीरनिरूपणः ॥ ३८ ॥



## ऊनचत्वारिंशोऽध्यायः ।

स्वाहा प्राणेभ्यः साधिपतिकेभ्यः । पृथिव्यै स्वाहा । अग्नये स्वाहा । अन्तरिक्षाय स्वाहा । वायवे स्वाहा । दिवे स्वाहा। सूर्याय स्वाहा ॥ १ ॥

दिग्भ्यः स्वाहा । चन्द्राय स्वाहा । नक्षत्रेभ्यः स्वाहा । अद्भ्यः स्वाहा । वरुणाय स्वाहा । नाभ्यै स्वाहा । पूताय स्वाहा ॥ २ ॥

वाचे स्वाहा । प्राणाय स्वाहा । प्राणाय स्वाहा । चक्षुषे स्वाहा । चक्षुषे स्वाहा । श्रोत्राय स्वाहा । श्रोत्राय स्वाहा ॥ ३ ॥

(१)इत उत्तरं प्रवर्ग्यभेदं प्रायश्चित्तम् स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति पूर्णाहुतिं यावत् । जुहोति । स्वाहा प्राणेभ्यः । मनो वै प्राणानामधिपतिः । सुहुतमस्तु । प्राणेभ्यः मनसा सहितेभ्यः । पृथिव्यै स्वाहेत्यादि स्पष्टम् ॥ १ ॥ २ ॥ ३ ॥

प्रवर्ग्ये घर्मभेदे प्रायश्चित्तम् । तत्र का० ( २६, ७, ४९ ) स्वाहा प्राणेभ्यः साधिपतिकेभ्यः इति पूर्णाहुतिमाद्यामुत्तमाञ्च मनसः काममाकूतिमिति । तदर्थोऽयम् अध्वर्युः भूमिर्भूमिम् य ऋतेचिदिति

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । इत उत्तरं प्रवर्ग्यभेदप्रायश्चितं स्वाहा प्राणेभ्यः साधिपतिकेभ्यः इति पूर्णाहुतिं यावत् मनो वै प्राणानामधिपतिः स्वाहा सुहुतमस्तु प्राणेभ्यो मनसा सहितेभ्यः । पृथिव्यै स्वाहेत्यादि स्पष्टम् ॥ १ ॥ २ ॥ ३ ॥

मन्त्राभ्यां भग्नं घर्ममभिमृश्य परमेष्ठ्यादिचतुस्त्रिंशदाहुतीर्हुत्वा-स्वाहा प्राणेभ्य इत्याद्यां पूर्णाहुतिं । हुत्वा पृथिव्यै स्वाहेत्याहुतीर्विंशतिं सकृद्गृहीतेन हुत्वा मनस इत्यन्त्याः पूर्णाहुतिं करोतीति ॥ मन्त्रार्थो यथा । साधिपतिकेभ्यः अधिपतिना हिरण्यगर्भेण सह वर्त्तमानेभ्यः प्राणेभ्यः स्वाहा सुहुतमस्तु इति पूर्णाहुतिमन्त्रः । ततो विंशतिः स्पष्टा मन्त्राः पृथिव्यै सुहुतमस्तु । एवमग्रेऽपि अग्नये अन्तरिक्षाय वायवे दिवे सूर्य्याय ॥ १ ॥

दिग्भ्यः चन्द्राय नक्षत्रेभ्यः अद्भ्यः वरुणाय नाभ्यै देवतायै पूताय शोधकाय पुनाति पूतः देवस्तस्मै ॥ २ ॥

वाचे वागधिष्ठात्रे एवमग्रेऽपि । प्राणाय प्राणेन्द्रियाधिष्ठात्रे प्राणादीनां द्वित्वान्मन्त्रावृत्तिः । चक्षुषे तदधिष्ठात्रे । श्रोत्राय ॥ ३ ॥

**मनसः काममाकूतिं वाचः सत्यमशीय । पशूनाᳬं रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ ४ ॥**

(१)मनसः कामम् । पूर्णाहुतिहोमः । अनुष्टुप् श्रीदेवत्या यजमानाशीः । मनसः कामं कामप्राप्तिः । आकूतिम् आकूतनम् । आत्मनो धर्मो मनसः संयोगे सति जायते । वाचःसत्यम् । यद्व्यं मयेत्यादि । अशीय । प्राप्नुयाम् । अनया पूर्णाहुत्या । किं च । पशूनां रूपं पशूपकारः । अन्नस्य रसः । यशश्च । श्रयताम् आश्रयन्तु । मयि । मामिति विभक्तिव्यत्ययो

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । मनसः कामम् । अनुष्टुप् पूर्णाहुतिहोमः । यजमानाशीः श्रीदेवता मनसः कामं कामप्राप्तिम् अकूतिम् आकूतम् आत्मनो धर्मो मनःसंयोगे सति जायते वाचः सत्यं यद्व्यं मयेत्यादि अशीय व्याप्नुयाम् अनया पूर्णाहुत्या किञ्च पशूनां रूपं पशूपकारः अन्नस्य रसः यशश्च श्रीः श्रयताम् आश्रयन्तु मयि मामिति विभक्तिव्यत्ययः । यन्महावीरभेदेनापचितं तत्सर्वमुपचीयतामित्यर्थः ॥४॥

या । यन्महावीरभेदनेनापचितं तत्सर्वमुपचीयतामित्यर्थः ॥ ४ ॥

द्वितीयः पूर्णाहुतिमन्त्रः । अहं मनसः काममभिलाषम् आकुञ्चनमाकूतिः प्रयत्नस्तं चाशीय प्राप्नुयाम् वाचः सत्यं चाशीय यद्वाक् सत्यं वदतु । मयि एतत्सर्वं श्रयतां तिष्ठतु पशूनां रूपं पशुसम्बन्धिनी शोभा अन्नस्य रसः स्वादुत्वम् यशः कीर्त्तिः श्रीर्लक्ष्मीश्च ॥ ४ ॥

प्रजापतिः सम्भ्रियमाणः सम्राट् सम्भृतो वैश्वदेवः संसन्नो घर्मः प्रवृक्तस्तेज उद्यत आश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् । मैत्रः शरसि सन्ताय्यमाने वायव्यो ह्रियमाण आग्नेयो हूयमानो वाग्घुतः ॥ ५ ॥

(१) प्रजापतिः संभ्रियमाण इति महावीरावस्थानप्रतिपादिका श्रुतिः ॥ ५ ॥

का० ( २६, ७, ५० ) प्रजापतिः सम्भ्रियमाण इति यथाकालमिति । सम्भ्रियमाणाद्यवस्थायां महावीरभेदे प्रजापतये स्वाहेत्याद्या यथाकालमाहुतयो होतव्या इति सूत्रार्थः ॥ तद्यथा मन्त्रो दर्शयति सम्भ्रियमाणो महावीरो यदि भिद्यते तदा प्रायश्चित्तहोमे प्रजापतिर्देवता प्रजापतये स्वाहेति प्रायश्चित्ताहुतिर्होतव्येत्यर्थः प्रजापतिः सम्भ्रियमाणो यथाकालं प्रायश्चित्तदेवतेत्युक्तत्वात् ( अनुक्रम० ४, ८ ) ॥ निष्ठिताभिमर्शनादारभ्याजापयोऽवसेचनान्तं सम्भ्रियमाणः ॥ सम्राट् सम्भृतः । पयोऽवसेकानन्तरं कुशासादनात् प्राक् सम्भृत इत्युच्यते तत्र भेदे सम्राट् प्रायश्चित्तदेवता सम्राजे स्वाहेति ॥ वैश्वदेवः संसन्नः । आसादनादारभ्य मुञ्जप्रलवेष्वाधि-

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । प्रजापतिः । संभ्रियमाणः इति महावीरावस्थाप्रतिपादिका श्रुतिः ॥ ५ ॥

श्रयणात् प्राक् संसन्नः तत्र भेदे विश्वदेवदैवतः विश्वेभ्यो देवेभ्यः स्वाहेति ॥ घर्मः प्रवृक्तः । अधिश्रयणादारभ्य परिशासाभ्यां ग्रहणात् प्राक् प्रवृक्तः प्रवृज्यत इति तत्र भेदे घर्माय स्वाहेति ॥ तेज उद्यतः । उद्यम्यत इत्युद्यतः उद्यमनादारभ्य प्रागजापयोऽवसेकादुद्यतः तत्र भेदे तेजसे स्वाहेति ॥ आश्विनः पयस्यानीयमाने । अजापयस्यासिच्यमाने घर्मभेदे आश्विनः अश्विदेवत्यो घर्मः अश्विभ्यां स्वाहेति जुहोति ॥ पौष्णा विष्यन्दमाने स्यन्दू स्रवणे विशेषेण स्यन्दमाने घृते बहिर्निःसरति सति भेदे घर्मः पौष्णः पूषदेवत्यः पूष्णे स्वाहेति जुहोति ॥ मारुतः क्लथन् । क्लथनं मध्ये घृतस्यावर्त्तनम् तदा मरुद्देवत्यः तत्र भेदे मरुद्भ्यः स्वाहेति जुहोति ॥ मैत्रः शरसि सन्ताय्यमाने । पयोऽवसेके योपरि तरिका जायते सा शरः शब्देनोच्यते तस्मिन् सन्ताय्यमाने पच्यमाने मैत्रो मित्रदेवत्यः तायृ पालनसन्तत्योः कर्मणि यकि शानचि रूपम् तत्र शरआदिहरणात् प्राक् भेदे मित्राय स्वाहेति जुहोति ॥ वायव्यो ह्रियमाणः । आहवनीयं ह्रियमाणो होमात् प्राक् वायुदेवतः तत्र भेदे वायवे स्वाहेति जुहोति ॥ आग्नेयो हूयमानः । हूयमानो घर्मोऽग्निदैवतः तत्र तद्भेदे अग्नये स्वाहेति जुहोति ॥ वाग्घुतः । हुतो हुतहोमादूर्ध्वं प्रागुत्तरघर्मारम्भात् वाक् वाग्देवतः तत्र भेदे वाचे स्वाहेति जुहोति ॥ एता आहुतयः सकृद्गृहीताज्यैः ॥ ५ ॥

**स॒वि॒ता प्र॑थ॒मेऽह॑न्न॒ग्निर्द्वि॒तीये॑ वा॒युस्तृ॒तीय॑ आ॒दि॒त्यश्च॑तु॒र्थे च॒न्द्रमाः॑ पञ्च॒म ऋ॒तुः ष॒ष्ठे म॒रुतः॑ सप्त॒मे बृह॒स्पति॑रष्ट॒मे । मि॒त्रो न॑व॒मे वरु॑णो दश॒म इन्द्र॑ एकाद॒शे विश्वे॑ दे॒वा द्वा॑द॒शे ॥ ६ ॥**

(१) सविता प्रथमेऽहन्नित्याह । देवतासबन्धविधाना श्रु-

---

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । सविता प्रथमेऽहन्नित्यहर्देवतासंबन्धविधानात् श्रुतिः । महावीरप्रायश्चित्तानि समाप्तानि ॥ ६ ॥

तिः । महावीरप्रायश्चित्तानि समाप्तानि ॥ ६ ॥

का० ( २६, ७, ५१ ) सविता प्रथमेऽहन्निति च प्रत्यहमिति । प्रथमे अहन् दिने घर्मभेदे सविता देवता सवित्रे स्वाहेति जुहोति ॥ एवमग्रेऽपि । अग्निर्द्वितीये द्वितीयेऽहनि घर्मभेदेऽग्निर्देवता । वायुस्तृतीये तृतीयेऽहनि वायुर्देवता । चतुर्थे आदित्यो देवता । चन्द्रमाः पञ्चमेऽह्नि । ऋतुः षष्ठेऽह्नि । मरुतः सप्तमेऽह्नि । बृहस्पतिरष्टमेऽह्नि । मित्रो नवमेऽह्नि । वरुणो दशमेऽह्नि । इन्द्र एकादशेऽह्नि । विश्वे देवाः द्वादशेऽह्नि देवता तत्र भेदे विश्वेभ्यो देवभ्यः स्वाहेति जुहोति । उपसत्प्रवृद्धौ एता एवाहुतयः पुनरादित आरभ्यावर्त्यन्ते ॥ ६ ॥

**उ॒ग्रश्च॑ भी॒मश्च॒ ध्वा॒न्तश्च॒ धुनि॑श्च । सा॒स॒ह्वाँश्चा॑भि॒युग्वा च॑ वि॒क्षिपः॒ स्वाहा॑ ॥ ७ ॥**

(१) उग्रश्च । अग्निकण्डिका । अरण्यध्ययनसामान्यादिह पाठः । मारुती गायत्री विमुखाख्या । भीमश्च ध्वान्तश्च धुनिश्च । सासह्वांश्च । अभियुग्वा च । विक्षिपश्च । अत्रापि चकारः समुच्चयार्थीयः । एवं सप्त मरुतः ॥ ७ ॥

का० ( १८, ४, २४ ) विमुखेनारण्येऽनूच्यमिति । चयने मारुतान् षट् पुरोडाशान् शुक्रज्योतिश्चेत्यादिषण्मारुतमन्त्रैः ( १७, ८०—८५ ) हुत्वारण्येऽनूच्यसंज्ञं सप्तमं पुरोडाशं विमुखसंज्ञेनोग्रश्चेति मन्त्रेण जुहुयात् तथाचानुक्रमणी ( ४, ८ ) उग्रश्च मारुती गायत्री विमुखाख्यो मन्त्रोऽग्नौ विनियुक्तस्तस्मादाग्निक एवास्यर्षिः परमेष्ठी प्राजापत्यो वेति । आग्निकः प्रजापतिर्ऋषिः । अस्य मन्त्रस्यात्र

(१) अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तथ्या । उग्रश्च अग्निकण्डिका आरण्याध्ययनत्वसामान्यादिह पाठः । मारुती गायत्री विमुखाख्याः उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च सासह्वांश्चाभियुग्वा च विक्षिपः अत्रापि चकारः समुच्चयार्थीयः । एवं सप्त मरुतः ॥ ७ ॥

पाठोऽरण्ये पाठयोग्यत्वात् ॥ अथ मन्त्रार्थः य एते उग्रादिनामकाः सप्त मरुतः तेभ्यः स्वाहा सुहुतमस्तु । उग्रः उत्कृष्टः । बिभेत्यस्मादसौ भीमः । ध्वनति शब्दं करोतीति ध्वान्तः । धूनयति कम्पयति शत्रूनिति धुनिः । सहते शत्रूनभिभवति सासह्वान् सहतेः क्वसुश्चेति ( पा० ३, २, १०७ ) क्वसुप्रत्ययः संहितायामभ्यासदीर्घश्छान्दसः । अभियुनक्ति अस्मत्सम्मुखं योगं प्राप्नोतीत्यभियुग्वा अन्येऽभ्योऽपि दृश्यन्ते इति ( पा० ३, २, ७५ ) युजेः क्वनिप्प्रत्ययः विक्षिपः विविधं क्षिपति रिपूनिति विक्षिपः इगुपधेति ( पा० ३, १, १३५ ) कप्रत्ययः ॥ ७ ॥

अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना । शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥ ८ ॥

(१) अग्निं हृदयेन । आश्वमेधिकम् आ अध्यायसमाप्तेः । अरण्ये ऽध्येयत्वादिह पाठः । द्वे कण्डिके श्रुतिर्देवताश्वावयवसंबन्धविधानात् ॥ ८ ॥

का० ( २०, ८, ६—८ ) विमुखाश्च परेभ्यो मा नो मित्र इति प्रत्यृचमनुवाकाभ्यामन्त्यां द्यावापृथिव्यामिति । अस्यार्थः उग्रश्चेति मन्त्रो विमुखः ततः परेभ्यो देवताश्वाङ्गेभ्योऽग्निं हृदयेनेत्यादिभ्यश्चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । तत्रापि पक्षद्वयम् । अग्नये स्वाहा हृदयाय स्वाहा अशनये स्वाहा हृदयाग्राय स्वा-

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अग्निं हृदयेन आश्वमेधिकम् आ अध्यायपरिसमाप्तेः । अरण्ये ऽध्येयत्वादिह पाठः । द्वे कण्डिके श्रुतिः । देवताश्वावयवसंबन्धविधानात् लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् ॥ ८–१३ ॥

इत्युव्वटकृतौ मन्त्रभाष्ये एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

हा इत्यादि कात्यायनादीनामभिप्रायः अग्निं हृदयेन प्रीणामि स्वाहेत्यादि हरिस्वामिमते प्रयोगः ॥ ततश्चाग्निं हृदयेनेत्यादीन् विश्वेभ्यो देवेभ्यः स्वाहेत्यन्तान् होमान् कृत्वा मा न इत्यनुवाकाभ्यां ( २५, २४--३९ ) षोडशाहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेति चरमामाहुतिं जुहोतीति सूत्रार्थः ॥ अरण्येऽनूच्यान् हुत्वा द्यावापृथिव्यामुत्तमामाहुतिं जुहोतीति श्रुतेः अरण्येऽनूच्यानरण्ये पठितानग्निं हृदयेनेत्यादीन् विश्वेभ्यो देवेभ्यः स्वाहेत्येवमन्तान होमान् कृत्वा द्यावापृथिवीयामुत्तमामाहुतिं जुहोतीति श्रुतेरर्थः । तथा चानुक्रमणी ( ४, ८ ) अग्निꣳ हृदयेनाश्वमेधिकानि तत्रत्य एवर्षिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिꣳशत् । तत्राग्निं हृदयेन उग्रं लोहितेन द्वे कण्डिके ब्राह्मणरूपे देवताश्वावयवसम्बन्धविधानात् अरण्येऽध्येयत्वादिह पाठः । लोमादीन्यङ्गान्येव पठितानि आयासादयो देवता एव ॥ अथ मन्त्रार्थः हृदयेनाङ्गेनाग्निं देवं प्रीणामि । हृदयस्याग्रभागेनाशनिं देवं प्रीणामि । समग्रहृदयेन पशुपतिं देवं प्रीणामि । यक्ना यकृता कालखण्डेन भवं देवं प्रीणामि पद्दन्न इत्यादिना ( पा० ६, १, ६३ ) यकृच्छब्दस्य यकन्नादेशः । मतस्ने हृदयास्थिविशेषौ ताभ्यां शर्वं देवं प्रीणामि । मन्युना अश्वसम्बन्धिक्रोधेन ईशानं देवं प्रीणामि । अन्तर्वर्त्तमानेन पर्शव्येन पार्श्वास्थिसम्बन्धिना मांसेन महादेवं देवं प्रीणामि पर्शवः पार्श्वास्थीनि । वनिष्ठुः स्थूलान्त्रं तेनोग्रं देवं प्रीणामि । वसिष्ठहनुः वसिष्ठस्य देवस्य हनुः कपोलैकदेशो ज्ञातव्यः यद्वा वसिष्ठा या हनुः कपोलाधोदेशः तत्परा हनुरित्यमरः ( २, ६, ९० ) तत्परा कपोलाधोभागस्था हन्त्याहारमिति हनुः लिङ्गव्यत्ययः वसिष्ठहन्वा कोश्याभ्यां कोशो हृदयकोशः तत्स्थाभ्यां मांसपिण्डाभ्यां च शिङ्गीनि शिङ्गिसंज्ञानि दैवतानि प्रीणामि ॥ ८ ॥

उग्रं लोहितेन मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान् प्रमुदा । भवस्य कण्ठ्यꣳ रुद्रस्यान्तःपार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् ॥ ९ ॥

स्पष्टार्थः ॥ ९ ॥

लोहितेनासृजा उग्रं देवं प्रीणामि । शोभनं व्रतं कर्म यस्य स सुव्रतस्तस्य भावः सौव्रत्यं शोभनगत्यादिकर्मकर्तृत्वम् तेन मित्रं देवं प्रीणामि । दुष्टं स्खलनोच्छलनादि व्रतं यस्य स दुर्व्रतः तस्य भावो दौर्व्रत्यम् तेन रुद्रं देवं प्रीणामि । प्रकृष्टं क्रीडनं प्रक्रीडः तेनेन्द्रं देवं प्रीणामि । बलेन सामर्थ्येन मरुतो देवान् प्रीणामि । प्रमुदा प्रकृष्टा मुत् हर्षः प्रमुत् तया साध्यान् देवान् प्रीणामि ॥ भवस्य कण्ठ्यम् अत्र षष्ठ्यन्तो देवः अङ्गं प्रथमान्तम् कण्ठ्यं कण्ठे भवं मांसं भवस्यास्तु विभक्तिव्यत्ययो वा कण्ठ्येन भवं देवं प्रीणामि । एवमग्रेऽपि । पार्श्वस्यान्तर्मध्ये भवं मांसमन्तः पार्श्व्यं तद्रुद्रस्यास्तु । यकृत् कालखण्डं महादेवस्यास्तु वनिष्ठुः स्थूलान्त्रं शर्वस्यास्तु । पुरीतत् हृदयाच्छादकमन्त्रं पशुपतेर्देवस्यास्तु ॥ ९ ॥

लोम॑भ्यः॒ स्वाहा॒ लोम॑भ्यः॒ स्वाहा॒ त्वचे॒ स्वाहा॒ त्वचे॒ स्वाहा॒ लोहि॑ताय॒ स्वाहा॒ लोहि॑ताय॒ स्वाहा॒ मेदो॑भ्यः॒ स्वाहा॒ मेदो॑भ्यः॒ स्वाहा॑ । मा॒ꣳसेभ्यः॒ स्वाहा॑ मा॒ꣳसेभ्यः॒ स्वाहा॒ स्नाव॑भ्यः॒ स्वाहा॒ स्नाव॑भ्यः॒ स्वाहा॒स्थभ्यः॒ स्वाहा॒स्थभ्यः॒ स्वाहा॑ म॒ज्जभ्यः॒ स्वाहा॑ म॒ज्जभ्यः॒ स्वाहा॑ रेत॑से॒ स्वाहा॑ पा॒यवे॒ स्वाहा॑ ॥ १० ॥

(१) तथा चानुक्रमणी अग्निꣳ हृदयेनाश्वमेधिका तत्रत्य एवर्षिर्लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् ॥ १० ॥

लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत् । लोमादीन्यङ्गानि । लोमभ्यः स्वाहा लोमानि जुहोमीत्यर्थः २, त्वचे ४, लोहिताय ६, मेदोभ्यः मेदो धातुविशेषः ८, मांसेभ्यः १०, स्नावभ्यः स्नावानः स्नायवो नसाः १२, अस्थभ्यः छन्दस्यपि दृश्यते ( पा० ७, १, ७६ ) इत्यस्थिशब्दस्य हलादिविभक्तावप्यनङादेशः १४, मज्जभ्यः मज्जा षष्ठी धातुः १६, रेतसे रेतो वीर्य्यम् १७, पायवे पायुर्गुदम् ॥ १८ ॥ १० ॥

आयासाय स्वाहा प्रयासाय स्वाहा संयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा । शुचे स्वाहा शोचते स्वाहा शोचमानाय स्वाहा शोकाय स्वाहा ॥ ११ ॥

तपसे स्वाहा तप्यते स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा घर्माय स्वाहा । निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥ १२ ॥

यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहा ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याᳪं स्वाहा ॥ १३ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायाम्
ऊनचत्वारिंशोऽध्यायः ॥ ३९ ॥

(१) स्पष्टार्थः ॥ ११ ॥ १२ ॥ १३ ॥

इति उव्वटकृतौ मन्त्रभाष्ये एकोनचत्वारिंशत्तमोऽध्यायः॥३९॥

आयासाय आयासादयो देवविशेषाः १९ प्रायासाय २०, संयासाय, २१, वियासाय २२, उद्यासाय २३, शुचे २४, शोचते २५, शोचमानाय २६, शोकाय २७. तपसे २८, तप्यते २९, तप्यमानाय ३०, तप्ताय ३१, घर्माय ३२, निष्कृत्यै ३३, प्रायश्चित्यै ३४, भेषजाय ३५, यमाय ३६, अन्तकाय ३७, मृत्यवे ३८, ब्रह्मणे ३९, ब्रह्महत्यायै ४०, विश्वेभ्यो देवेभ्यः ४१, एतेभ्यो देवेभ्यः सुहुतमस्तु । एता आहुतीर्हुत्वा द्यावापृथिवीभ्यां स्वाहेत्यन्त्यामाहुतिं जुहुयात् ॥ ४२ ॥ एतावता कर्मकाण्डं समाप्तम् ॥ ११ ॥ १२ ॥ १३ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
गतोऽध्याय उपान्त्योऽयं प्रोक्तघर्मादिनिष्कृतिः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ।

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यं स्विद्धनम् ॥ १ ॥

(१) समाप्तं कर्मकाण्डमिदानीं ज्ञानकाण्डं प्रस्तूयते । ईशा. वास्यम् । तिस्रोऽनुष्टुभः । दध्यङ्ङाथर्वण ऋषिः स्वशिष्यं पुत्रं वा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरमधीतवेदमुत्पादितपुत्रं यथाशक्ति अनुष्ठितयज्ञमपापं निस्पृहं यमनियमवन्तमति-

---

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० मास्ति । तद्यथा । समाप्तं कर्मकाण्डं ज्ञानकाण्डमिदानीं प्रस्तूयते ईशावास्यम् तिस्रोऽनुष्टुभः । दध्यङ्ङाथर्वण ऋषिः । स्वशिष्यं पुत्रं वा गर्भाधानादिभिः संस्कारैः संस्कृतशरीरम् अधीतवेदमुत्पादितपुत्रं यथाशक्त्यनुष्ठितयज्ञमपापं निस्पृहं यमनियमवन्तम अतिथिपूजापनीतकिल्बिष मुमुक्षुमुपसन्नं शिक्षयन्नाह ईशावास्यमिदं सर्वमिति ईश ऐश्वर्ये क्विपि तृतीयान्तस्यैतद्रूपं यत् ईशानेन वास्यं वासनीयं ममेदमित्यनया भावनया आच्छादनीयमिदं सर्वमिति प्रत्यक्षतो निर्दिशति यत्किञ्च यत्किञ्चशब्दो भिन्नक्रमः । किञ्च यत्किञ्च जगत्या पृथिव्यां जगत् जङ्गमादि स्वस्वामिसंबन्धालिङ्गितं स्यात् तत्तेनानेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसंबन्धेन भोगान् भुञ्जीथाः । अनुभवेः मा गृधः गृधु अभिकाङ्क्षायाम् इति आकाङ्क्षा मा कृथाः ममेदमिति किं कारणं कस्यस्विद्धनं स्विदिति निपातो वितर्कवचनः । कस्य पुनरेतद्धनं न कस्यचिदपीत्यभिप्रायः । सर्वाय ययार्थानि हि द्रव्याण्युत्पद्यन्ते तद्यथा स्त्रियं पतिः अयथा भुङ्क्ते अन्यथा पुत्रः अन्यथा प्राघूर्णकाः तथा कटककुण्डलादीन्यलङ्करणानि अन्यं चान्यं च पुरुषमुपतिष्ठमानानि दृश्यन्ते अतः सर्वार्थस्य स्वास्वामिसंबन्धः ममेदमिति बुद्धिः स्वा त्वविद्या निस्पृहस्य योगेऽधिकार इति वाक्यार्थः ॥ १ ॥

थिपूजापनीतकिल्बिषं मुमुक्षुमुपसन्नं शिक्षयन्नाह । ईशावास्यम् । इदं सर्वम् ईशा । ईश ऐश्वर्ये तृतीयान्तस्यैतद्रूपम् । यदीशनेन । वास्यं वसनीयम् ममेदमित्यनया भावनया आच्छादनीयम् । इदं सर्वमिति प्रत्यक्षतो निर्दिश्यत इति यत्किञ्चशब्दो भिन्नक्रमः । किञ्च । यत् जगत्यां पृथिव्यां जगत् जङ्गमादि-स्वस्वामिसंबन्धाभिलक्षितं स्यात् । तेनानेन सर्वेण । त्यक्तेन त्यक्तस्वस्वामिसंबन्धेन । भोगान् भुञ्जीथाः अनुभावयस्व । मा गृधः । गृधु अभिकाङ्क्षायाम् । माभिकांक्षीः ममेदमिति धियन्त्यज । कस्यस्विद्धनम् । स्विन्निपातो वितर्कवचनः । कस्य पुनरेतद्धनम् न कस्यचिदपीत्यभिप्रायः । सर्वाण्ययथार्थानि हि द्रव्याण्युत्पद्यन्ते । तद्यथा । स्त्रियमिति अन्यथा भुङ्क्ते अन्यथा पुत्रः अन्यथा प्राघूर्णकः । तथा कटककेयूरादीन्यलङ्करणानि अन्यं चान्यञ्च पुरुषमुपतिष्ठमानानि दृश्यन्ते । अतः सर्वार्थस्य यस्य स्वस्वामिसंबन्धः सा त्वविद्या । निस्पृहस्य योगेऽधिकार इति वाक्यार्थः ॥ १ ॥

गणेशनरहरिं लक्ष्मीं नत्वा तत्कृपया मया ।
संहिताचरमाध्याये वेददीपो वितन्यते ॥
एकोनचत्वारिंशताध्यायैः कर्मकाण्डं निरूपितम् ।
इदानीं कर्माचरणशुद्धान्तःकरणं प्रति ।
ज्ञानकाण्डमेकेनाध्यायेन निरूप्यते ॥

ईशा वास्यमित्यादिमन्त्राणां कर्मसु विनियोगो नास्ति तेषां शुद्धत्वैकत्वापापविद्धत्वाशरीरत्वसर्वगतत्वाद्यात्मयाथात्म्यप्रतिपादनात् तच्च कर्मणा विरुध्यते न हीदृगात्मोत्पाद्यो विकार्य आप्यः संस्कार्यः कर्त्ता भोक्ता वा भवेद्येन कर्मशेषता स्यात् तस्मादविद्याकृतमात्मनोऽनेकत्वकर्त्तृत्वभोक्तृत्वाशुद्धत्वपापविद्धत्वाद्यङ्गीकृत्य लोकबुद्धिसिद्धानि कर्माणि विहितानि यो हि दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना कर्मफलेनार्थी सन्नहं द्विजातिः कर्माधि-

कारवानित्यात्मानं मन्यते तस्य कर्माधिकारः तस्मादेते मन्त्रा आत्मयाथात्म्यप्रकाशनेन शोकमोहादिसाधनमज्ञानं विनिवर्त्या-त्मज्ञानं जनयन्तीत्यभिधेयसम्बन्धप्रयोजनानि । इदानीं ते मन्त्रा व्याख्यायन्ते । ईशा वास्यम् । आत्मदेवत्य अनुष्टुप्छन्दस्कोऽध्यायो दधीचाथर्वणेन दृष्टः । गर्भाधानादिसंस्कारसंस्कृतमधीतवेदं जनि-तसुतं यथाशक्तिकृतयज्ञं निष्पापं निःस्पृहं यमनियमोपेतं मुमुक्षुमु-पसन्नं शिष्यं पुत्रं वा ऋषिरुपदिशन्नाह । ईश ऐश्वर्ये क्विप् इष्ट इतीट् ईशिता परमेश्वरः स हि सर्वजन्तूनामात्मा सन् सर्वमीष्टे तेन स्वेनात्मनेशा इदं प्रत्यक्षतो दृश्यमानं सर्वं वास्यम् वस आ-च्छादने ऋहलोर्ण्यदिति ( पा० ३, १, १२४ ) ण्यत्प्रत्ययः आच्छा-दनीयम् परमात्माहमेवेदं सर्वमिति परमार्थसत्यरूपेणात्मना सर्व-मिदमनृतमाच्छादनीयम् परमात्माहमेवास्मि नान्यदस्तीति चिन्त-येदित्यर्थः । यत् किम् चेत् भिन्नक्रमः किञ्च यत् जगत्यां लोकत्रये जगत् जङ्गमादिकं स्वामिसम्बन्धालिङ्गितं भवेत् तेन सर्वेण त्यक्तेन त्यक्तस्वस्वामिसम्बन्धेन भुञ्जीथाः भोगमनुभवेः मा गृधः गृधु अ-भिकाङ्क्षायाम् आकाङ्क्षां मा कृथाः ममेदमिति धियं त्यजेत्यर्थः । किमिति स्विदिति निपातो वितर्के धनं कस्य स्वित् न कस्यापी-त्यर्थः सर्वाणि द्रव्याण्यन्योऽन्यमुपगच्छन्ति दृश्यन्ते अतो ममेद-मिति बुद्धिरविद्या तां त्यजतो योगेऽधिकार इत्यर्थः ॥ १ ॥

**कु॒र्वन्ने॒वेह कर्मा॑णि जिजीवि॒षेच्छ॒तᳬ समाः॑ । ए॒वं त्वयि॒ नान्यथे॒तोऽस्ति॒ न कर्म॑ लिप्यते॒ नरे॑ ॥ २ ॥**

(१) निःस्पृहस्यापि योगिनो ज्ञाननिमित्ते कर्मण्यधिकार

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । निस्पृहस्य योगिनो ज्ञानकर्मण्यधिकार इत्येतदर्थ माह कुर्वन्नेव । कुर्वन्नेव कर्माणि मुक्तिहेतुकानि इह लोके जिजीविषेत् जिजीविषेरिति पुरुषव्यत्ययः । प्रत्यक्षकृतत्वान्मन्त्रस्य जीवितुमि-च्छेः । पथ्यहितमितभक्षणेन शतं समा इत्युपलक्षणार्थम् एवं त्व-यि तवेति विभक्तिव्यत्ययः । मुक्तिरस्तीति शेषः । नान्यथेतोऽस्ति इतः प्रकारात् अन्यथा मुक्तिर्नास्ति एतदुक्तं भवति यथा स्वर्गप्राप्तौ

इत्येतमर्थमाह । कुर्वन्नेव । कुर्वन्नेव कर्माणि मुक्तिहेतुकानि । इह लोके । जिजीविषेत् जिजीविषेरिति पुरुषव्यत्ययः । प्रत्यक्षकृतत्वान्मन्त्रस्य जीवितुमिच्छेः पथ्यहितमितभक्षणेन । शतं समाः इत्युपलक्षणार्थम् । यावदायुः पर्यवसानमित्यर्थः । एवम् । त्वयि तवेति विभक्तिव्यत्ययः । मुक्तिरस्तीति शेषः नान्यथेतोऽस्ति । इतः प्रकारात् अन्यथा मुक्तिर्नास्ति । एतदुक्तं भवति । यथा स्वर्गप्राप्तौ नानाभूताः प्रकाराः सन्ति न तथा मुक्तावित्यर्थः । ननु कर्मणः फलेन भवितव्यमथ कथं मुक्तिप्राप्तिरित्येतदाशङ्क्याह न कर्म लिप्यते नरे । नहि मुक्त्यर्थं क्रियमाणां कर्म नरे मनुष्ये संबध्यते मुक्तिप्रदानेनोपक्षीणशक्तित्वात् । तथा च बृहदारण्यकम् । तमेतं वेदानुवचनेन विविदिषन्ति । ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति । विविदिषन्ति वेदितुमिच्छन्ति । अनेनैतद्दर्शयति । यावदिच्छा प्रवृत्तिः तावत्कर्मस्वधिकार इति ॥२॥

आत्मज्ञानाशक्तस्य कर्मोपदेशमाह । कर्माणि अग्निहोत्रादीनि निष्कामानि मुक्तिहेतुकानि कुर्वन्नेवेह लोके शतं समाः सनवर्षपर्यन्तं जिजीविषेत् पुरुषव्यत्ययः त्वं जिजीविषेः जीवितुमिच्छेः पुरुषायुषः शतवर्षत्वाच्छतग्रहणम् । त्वयीति विभक्तिव्यत्ययः तवैवं कर्म कुर्वतो जिजीविषतो मुक्तिरस्तीति शेषः इतः प्रकारादन्यथा प्रकारान्तरेण मुक्तिर्नास्ति अयमर्थः स्वर्गादिप्राप्तौ यथा नानाप्रकारा न तथा मुक्तावित्यर्थः निष्कामकर्मानुष्ठानेन शुद्धान्तःकरणस्यैव

नानाभूताः प्रकाराः सन्ति न तथा मुक्तावित्यर्थः । ननु कर्मणः फलेन भवितव्यम् अथ कथं मुक्तिप्राप्तिरित्याशङ्क्याह न कर्म लिप्यते नरे नहि मुक्त्यर्थं कर्म क्रियमाणं नरे मनुष्ये संबध्यते मुक्तिप्रदानेनोपक्षीणशक्तित्वात् तथा बृहदारण्यकम् तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चेति विविदिषन्ति वेदितुमिच्छन्ति अनेनैवं दर्शयति यावदिच्छाप्रवृत्तिस्तावत्कर्मस्वधिकार इति ॥ २ ॥

मुक्तिरित्यर्थः न नु कर्मणः फलेन भाव्यम् कथं मुक्तिरित्यत आह न कर्मेति मुक्त्यर्थं क्रियमाणं कर्म नरे मनुष्ये न लिप्यते न सम्ब-ध्यते मुक्तिकारणान्तःकरणशुद्ध्यापादकत्वेनापक्षीणशक्तित्वात् या-वदिच्छा तावत् कर्मस्वधिकार इति दर्शितम् । उत्तरार्धस्यार्थान्तरं वा एवं प्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि इतः ए-तस्मात् कर्मकरणादन्यथा प्रकारान्तरं नास्ति येन प्रकारेणाशुभं कर्म न लिप्यते अतः शास्त्रविहितं कर्म कुर्वन्नेव जीवितुमिच्छेत् प्र-त्यवायपरिहारायेत्यर्थः । तदुक्तम् द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः प्रवृत्तिलक्षणो धर्मो निवृत्तौ च विभावित इति ॥ २ ॥

असुर्य्या नाम ते लोका अन्धेन तमसावृताः ।
ताँस्ते प्रेत्यापि गच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

(१) इदानीं स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि ये कुर्वन्ति ते निन्द्यते । असुर्या नामेति । असुर्याः परमात्मभावमद्वयमपे-क्ष्य देवा अप्यसुराः । असुराणां स्वभूता असुर्याः एवंसंज्ञका-स्ते लोकाः अन्धेन तमसा अज्ञानलक्षणेन तमसा आवृताः सर्व-तो वृताः । तान् लोकान् ते जनाः प्रेत्य मृत्वा अपिगच्छन्ति । ये के चात्महनो जनाः । आत्मानं घ्नन्ति ये जनाः ते आत्महनः आत्मानश्च ते घ्नन्ति ये स्वर्गप्राप्तिहेतूनि कर्माणि कु-

---

(१)अत्र वाराणसी० लि०पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । इदानीं स्वर्गादिप्राप्तिहेतुभूतानि कर्माणि ये कुर्व-न्ति ते निद्यन्ते असूर्या नामेति असुर्याः । परमात्मभावमद्वयमपेक्ष्य देवा अप्यसुरा असुराणां स्वभूताः असुर्याः । एवंसंज्ञकाः ते लोका-अन्धेन तमसा अज्ञानलक्षणेन तमसा वृताः सर्वतः तान् लोकान् ते जनाः प्रेत्यापि मृत्वा अपि गच्छन्ति ये चात्महनो जना ये स्वर्गप्रा-प्तिहेतुभूतानि कर्माणि कुर्वन्ति ते हि जनित्वा म्रियन्ते एवमहर्निशं नाशं प्राप्नुवन्ति ॥ ३ ॥

र्षन्ति । ते हि जनित्वा म्रियन्ते मृत्वा च जायन्ते । एवमहर्निशं नाशं प्राप्नुवन्ति ॥ ३ ॥

अथ काम्यकर्मपरान्निन्दति । ये के च ये केचित् ( जनाः ) नराः आत्महनः आत्मानं घ्नन्तीत्यात्महनः अविद्वांसः काम्यकर्मपराः विद्यमानस्याजरामरस्यात्मनोऽविद्यादोषेण तिरस्करणादात्महन्तारः ते प्रेत्य मृत्वा देहं त्यक्त्वा तान् लोकान् जन्मानि स्थावरान्तानि अभिगच्छन्ति प्राप्नुवन्ति । तान् कान् नाम प्रसिद्धं ते ये यत्तदोर्व्यत्ययः ये लोकाः लोक्यन्ते दृश्यन्ते भुज्यन्ते कर्मफलानि यत्रेति लोका जन्मानि असुर्याः असुराणामिमे असुर्याः असुषु प्राणेषु रमन्तेऽसुराः प्राणपोषणपराः अद्वैतमपेक्ष्य देवा अपि असुराः । कीदृशाः लोकाः ? अन्धेन तमसा अदर्शनात्मकेनाज्ञानेन आवृताः आच्छादिताः । अनात्मज्ञाः पुनर्जायन्ते म्रियन्ते चेत्यर्थः ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्शत् । तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

(१) इदानीमधस्तनयमनियमवतां मुमुक्षूणां यथाभूतं परं-

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । इदानीं यमनियमवतां मुमुक्षूणां यथाभूतं परं ब्रह्म तत्त्वेनोपास्यं तदाह उक्तं च अहं ब्रह्मास्मि संबुध्य इदं सर्वं च मन्मयम् मयि विद्या समुद्दिष्टा विमुक्तिर्याऽभिवन्धिनीति । अनेजदेकम् त्रिष्टुप् यत् अनेजत् अचलत् तत्त्वमास्ते एवमद्वितीयं विज्ञानघनरूपेण मनसो जवीयः मनसोऽवत् शीघ्रमजति ततोऽपि शीघ्रतरं प्रसवदानेन कारणभूतत्वात् नैनद्देवा आप्नुवन् पूर्वमर्शत् नचैतत्त्वं देवा अपि आप्तुं शक्ताः सूक्ष्मत्वात् । पूर्वमर्शत् रिशतिर्हिंसाकर्मा पूर्वं मयि विद्यमानं सत् अर्शत् रिशतीति रिशत् न रिशत् अर्शत् धातोरिकारलोपः छान्दसः । अविनश्यदास्ते अनादिनिधनमित्यर्थः । तद्धावतः तदः स्थाने यदो वृत्तिः उद्देश्यत्वात् यच्च धावतोऽन्यान् पुरुषादीन् अत्येति अतिक्रम्य गच्छति तथापि तिष्ठन् सर्वं स्थितं

ब्रह्म आत्मत्वेनोपास्यन्तदाह।

उक्तश्च।

अहं ब्रह्मास्मि संरुध्य इदं सर्वं च मन्मयम्।
इयं विद्या समुद्दिष्टा विमुक्तिर्यन्निबन्धिनीति॥

अनेजदेकम्। त्रिष्टुप्। यत् अनेजत् अचलत् तत्त्वमस्ति एकमद्वितीयम् विज्ञानघनरूपेण। मनसो जवीयः। मनस्ताव-च्छीघ्रम्भवति ततोऽपि शीघ्रतरं प्रसवदानेन कारणभूतत्वात् नैनद्देवा आप्नुवन्। नचैतत्तत्त्वं देवा अपि प्राप्तुं शक्ताः सूक्ष्म-त्वात्। पूर्वम् अर्शत्। रिशतिर्हिंसाकर्मा। अविनश्यदास्ते। अनादिनिधनमित्यर्थः। तद्धावतः तदः स्थाने यदो वृत्तिरुद्दे-श्यत्वात्। यच्च धावतः अन्यान् पुरुषादीन् अत्येति अतिक्रम्य गच्छति। तथा च तिष्ठत् सर्वत्र स्थितम्। सर्वशक्तित्वं सर्वगत-त्वं चानेन व्याख्यायते। तस्मिन्नपः। अत्रापि यदो वृत्तिम-स्मिंश्चापः कर्माणि मातरिश्वा वायुः दधाति स्थापयति। सर्वा-णि कर्माणि यज्ञदानहोमादीनि समिष्टयजुषि वायौ स्थाप्यन्ते स्वाहा वातेधा इति वायोः प्रतिष्ठत्वाभिधानात्। समष्टिव्यष्टि-रूपो ह्यसाविति वायुरपि यस्मिन्कर्माणि स्थापयति। यागहो-मादीनां परमन्निधानमित्यर्थः॥ ४॥

मुमुक्षुभिर्यादृशं ब्रह्मात्मत्वेनोपास्यम् यस्याज्ञानात् संसारस्त-दात्मस्वरूपमाह। त्रिष्टुप्छन्दस्केयमृक्। यत् ब्रह्म अनेजत् एजृ कम्पने न एजतीत्यनेजत् अचलत् स्वावस्थाप्रच्युतिः कम्पनम् त-

---

सवगतत्व सर्वशक्तित्वमनेन व्याख्यायते तस्मिन्नपः यस्मिंश्च आपः कर्माणि मातरिश्वा वायुर्दधाति स्थापयति सर्वाणि कर्माणि यज्ञदान-होमादीनि समिष्टयजुषि वायौ स्थाप्यन्ते स्वाहा वाते धा इति वायुप्रतिष्ठत्वाभिधानात् समष्टिव्यष्टिरूपो ह्यसौ इति वायुरपि य-स्मिन् कर्माणि स्थापयति यागहोमदानानां परमनिधानमित्यर्थः॥४॥

द्वितम् सदैकरूपमित्यर्थः एकमद्वितीयं सर्वभूतेषु विज्ञानघनरूपेण । मनसः सङ्कल्पादिलक्षणाज्जवीयः वेगवत्तरम् जवोऽस्यास्तीति जववत् अत्यन्तं जववत् जवीयः ईयसुनि कृते विन्मतोर्लुगिति ( पा० ५, ३, ६५ ) मतुपो लुक् । नन्वनेजद्वेगवतोर्विरोधः मैवम् निरुपाधित्वेनानेजत् सङ्कल्पविकल्परूपान्तःकरणस्योपाधेरनुवर्त्तनाज्जविष्ठम् देहस्थस्य मनसो दूरस्थब्रह्मलोकादिसङ्कल्पनं क्षणमात्राद्भवतीति मनो वेगवत्तरं लोके प्रसिद्धम् मनसि दूरं गच्छत्यात्मचैतन्यावभासः प्रथमप्राप्त इव गृह्यतेऽतो मनसो जवीय इत्युक्तम् । देवा द्योतनात्मकाश्चक्षुरादीन्द्रियाणि एनत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः चक्षुरादिभ्यो मनो जवीयोऽतो मनोव्यापारे व्यवहितत्वादात्मन आभासमात्रमपि देवानां गोचरो न भवतीत्यर्थः यतः पूर्वमर्शत् वेगवन्मनसोऽपि प्रथममेव गच्छत् ऋश गतौ व्योमवद्व्यापित्वात्सर्वसंसारधर्मवर्जितं तदात्मतत्त्वं निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवेत्यविवेकिनां प्रतिदेहमनेकमिव प्रतिभासत इति भावः यद्वा पूर्वम् पूर्वमपि विद्यमानम् अर्शत् रिश हिंसायां रिशति नश्यति रिशत् न रिशदरिशत् अर्शत् धातोरिकारलोपश्छान्दसः । किञ्च तत् तदः स्थाने यदो वृत्तिः यदात्मतत्त्वं धावतो द्रुतं गच्छतोऽन्यान् मनोवागिन्द्रियादीनात्मविलक्षणान् अत्येति अतीत्य गच्छतीव कीदृशम् तिष्ठत् स्वयमविक्रियमेव सद्गच्छतीव । मातरि अन्तरिक्षे श्वसिति गच्छतीति मातरिश्वा वायुः तस्मिन्नित्यचैतन्यस्वभावे आत्मतत्त्वे सति अपः कर्माणि दधाति धारयति कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि यः सूत्रसंज्ञः सर्वस्य जगतो विधारयिता सर्वप्राणभृत्क्रियात्मकः सोऽपि वायुः प्राणिनां चेष्टालक्षणानि अग्निरविमेघादीनां ज्वलनदहनप्रकाशाभिवर्षणादीनि च कर्माणि यस्मिन् ब्रह्मणि सत्यवद् दधाति विभजति धारयति वा भीषास्माद्वातः पवते भीषोदेति सूर्य्य इत्यादि श्रुतेः ( तैत्तिरी० आरण्य० ८, ८ ) सर्वा हि कार्यकारणादिक्रियाः सर्वास्पदे नित्यचैतन्यरूपे ब्रह्मणि सत्येव भवन्तीत्यर्थः । यद्वा मातरिश्वा वायुपरः कर्माणि आप्यन्ते प्राप्यन्ते सुखदुःखानि याभिस्ता आपः कर्माणि आप्नोतेर्ह्रस्वश्चेति ( उणा० २, ५९ ) क्विप् धातोर्ह्रस्वश्च तानि

कर्माणि यज्ञहोमादीनि यस्मिन् दधाति स्थापयति स्वाहा वाते धा इति ( ८, २१ ) समिष्टयजुषि वायुस्थत्वोक्तेः कर्माणि तावद्वायौ स्थाप्यन्ते समष्टिरूपोऽसौ वायुरपि यस्मिन् कर्माणि स्थापयति यागहोमदानादिकर्मणां परमं निधानमित्यर्थः ॥ ४ ॥

तदे॑जति॒ तन्नैज॑ति॒ तद्दू॒रे तद॑न्ति॒के । तद॒न्तर॑स्य॒ सर्व॑स्य॒ तदु॒ सर्व॑स्यास्य बाह्य॒तः ॥ ५ ॥

(१) एवं कारणरूपमात्मानमुद्दिश्य । अथेदानीं कार्यरूपेणोद्दिशति ॥ तदेजति । अनुष्टुभस्तिस्रः । तदेव सर्वप्राणिरूपेणावस्थितं सत् एजति कम्पवद्भवति । क्रियावद्भवति तन्नैजति । तदेव च न चलति स्थावररूपावस्थितं सत् तद् दूरे तदेव च दूरे आदित्यनक्षत्रादिरूपेणावस्थितम् । तत् उ अन्तिके । पृथिव्यादिरूपेणावस्थितम् । सर्वं खल्विदं ब्रह्मेत्येतद्दर्शनार्थो ग्रन्थः । तदन्तरस्य सर्वस्य । तदेव च अस्य सर्वस्य प्राणिजातस्य । विज्ञानघनरूपेणावस्थितं सत् अन्तर्मध्यत आस्ते । तदु सर्वस्यास्य बाह्यतः । तदेव सर्वस्यास्य प्राणिजातस्य बाह्यतः

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई०मु०पु० नास्ति तद्यथा। एवं कारणरूपमात्मानमुद्दिश्य अथेदानीं कार्यरूपेणोद्दिशति तदेजति अनुष्टुभस्तिस्रः। तदेव सर्वप्राणिरूपेणावस्थितं सत् एजति कम्पवद्भवति क्रियावद्भवति। तन्नैजति । तदेव च नैजति न चलति स्थावररूपावस्थं तद् दूरे तदेव दूरे आदित्यनक्षत्रादिरूपेण ( अवस्थितम् ) तदन्तिके । तदेवान्तिके पृथिव्यादिरूपेण ( अवस्थितम् ) सर्वं खल्विदं ब्रह्मेत्येतद्दर्शनार्थं तदन्तरस्य सर्वस्य प्राणिजातस्य विज्ञानघनरूपेणान्तर्मध्यतः आस्ते। तदेव सर्वस्य प्राणिजातस्य बाह्यतः जडरूपेण व्यवस्थितमस्ति चेतनाचेतनरूपं सर्वगमनन्तं ब्रह्मेत्यर्थः । अस्या उपासनाया अर्चिरादिचिन्तनं नास्ति एवं केचिदाहुः इहैव ब्रह्मप्राप्तेः ॥ ५ ॥

जनरूपेणात्रस्थितमास्ते । चेतनाचेतनरूपमनन्तं सर्वगं ब्रह्मेत्यर्थः । अस्या उपासनाया अर्चिराद्यनुचिन्तनं नास्तीत्येवङ्केचिदाहुः इहैव ब्रह्मप्राप्तेः ॥ ५ ॥

रहस्यं सकृदुक्तं चित्ते नायातीति पूर्वमन्त्रोक्तमप्यर्थं पुनर्वदति । तत् प्रकृतमात्मतत्त्वमेजति चलति तदेव च न एजति स्वतो नैव चलति अचलमेव सत् मूढदृष्ट्या चलतीवेत्यर्थः । किञ्च तत् दूरे अविदुषामब्दकोट्याप्यप्राप्यत्वाद् दूरे इवेत्यर्थः।तत् उ तदेव अन्तिके समीपे विदुषामात्मत्वेन भासमानत्वान्न केवलं दूरेऽन्तिके च। अस्य सर्वस्य नामरूपक्रियात्मकजगतोऽन्तरभ्यन्तरे तदेव । अस्य सर्वस्य बाह्यतः बहिरपि तदु तदेव ब्रह्म नभोवद्व्यापकत्वात् ॥ अस्य मन्त्रस्यार्थान्तरम् यथा पूर्वमन्त्रेण कारणरूपमात्मानमुद्दिश्य कार्य्यरूपमुद्दिशति । तदेजति । तिस्रोऽनुष्टुभः । तत् आत्मतत्त्वमेजति सर्वजन्तुरूपेण स्थितं सत् कम्पते क्रियावद्भवति तदेव च न एजति स्थावररूपावस्थं न चलति । तदेव दूरे आदित्यनक्षत्रादिरूपेण स्थितत्वात् तदु अन्तिके समीपे धरादिरूपत्वात् सर्वं खल्विदं ब्रह्मेति श्रुतेः । अस्य सर्वस्य प्राणिजातस्यान्तर्मध्ये तदेवास्ते विज्ञानरूपेण अस्य सर्वस्य बहिः तदु तदेव जडरूपत्वात् चेतनाचेतनरूपमनन्तं ब्रह्मेत्यर्थः एतदुपासितुरर्चिरादिमार्गेण गमनं नास्ति इहैव ब्रह्मप्राप्तेः न तस्य प्राणा उत् क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः ॥ ५ ॥

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विचिकित्सति ॥ ६ ॥

(१) यस्तु । तु शब्दो विशेषणार्थः यः पुनः सर्वाणि भू॰

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । यस्तु तुशब्दो विशेषणार्थः । यः पुनः सर्वाणि भूतानि चेतनाचेतनानि आत्मन् आत्मनि आत्मन्येवानुपश्यति । मय्येव सर्वाणि भूतानि अवस्थितानि न मद्व्यतिरिक्तानि अहमेव परं ब्रह्म सर्वभूतेषु चात्मानमवस्थितम् अव्यतिरिक्तं पश्यति त-

तानि चेतनाचेतनानि आत्मन्नेव अनुपश्यति । मय्येव सर्वाणि भूतान्यवस्थितानि न मद्व्यतिरिक्तानि । अहमेव परं ब्रह्म । सर्वभूतेषु चात्मानम् अवस्थितम् अव्यतिरिक्तं पश्यति । ततो न विचिकित्सति । न संशेते । एवं पश्यतो योगिनः परब्रह्मरूपाण्यात्मसंस्थानि भवन्ति विज्ञानघनानन्दैकत्वादिति । अतो विचारान्न विनिवर्तते ॥ ६ ॥

अथोपासनप्रकारमाह । यस्तु यः पुनः मुमुक्षुः सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि चेतनानि आत्मन् सप्तम्या लुक् आत्मनि एवानुपश्यति मय्येव सर्वभूतानि स्थितानि न मद्व्यतिरिक्तानीति पश्यति आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु चात्मानमवस्थितमव्यतिरिक्तं पश्यति तेषां भूतानां स्वमात्मानमात्मत्वेन पश्यतीत्यर्थः । अयमर्थः । अस्य कार्य्यकारणसङ्घातस्यात्माहं सर्वप्रत्ययसाक्षिभूतश्चेतयिता निर्गुणश्च तथा तेनैव स्वरूपेणाव्यक्तादीनां स्थावरान्तानामहमेवात्मेति सर्वेषु चात्मानं निर्विशेषं पश्यति । ततस्तस्माद्दर्शनात् न विचिकित्सति न संशेते कित् रोगापनयने संशये चेति धातोः गुप्तिज्किद्भ्यः सन्निति ( पा० ३, १, ५ ) स्वार्थे सन् प्रत्ययः आत्मनोऽन्यत्पश्यतः सर्वः सन्देहो भवत्यात्मानमेवात्यन्तं शुद्धं निरन्तरं पश्यतो न सन्देहावकाश इति भावः अत आत्मज्ञस्य विचारनिवृत्तिः ॥ ६ ॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूं द्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥

(१) किञ्च । यस्मिन् अवस्थाविशेषे । सर्वाणि भूतानि

---

तो न विचिकित्सति न संशेते एवं पश्यतो योगिनः सर्वाणि भूतानि ब्रह्मरूपाण्यात्मसंस्थितानि भवन्ति विज्ञानघनानन्दैकत्वादिति । अतो विचारो निवर्तते ॥ ६ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु० पु० नास्ति तद्यथा । किञ्च यस्मिन् सर्वाणि । यस्मिन् सर्वाणि अवस्था-

चेतनाचेतनानि । आत्मैव अभूत् संभवन्ति । विजानतः आत्मैवेदम् सर्वं । सर्वं खल्विदं ब्रह्मेत्येवमादिवाक्यविचारेण विधूतविज्ञानस्य । तत्र अवस्थाविशेषे कृतचेतसो योगिनः कः मोहः कः शोकः न कश्चिदपीत्यभिप्रायः । शोकमोहौ ह्यपरिज्ञाततत्त्वस्य भवतः । हेतुगर्भं विशेषणमाह । एकत्वमनुपश्यतः सर्वाणि भूतानि ध्यायतः ॥ ७ ॥

इममेवार्थमन्यो मन्त्रो वदति । यस्मिन्नवस्थाविशेषे विजानतः आत्मैवेदम् सर्वं खल्विदं ब्रह्मेत्यादिवाक्यविचारेणावधूतपरमार्थस्य सतः सर्वाणि भूतानि आत्मैवाभूत् परमार्थदर्शनादात्मैव संवृत्तः तत्र तस्यामवस्थायामेकत्वं विशुद्धं गगनोपममात्मैकत्वं पश्यतः जानतः को मोहः कः शोकश्च अविद्याकार्य्ययोः शोकमोहयोरसम्भवात् सकारणस्य संसारस्यात्यन्तमुच्छेद इति भावः ॥ ७ ॥

स पर्य्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥

(१) स पर्यगात् । जगती । य एवमात्मानमुपास्ते स

---

विशेषे सर्वाणि भूतानि चेतनाचेतनानि आत्मैवाभूत् सम्भवन्ति विजानतः आत्मैवेदं सर्वं खलिदं ब्रह्मेत्येवमादिवाक्यविचारणावधूतविज्ञानस्य तत्रैतस्यामवस्थायां योगिनः को मोहः कश्च शोकः न कश्चिदपीत्यभिप्रायः शोकमोहावपरिज्ञाततत्त्वस्य भवतः न एकत्व मनुपश्यतः ध्यायतः ॥ ७ ॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति तद्यथा । सपर्यगात् । जगती । य एवमात्मानमुपास्ते स पर्यगात् परिगच्छति । शुक्रं शुक्लं विज्ञानानन्दस्वभावमाचिन्त्यशक्तिम् अकायं न विद्यते कायः शरीरं यस्य स तथोक्तः अव्रणं कायर-

पर्यगात्परिगच्छति शुक्रं शुक्रं विज्ञानानन्दस्वभावमचिन्त्यशक्तिम्। अकायं न विद्यते कायः शरीरं यस्य स तथोक्तः अव्रणं कायरहितत्वादेवास्नाविरं स्नायुरहितमकायत्वादेव शुद्धमनुपहतं सत्त्वरजस्तमोभिरपापविद्धं क्लेशकर्मविपाकाशयैरसंस्पृष्टमकायमव्रणमस्नाविरमिति पुनरुक्तान्यभ्यासे भूयांसमर्थं मन्यन्त इत्यदोषः इत्थम्भूतं ब्रह्म प्रतिपद्यते । अथात्मोपासनायुक्तस्य फलमाह । यश्च कविः क्रान्तदर्शनः मनीषी मेधावी परिभूः सर्वतो भविता विज्ञानबलात्स्वयम्भूः स्वयं ज्ञानबलाद्ब्रह्मरूपेण भविता सः याथातथ्यतोऽर्थान्व्यदधाद्यथास्वरूपमर्थान्विहितवान् । त्यक्तस्वस्वामिसंबन्धैरर्थैश्चेतनाचेतनैरुपभोगं कृतवान् । शाश्वतीभ्योऽनन्ताभ्यः समाभ्योऽर्थाय अनन्तवर्षप्राप्तये च कर्म कृतवान् । ननु कर्मजाड्याल्लोकः कर्मवान् भवति । सत्यम् । आत्मसंस्कारकन्तुकर्म ब्रह्मभावजनकं स्यात् । तस्मात् सोऽपि गच्छति शुक्रमकायं ब्रह्म इति ॥ ८ ॥

एवंभूतात्मज्ञस्य फलमाह । य एवमात्मानं पश्यति स ईदृशं

---

हितत्वादेव अस्नाविरं स्नायुरहितम् अकायत्वादेव शुद्धम् अनुपहतं सत्त्वरजस्तमोभिः अपापविद्धं क्लेशकर्मविपाकाशयैरसंस्पृष्टम् । अकायमव्रणमस्नाविरमिति पुनरुक्तानि अभ्यासे भूयांसमर्थं मन्यन्त इत्यदोषः इत्थम्भूतं ब्रह्म प्रतिपद्यते अथात्मोपासनायुक्तस्य फलमाह यश्च कविः क्रान्तदर्शनः मनीषी मेधावी परिभूः सर्वतो भविता विज्ञानबलात् स्वयम्भूः ब्रह्मरूपेण भविता स्वयं ज्ञानबलात् याथातथ्यतोऽर्थान् व्यदधात् यथास्वरूपमर्थान् विहितवान् त्यक्तस्वस्वामिसम्बन्धैरर्थैः चेतनाचेतनैः उपभोगं कृतवान् शास्वतीभ्योऽनन्ताभ्यः समाभ्योऽर्थाय अनन्तवर्षप्राप्तये च कर्म कृतवान् ननु कर्मजाड्याल्लोकः कर्मवानेव भवति सत्यम् आत्मसंस्कारकं तु कर्म ब्रह्मभावजनकं स्यात् तस्मात्सोऽपि गच्छति शुक्रमकायं ब्रह्म ॥ ८ ॥

ब्रह्म पर्य्यगात् परिगच्छति प्राप्नोतीत्यर्थः । कीदृशम्? शुक्रं शुक्लं शुद्धं विज्ञानानन्दस्वभावमचिन्त्यशक्ति । अकायम् न कायः शरीरं यस्य तत् । अकायत्वादेवाव्रणमक्षतम् । अस्नाविरं न विद्यन्ते स्नावाः शिरा यत्र तदस्नाविरं स्नायुरहितम् अकायत्वादेव । शुद्धमनुपहतं सत्त्वरजस्तमोभिः । अपापविद्धं न पापैर्विद्धं क्लेशकर्मविपाकाशयैरस्पृष्टम् । अकायमव्रणमस्नाविरमिति पुनरुक्तमर्थातिशयद्योतनाय अभ्यासे भूयांसमर्थं मन्यन्त इति यास्कोक्तेः ( निरु० १०, ४२ ) । ईदृशं ब्रह्मात्मज्ञः प्रतिपद्यत इत्यर्थः । पुनस्तस्यैव फलान्तरमाह य ईदृश उपासकः स शाश्वतीभ्यः समाभ्यः निरन्तरमनन्तवर्षेभ्योऽर्थाय अनन्तवर्षप्राप्तये याथातथ्यतः यथातथाभावो याथातथ्यं तेन यथास्वरूपमर्थान् व्यदधात् विहितवान् त्यक्तस्वस्वामिसम्बन्धैश्चेतनाचेतनैरर्थैरुपभोगं कृतवानित्यर्थः । कीदृशः? कविः क्रान्तदर्शी । मनीषी मेधावी । परि सर्वतो भवतीति परिभूः ज्ञानबलात् सर्वरूपः । स्वयं भवतीति स्वयम्भूः ब्रह्मरूपेण भविता । ईदृशोऽपि पूर्वोक्तं शुक्रमकायमित्यादिविशेषणविशिष्टं ब्रह्म प्राप्नोतीत्यर्थः ॥ एतस्या ऋचोऽर्थान्तरम् । यथा । योऽयमतीतमन्त्रोक्त आत्मा स पर्य्यगात् परितः सर्वत्र गच्छति नभोवत् सर्वं व्याप्नोति व्याप्य च शाश्वतीभ्यो नित्याभ्यः समाभ्यः संवत्सराख्येभ्यः प्रजापतिभ्यो यथातथ्यतः यथाभूतकर्मफलसाधनतः अर्थान् कर्त्तव्यपदार्थान् व्यदधात् यथानुरूपं व्यभजदित्यर्थः । स कीदृशः? शुक्रमित्यादिविशेषणानि लिङ्गव्यत्ययेन पुंलिङ्गे नेतव्यानि शुक्रः शुद्धो दीप्तिमान् अकायोऽशरीरः लिङ्गशरीरवर्जित इत्यर्थः अव्रणोऽक्षतः अस्नाविरः शिरारहितः अव्रणोऽस्नाविर इति विशेषणद्वयेन स्थूलशरीरप्रतिषेधः शुद्धो निर्मलः अपापविद्धोऽधर्मादिवर्जितः कविः सर्वदृक् नान्यदतोऽस्ति द्रष्टृिति श्रुतेः मनीषी मनस ईषिता सर्वज्ञः परिभूः परि सर्वेषामुपर्युपरि भवतीति परिभूः स्वयम्भूः स्वयमेव भवतीति येषामुपरि भवति यश्चोपरि भवति स स्वयमेव भवतीति स्वयम्भूः । स नित्य ईश्वरः सर्वं कृतवानित्यर्थः ॥ ८ ॥

अन्धं तमः प्र वि॑शन्ति॒ ये॑ऽसं॑भूतिमु॒पास॑ते । त॒तो॒ भूय॑ इ॒व ते॒ तमो॒ य उ॒ सम्भू॑त्याᳬ र॒ताः ॥ ९ ॥

(१) इत उत्तरम् उपासनामन्त्राः प्रोच्यन्ते । अन्धन्तमः । षडनुष्टुभः । लोकायतिकाः प्रस्तूय निन्द्यन्ते । येषामेतद्दर्शनम् । जलबुद्बुदवज्जीवाः मदशक्तिवद्विज्ञानमिति । अन्धन्तमः प्रविशन्ति येऽसंभूतिमुपासते । मृतस्य सतः पुनः संभवो नास्ति अतः शरीरग्रहणादस्माकं मुक्तिरेव । नहि विज्ञानात्मा कश्चिदनुच्छित्तिधर्मास्ति यो यमनियमैः सम्बध्यते । एवं ये उपासते ते अन्धम् अज्ञानलक्षणं तमः प्रविशन्ति । ततो भूय इव ते तमः । ततोऽपि बहुतरम् । इवोऽनर्थकः । ते तमः प्रविशन्ति । ये उ उकारः कर्मोपसङ्ग्रहार्थीयः । ये सम्भूत्यामेव रताः आत्मैवास्मि नान्यात्किञ्चिदस्तीत्ययमाभिप्रायः । कर्मपराङ्मुखा ये तत्कर्मकाण्डज्ञानकाण्डयोरसम्भव इत्ययमभिप्रेत्य स्वबुद्धिमद्भुतां विभावयन्तः आत्मज्ञान एव रताः ॥ ९ ॥

अतः परमुपासनामन्त्रा उच्यन्ते । षडनुष्टुभः । यमनियमसम्बन्धवान् विज्ञानात्मा कश्चिन्नास्ति जलबुद्बुदवज्जीवाः मदशक्तिवद्विज्ञानमित्यादिनो बौद्धाः प्रस्तूय निन्द्यन्ते । ये नराः असम्भू

(१)अत्र वाराणसी० लि० पु० समंतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । इत उत्तरमुपानामन्त्राः प्रोच्यन्ते अन्धन्तमः । षडनुष्टुभः लोकायतिकाः प्रस्तूय निद्यन्ते । येषामेतद्दर्शनं जलबुद्बुदवत् जीवाः मदशक्तिवद्विज्ञानमिति अन्धं तमः प्रविशन्ति ये च असम्भूतिमुपासते मृतस्य सतः पुनः सम्भवो नास्ति अतः शरीरग्रहणात् अस्माकं मुक्तिरेव नहि विज्ञानात्मा कश्चिदस्ति यो यम नियमैः सम्बध्यते । एवं ये उपासते ते अज्ञानलक्षणं तमः प्रविशन्ति ततोऽपि बहुतरम् इव अनर्थकः तं प्रति विशन्ति ये उकारः कर्मोपसंग्रहार्थीयः । ये सम्भूत्यामेव रताः आत्मैवास्ति नान्यत्किञ्चिदस्तीत्ययमभिप्रायः कर्मपराङ्मुखा यत्कर्मकाण्डज्ञानकाण्डयोरसंबन्ध इत्येवमभिप्रायः स्वबुद्धिफल्गुतामविभावयन्तः । आत्मज्ञानमाश्ररताः ॥ ९ ॥

तिमसम्भवमुपासते मृतस्य पुनः सम्भवो नास्ति अतः शरीरान्तेऽस्माकं मुक्तिरेवेति वदन्ति ते अन्धं तमोऽज्ञानलक्षणं प्रविशन्ति । ये उ ये च सम्भूत्यामेव रताः सम्भवत्यस्या इति सम्भूतिरात्मा तत्रैवासक्ताः कर्मपराङ्मुखाः स्वबुद्धिलाघवमजानाना आत्मज्ञानमात्ररताः आत्मैवास्ति नान्यत् कर्मादीनि कर्मकाण्डज्ञानकाण्डयोः सम्बन्धो नास्तीत्यभिप्रायवन्त इत्यर्थः ते नराः ततोऽन्धात्तमसो भूय इव इवशब्दोऽनर्थकः बहुतरं तमोऽज्ञानं विशन्ति ॥ अस्या ऋचोऽर्थान्तरमुच्यते अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । सम्भवनं सम्भूतिः कार्य्यस्योत्पत्तिः तस्या अन्या असम्भूतिः प्रकृतिः कारणमव्याकृताख्यम् तामसम्भूतिमव्याकृताख्यां प्रकृतिं कारणमविद्याकामकर्मबीजभूतामदर्शनात्मिकां ये उपासते ते तदनुरूपमेवान्धं तमोऽदर्शनात्मकं संसारं प्रविशन्ति । ये सम्भूत्यां कार्य्यब्रह्मणि हिरण्यगर्भाख्ये रताः ते ततस्तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति ॥ ९ ॥

**अ॒न्यदे॒वाहुः स॑म्भ॒वाद॒न्यदा॑हु॒रस॑म्भवात् । इति॑ शुश्रु॒म॒ धीरा॑णां॒ ये न॒स्तद्वि॑चचक्षि॒रे ॥ १० ॥**

(१) अन्यदेव । अन्यदेव फलम् आहुः सम्भवात् सम्भवपरिज्ञानात् अन्यच्च आहुः फलम् असम्भवपरिज्ञानात् । इति एवं शुश्रुमः श्रुतवन्तो वयम् । धीराणां वचांसि । ये धीराः नः अस्माकम् तत् ब्रह्म विचचक्षिरे आख्यातवन्तः ॥ १० ॥

अथोभयोरुपासनयोः समुच्चयकारणमवयवफलभेदमाह । सम्भ-

---

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अन्यदेव अन्यदेव फलमाहुः संभवात् संभवपरिज्ञानात् अन्यश्चाहुः फलम् असंभवात् असंभवपरिज्ञानात् इत्येवं शुश्रुमःश्रुतवन्तो धीराणां वचांसि ये धीराः नः अस्माकं तत् ब्रह्म विचचक्षिरे आख्यातवन्तः ॥ १० ॥

वात् सम्भूतेः कार्य्यब्रह्मोपासनात् अन्यदेव पृथगेवाणिमाद्यैश्वर्य्य-लक्षणं फलमाहुः कथयन्ति धीराः । तथा असम्भवात् असम्भूतेरव्याकृताद्व्याकृतोपासनादन्यदेव फलमुक्तम् अन्धं तमः प्रविशन्तीत्युक्तं प्रकृतिलय इति पौराणिकोक्तं फलमाहुः । इत्येवंविधं धीराणां विदुषां वचः शुश्रुम वयं श्रुतवन्तः ये धीराः नोऽस्माकं तत् पूर्वोक्तं सम्भूत्यसम्भूत्युपासनाफलं विचचक्षिरे व्याख्यातवन्तः ॥१०॥

**सम्भूतिञ्च विनाशञ्च यस्तद्वेदोभयंꣳ सह । विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ॥ ११ ॥**

(१)सम्भूतिं च । समस्तस्य जगतः संभवैकहेतुं च परं ब्रह्म । विनाशं च विनाशि शरीरं च । यः योगी । तदुभयं वेद जानाति । स ह एकीभूतम् । शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति । सः विनाशेन । विनाशिना शरीरेण । मृत्युं तीर्त्वा उत्तीर्य । संभूत्या आत्मविज्ञानेन । अमृतमश्नुते । अमृतत्त्वमश्नातीत्यर्थः ॥ ११ ॥

सम्भूतिं सर्वजगत्सम्भवैकहेतुं परं ब्रह्म । विनाशं विनाशोऽस्यास्तीति विनाशः अर्श आदित्वादच्प्रत्ययः विनाशधर्मकं शरीरम् । तदुभयं शरीरिशरीररूपं द्वयं यो योगी सह एकीभूतं वेद जानाति देहभिन्नोऽहं देही वासे कर्मवशादिति ज्ञात्वा शरीरेण ज्ञानोत्पत्तिकराणि निष्कामकर्माणि करोतीत्यर्थः । स विनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वान्तःकरणशुद्धिं सम्पाद्य सम्भूत्यात्मज्ञानेनामृतम-

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बइमु०पु० नास्ति । तद्यथा । संभूतिं च समस्तस्य जगतः संभवैकहेतुं च परं ब्रह्म विनाशं च विनाशि च वपुः शरीरं यो योगी तदुभयं वेद जानाति सह एकीभूतं शरीरग्रहणेन ज्ञानोत्पत्तिहेतूनि कर्माणि करोति सविनाशेन विनाशिना शरीरेण मृत्युं तीर्त्वा उत्तीर्य संभूत्या आत्मपरिज्ञानेन अमृतत्वं प्राप्नोति ॥ ११ ॥

श्नुते मुक्तिं प्राप्नोति ॥ अस्या ऋचोऽर्थान्तरम् । यथा । सम्भूत्युपासनयोरेकपुरुषार्थत्वात्समुच्चय एव युक्त इत्याह । अत्र विनाशशब्दद्वये अवर्णलोपो द्रष्टव्यः पृषोदरादित्वात् अन्यदाहुरसम्भवादित्युक्तेः । सम्भूतिमविनाशं च व्याकृताव्याकृतोपासनद्वयं यः सह वेद उभयमुपास्त इत्यर्थः स योगी अविनाशेनाव्याकृतोपासनेन मृत्युमनैश्वर्य्यमधर्मकामादिदोषजातं च तीर्त्वातिक्रम्य सम्भूत्या हिरण्यगर्भोपासनेनामृतं प्रकृतिलयलक्षणमश्नुते ॥ ११ ॥

अन्धं तमः प्र॒वि॑शन्ति॒ येऽवि॑द्यामु॒पास॑ते । त॒तो भूय॑ इ॒व ते तमो॒ य उ॑ वि॒द्याया॑ᳪं र॒ताः ॥ १२ ॥

(१) अन्धन्तमः । अज्ञानलक्षणं तमः प्रविशन्ति । ये अविद्याम् स्वर्गाद्यर्थानि कर्माणि उपासते अनुतिष्ठन्ति । ततोऽपि बहुतरम् इवोऽनर्थकः । ते तमः प्रविशन्ति । ये उ ये पुनः । विद्यायामेव रताः । आत्मज्ञान एवाकृतकर्माणो रता नराः ॥१२॥

ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषन्ते तान् प्रत्युच्यते । विद्याविद्ययोः समुच्चिचीषया प्रत्येकं निन्दोच्यते । विद्याया अन्या अविद्या कर्म । ये जना अविद्यामग्निहोत्रादिलक्षणां केवलामुपासते स्वर्गार्थानि कर्माणि केवलमनुतिष्ठन्ति ते अन्धमदर्शनात्मकं तमोऽज्ञानं प्रविशन्ति संसारपरम्परामनुभवन्तीत्यर्थः । ततस्तस्मादन्धात्मकात्तमसो भूय इव बहुतरमेव तमः ते प्रविशन्ति ये उ ये पुनर्विद्यायामात्मज्ञाने देवताज्ञाने एव रताः कर्माणि हित्वा कर्माकरणे प्रत्यवायोत्पत्त्यान्तःकरणशुद्ध्यभावेन ज्ञानानुदयादिति भावः ॥१२॥

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अन्धं तमः । अज्ञानलक्षणं तमः प्रविशन्ति ते तद्विशन्ति ये अविद्यां स्वर्गार्थानि कर्माणि उपासते अनुतिष्ठन्ति ततोऽपि ते बहुतरं तमः प्रविशन्ति ये विद्यायामेव रताः आत्मज्ञान एव त्यक्तकर्माणो रताः ॥ १२ ॥

अन्यदेवाहुर्विद्यायां अन्यदाहुरविद्यायाः । इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

(१) अन्यदेव । अन्यदेव फलमाहुः विद्यायाः आत्मज्ञानादन्यच्च आहुः अविद्यायाः कर्मण इति शुश्रुमेत्यादि व्याख्यातम् ॥ १३ ॥

तयोः फलभेदमाह । विद्याया आत्मज्ञानस्य फलमन्यदेवाहुरमृतरूपम् अविद्यायाः कर्मणश्च फलं पितृलोकरूपमन्यदेवाहुः धीराः, कर्मणा पितृलोको विद्यया देवलोक इति श्रुतेः । ये धीराः धीमन्तः आचार्य्याः नोऽस्मभ्यं ज्ञानं कर्म च विचचक्षिरे व्याचख्युः । तदुक्तम् इत्येवं धीराणां वचः शुश्रुम श्रुतवन्तः ॥ १३ ॥

विद्याञ्चाविद्याञ्च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ १४ ॥

(२) विद्यां च । आत्मज्ञानं च अविद्यां कर्म च यस्तदुभयं वेद जानाति सह एकीभूतं कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतमथ कर्मकाण्डं ज्ञानकाण्डं च एकीकृत्य अविद्यया कर्मकाण्डेन मृत्युं तीर्त्वोत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपरिज्ञानेनामृतत्वं मोक्षमश्नुते प्राप्नोति ॥ १४ ॥

---

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु० पु० नास्ति । तद्यथा । अन्यदेव फलमाहुः । विद्याया आत्मज्ञानात् अन्यच्चाहुः । अविद्यायाः कर्मणः इति शुश्रुमेत्यादि व्याख्यातम् ॥ १३ ॥

(२) अत्र वाराणसी० लि०पु०संमतोऽयं पाठक्रमः मुम्बइमु०पु० नास्ति । तद्यथा । विद्यां च आत्मज्ञानं च कर्म च यस्तदुभयं वेद जानाति सह एकीभूतं कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतम् । अथ कर्मकाण्डं ज्ञानकाण्डम् एकीकृत्य अविद्यया कर्मकाण्डेन मृत्युमुत्तीर्य कृतकृत्यो भूत्वा विद्यया ब्रह्मपरिज्ञानेन अमृतत्वं प्राप्नोति॥१४॥

समुच्चयमाह । विद्यां देवताज्ञानमविद्यां कर्म च तदुभयं विद्याविद्यारूपं द्वयं यः सह वेद एकीकृत्य वेद एकेन पुरुषेणानुष्ठेयं जानाति कर्मकाण्डं ज्ञानकाण्डस्य गुणभूतमित्यर्थः । सोऽविद्ययाग्निहोत्रादिकर्मणा मृत्युं स्वाभाविककर्मज्ञानं मृत्युशब्दवाच्यं तीर्त्वोत्तीर्यान्तःशुद्ध्या कृतकृत्यो भूत्वा विद्यया देवताज्ञानेनामृतं देवतात्मभावमश्नुते प्राप्नोति तद्धि अमृतमुच्यते यद्देवतात्मगमनमिति श्रुतेः ॥ १४ ॥

वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ओ३म् क्रतो स्मर क्लिबे स्मर कृतꣳ स्मर ॥ १५ ॥

( १ ) इदानीमित्थंकृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरकाले यद् भवति तदाह । वायुरनिलम् । वायुग्रहणमिन्द्रियाण्येकादश महाभूतानि पञ्च जीवात्मकः एवं सप्तदशकलिङ्गोपलक्षणार्थं वायुः प्राणोऽनिलं स्वकीयां प्रकृतिमापद्यते अमृतं परं ब्रह्म तद्धि तद्विज्ञाय सम्पद्यते । अथेदं स्थूलशरीरं

(१) अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति तद्यथा । इदानीम इत्थं कृतब्रह्मोपासनस्य योगिनः शरीरपातोत्तरकालं यद्भवति तदाह वायुग्रहणं सप्तदशकलिङ्गोपलक्षणार्थं वायुः प्राणाः अनिलं स्वकीयां प्रकृतिमापद्यते अमृतं परं ब्रह्म तद्धि तत् ज्ञानाय सम्पद्यते अथ इदं स्थूलशरीरं कीदृशं तदा भवति भस्मैव भवति कृतप्रयोजनत्वात् इदानीं योगिनोऽवलम्बनभूतम् अक्षरं कथ्यते ओम् नाम वा प्रतिमा वा ब्रह्मणः । इदानीम् अन्तकाले योगी स्मरणं करोति क्रतो स्मर योऽग्निर्ब्रह्मचर्ये गार्हस्थ्ये च परिचरितः स मनःश्वासरूपेणावस्थितः संबोध्यते हे क्रतो मां स्मर इदानीमुपस्थितः प्रत्युपकारस्य काल इत्यभिप्रायः । क्रतुर्वा यज्ञः संबोध्यते क्रतो स्मर क्लिबे कलमाय लोकाय स्मर कृतं स्मर मया यत्कृतं तत्स्मर ॥ १५ ॥

कीदृशं तदा भवति भस्मान्तम् भस्मैव भवति कृतप्रयोजनकत्वात्। इदानीं योगिनः आलम्बनभूतमक्षरं कथ्यते ॐ इति नाम वा प्रतिमा वा ब्रह्मणः। इदानीमन्तकाले योगी स्मरणं करोति। क्रतो स्मर। योऽग्निर्ब्रह्मचर्यादारभ्य परिचरितः सः मनःश्वासरूपेणावस्थितः सम्बोध्यते। हे क्रतो मां स्मरेदानीमुपस्थितः प्रत्युपकारस्य काल इत्यभिप्रायः। क्रतुर्वा यज्ञः सम्बोध्यते। क्रतो स्मर क्लिबे स्मर क्लृप्ताय लोकाय स्मर कृतं स्मर मया यत्कृतं तत्स्मर॥ १५॥

अथ कृतोपासनो योगी अन्तकाले प्रार्थयते। द्वे यजुषी। अथेदानीं परीष्यतो मम वायुः प्राणः वायुग्रहणं सप्तदशकालिङ्गोपलक्षणार्थम् सप्तदशात्मकलिङ्गरूपः प्राणोऽध्यात्मपरिच्छेदं हित्वाधिदैवतरूपं सर्वात्मकममृतं सूत्रात्मानमनिलं वायुं प्रतिपद्यतामिति वाक्यशेषःवायुर्वाव गौतमसूत्रं वायुना गौतम सूत्रेणेदꣳसर्वꣳ संदृब्धमिति श्रुतेः (बृहदारण्य० माध्य०३, ५, ६,) ज्ञानकर्मसंस्कृतं लिङ्गमुत्क्रामत्वित्यर्थः। अथ इदं स्थूल शरीरमग्नौ हुतं सत् भस्मान्तं भस्मरूपं भूयात् भस्मान्तः स्वरूपं यस्य तत् कृतप्रयोजनत्वात्॥ अथ योगिनो ऽवलम्बभूतमक्षरमुच्यते ओमिति ब्रह्मणः प्रतिमा नाम वा। अस्य ब्रह्म ऋषिः गायत्री छन्दः परमात्मा देवता वेदारम्भे होमे शान्तिपुष्टिकर्मसु काम्येसु नैमित्तिकेष्वपि कर्मसु विनियोगः। ओंप्रतीकात्मकत्वात्सत्यात्मकपरन्याख्यं ब्रह्माभेदेनोच्यते हे ओम्! हे क्रतो सङ्कल्पात्मक! स्मर यन्मम स्मर्त्तव्यं तस्यायं कालः प्रत्युपस्थितोऽतः स्मर यस्त्वं ब्रह्मचर्ये गार्हपत्ये च मया परिचरितस्तत् स्मर। क्लिबे स्मर कल्प्यते भोगायेति क्लृप् लोकः तस्मै स्मर जशादेश आर्षः छन्दस्युभयथेति पदान्तत्वात् मयास्मै अयं लोको दातव्यस्तस्मै क्लृप्ताय लोकाय स्मर। कृतं स्मर यन्मया बाल्यप्रभृत्यनुष्ठितं कर्म तच्च स्मर। स्मरेत्यस्यावृत्तिरादरार्था। क्रतो त्रिभिर्यजुर्भिरन्ते यज्ञान् योगी स्मारयतीति कात्यायनः (अनुक्रम० ४, ९)॥ १५॥

अग्ने नयं सुपथां राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमंउक्तिं विधेम ॥ १६ ॥

( १ ) अग्ने नय । हे अग्ने नय सुपथा देवयानेन मार्गेण राये मुक्तिलक्षणाय धनायास्मान्विश्वानि सर्वाणि देव दानादिगुणयुक्त वयुनानि प्रज्ञानानि विद्वाञ्जानानः युयोधि पृथक्कुरु च अस्मत् अस्मत्तः जुहुराणम् प्रतिबन्धकमेनः पापम् । यतो भूयिष्ठान्ते नमउक्तिं विधेम बहुतरां तव नमस्कारोक्तिं कुर्मः व्याख्यातायाः पुनर्वचनं विशेषार्थम् ॥ १६ ॥

पुनरन्येन मन्त्रेणाग्न्याख्यं ब्रह्म प्रति योगी मार्गं याचते । अगस्त्यदृष्टाग्नेयी त्रिष्टुप् व्याख्यातापि ( ५. ३६ ) विशेषाय पुनर्व्याख्यायते । हे देव दानादिगुणयुक्त ! हे अग्ने ! अस्मान् सुपथा शोभनेन मार्गेण देवयानेन नय सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थम् गतागतलक्षणेन दक्षिणमार्गेण निर्विण्णोऽहम् अतोऽग्ने ! त्वां याचे पुनर्गमनागमनवर्जितेन शोभनेन पथास्मान् कर्मफलविशिष्टान्नय । किमर्थम् ? राये धनाय मुक्तिलक्षणाय कर्मफलभोगायेत्यर्थः । किंविधस्त्वम् ? विश्वानि सर्वाणि वयुनानि कर्माणि प्रज्ञानानि वा विद्वान् जानन् । किञ्च जुहुराणं हुर्च्छा कौटिल्ये शानचि जुहोत्यादित्वेन रूपम् कुटिलं प्रतिबन्धकं वञ्चनात्मकमेनः पापमस्मत् अस्मत्तः सकाशात् युयोधि पृथक्कुरु वियोजय नाशयेत्यर्थः यु मिश्रणामिश्रणयोः ह्वादित्वाच्छब्लोपाद्वित्वे छान्दसं हेर्धि-

(१) अत्र वाराणसी०लि०पु० संमतोऽयं पाठक्रमः मुम्बईमु०पु० नास्ति । तद्यथा । अग्ने नय हे अग्ने नय सुपथा देवयानेन मार्गेण राये मुक्तिलक्षणाय धनाय अस्मान् विश्वानि सर्वाणि देव हे दानादिगुणयुक्त वयुनानि प्रज्ञानानि विद्वान् जानानः पृथक् कुरु च प्रतिबन्धनमेनः यतः बहुतरां तव नमस्कारोक्तिं कुर्मः व्याख्यातायाः पुनर्वचनं विशेषार्थम् ॥ १६ ॥

त्वम् ततो विशुद्धा वयं ते तुभ्यं भूयिष्ठां बहुतरां नमउक्तिं नमस्कारवचनं विधेम कुर्य्याम इदानीं सपापत्वात्तव परिचर्य्यां कर्तुं न शक्नुमस्ततस्त्वया पापनाशे कृते शुद्धा वयं नमस्कारेण त्वां परिचरेमेत्यर्थः ॥ १६ ॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । योऽसावादित्ये पुरुषः सोऽसावहम् ॥ ओ३म् खं ब्रह्म ॥ १७ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां चत्वारिंशोऽध्यायः ॥ ४०

(१) हिरण्मयेन । इदानीमादित्योपासनमाह । यद्यपि

(१)अत्र वाराणसी० लि० पु० संमतोऽयं पाठक्रमः मुम्बई मु०पु० नास्ति । तद्यथा । हिरण्मयेन पात्रेण । इदानीमादित्योपासनमाह यद्यपि हिरण्यरूपेण पात्रेण पिबन्त्यस्मिन् अवस्थितान् रसान् रश्मय इति पात्रं मण्डलं मण्डलेन सत्यस्याविनाशिनः पुरुषस्य अपिहितम् अन्तर्हितं मुखं शरीरं तथापि योऽसवादित्ये पुरुषो योगिभिरुपलक्ष्यते सोऽसौ अहम् अस्मै एतां चोपासनां कुर्यात् ॥ ओम् खं ब्रह्म । ओमिति नामनिर्देशः आकाशरूपं ब्रह्मध्यायेत् आत्मत्वेन मयोभूः अचेतन आकाशः चेतनस्त्वात्मा तद्यथा । विज्ञानघनानन्दं ब्रह्म तत्रानन्दप्रतिपादकवाक्यं स यो मनुष्याणाᳪराद्धः समृद्धो भवति इत्युपक्रम्य अथ ये एवं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोके आनन्द इति तथा सर्वानियन्तृत्वं दर्शयति । एतस्य वा अक्षरस्य प्रशासने गार्गी त्युपक्रम्य द्यावापृथिवी विधृते तिष्ठत इति तथा सर्वज्ञत्वं दर्शयति तथा एतदक्षरं गार्गि अदृष्टं द्रष्टेति तथा सत्यसङ्कल्पादयोऽस्य गुणाः श्रूयन्ते सत्यसङ्कल्पः सत्यधृतिरित्यादयः । एवं तर्हि एतद्वै तदक्षरं गार्गि यस्मिन्नाकाशः ओतश्च प्रोतश्चेति सामान्यात् । आकाशेनैवैतद्रूपं ब्रह्माभिहितं स्यादिति अयमेव ब्रह्मवित्सिद्धान्तः ॥ १७ ॥

इति श्रीमदुव्वटकृतौ मन्त्रभाष्ये चत्वारिंशोऽध्यायः ॥ ४० ॥
समाप्तं चेदं मन्त्रभाष्यम् ।

हिरण्मयरूपेण पात्रेण येन रौप्यमयेन पात्रेण । पिबन्त्यस्मिन्न-
वस्थितान् रसान् रश्मय इति पात्रं मण्डलम् । तेन पात्रेण मण्ड-
लेन सत्यस्याविनाशिनः पुरुषस्य अपिहितमन्तर्हितम् । मुखं
शरीरम् । तथापि यः असौ आदित्यः पुरुषः योगिभिरुपल-
क्ष्यते । सः असौ अहम् अस्मि । एतां चोपासनां कुर्यात्
ओं खं ब्रह्म । ओमिति नाम निर्देशः । आकाशस्व-
रूपं ब्रह्म ध्यायेत् आत्मत्वेन । नन्वचेतन आकाशः चेतन
आत्मा । तद्यथा विज्ञानमानन्दं ब्रह्म इति तत्रानन्दप्रतिपा-
दकवाक्यम् । स यो मनुष्याणां राद्धः समृद्धो भवतीत्युप-
क्रम्य अथ । शतं ये प्रजापतिर्लोक आनन्दाः स एको ब्रह्म-
लोक आनन्द इति तथा सर्वनियन्तृत्वं दर्शयति । एतस्य
वा अक्षरस्य प्रशासेन गार्गीत्युपक्रम्य । द्यावापृथिवी वि-
धृते तिष्ठत इत्यादि । तथा सर्वज्ञत्वं दर्शयति । यद्वा एत-
मक्षरं गार्गि अदृष्टं दृष्ट इत्यादि । तथा सत्यसङ्कल्पादयोऽस्य
गुणाः श्रूयन्ते । सत्यसङ्कल्पः सत्यधृतिरित्यादि । यद्येवं तर्हि
एतद्वै तदक्षरं गार्गि अस्मिन्वा ओतश्च प्रोतश्चेति ओतप्रोतसामा-
न्यात् आकाशेनैवैतद्रूपं ब्रह्माभिहितं स्यादिति । अयमेव च
ब्रह्माभिहितं स्यादिति । अयमेव च ब्रह्मावित्सिद्धान्तः ॥ १७॥

इति उव्वटकृतौ मन्त्रभाष्ये चत्वारिंशत्तमोऽध्यायः समाप्तः॥४०॥

आनन्दपुरवास्तव्यवज्रटाख्यस्य सूनुना ।
उव्वटेन कृतं भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥
ऋष्यादींश्च नमस्कृत्य अवन्त्यामुव्वटो वसन् ।
मन्त्राणां कृतवान् भाष्यं महीं भोजे प्रशासति ॥ २ ॥
शिवः शिवङ्करोतु नः ॥ विश्वेश्वरो विजयतेतराम् ॥

पुनरादित्योपासनमाह । उष्णिक् यजुर्ब्राह्म्यन्ता उष्णिक् त्रिपादा-ख्यो द्वादशक इति वचनात् । हिरण्मयमिव हिरण्मयं ज्योतिर्मयं यत् पात्रम् पिबन्ति यत्र स्थिता रश्मयो रसानिति पात्रं मण्डलम् तेन तेजोरूपेण मण्डलेन सत्यस्यादित्यमण्डलस्थस्याविनाशिनः पुरुषस्य मुखं शरीरमपिहितमाच्छादितं वर्त्तते । तथापि यः असौ प्रत्यक्षः आदित्ये रविमण्डले पुरुषः पुरुषाकारत्वात् पूर्णमनेन प्राणबुद्ध्यात्मना जगत्समस्तमिति वा पुरुषः पुरि शयनाद्वा स मण्डलस्थः पुरुषः असौ प्रत्यक्षः कार्य्यकारणसङ्घातप्रविष्टोऽहमस्मि । एतां चोपासनां कुर्य्यादित्यर्थः ॥ ओम् खं ब्रह्मेति यजुषी । ओ३मिति नामनिर्देशो ब्रह्मणः खं ब्रह्मेत्याकाशरूपमन्ते ब्रह्म ध्यायेत् ( अनुक्रम० ४, ९ ) यद्यपि ब्रह्म चेतनमाकाशस्त्वचेतनस्तथाप्येकदेशो सादृश्यम् नभोवद् व्यापकं ब्रह्म ओमिति जपन् ध्यायेदित्यर्थः । सूर्य्यमण्डलस्थः पुरुषोऽहमेवेत्यभेदेन चिन्तयेत् ॥ १७ ॥

अथ विचारः । विद्यां चाविद्यां चेत्यत्र ( क० १४ ) विद्याशब्देन किं मुख्या परमात्मविद्योच्यते उतोपासना वा अमृतमश्नुत इत्यत्र ( क० १४ ) अमृतशब्देन साक्षान्मुक्तिरुत्तरमार्गेण परम्परया वा । नाद्यः । विद्याकर्मणोर्यस्तद्वेदोभयꣳ सहेति ( क० १४ ) समुच्चयानुपपत्तेः तयोर्विरोधात् विद्योत्पत्तौ तदाश्रयेऽविद्यानुत्पत्तेः वह्निरुष्णः प्रकाशश्चेति ज्ञानोत्पत्तौ शीतोऽग्निरप्रकाशश्चेति अविद्योत्पत्तिर्न सम्भवति नापि संशयोऽज्ञानं वा यस्मिन सर्वाणि भूतान्यात्मैवाभूद्विजानतःतत्र को मोहः कः शोक इत्युक्तत्वात् । किञ्च विद्याशब्देन परमात्मविद्याग्रहणे अग्ने नयेति सुपथयाचनमनुपपन्नम् । तस्माद्विद्योपासना अमृतं चापेक्षिकमिति दिक् ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
ध्यरमश्चरमोऽध्यायः परमात्मनिरूपकः ॥ ४० ॥

शुक्लयजुर्वेदस्य मन्त्रभागः समाप्तः ॥
समाप्तोऽयं ग्रन्थः ।

# सभाष्यशुक्लयजुर्वेदपरिशिष्टानि ।

## वेदपारायणविधिः ।

श्रीवेदपुरुषाय नमः ॥ स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय सम्परिस्तीर्याज्येनैताभ्यो देवताभ्यो जुहोति अग्नये सोमायेन्द्राय विश्वेभ्यो देवेभ्यः ऋषिभ्य ऋग्भ्यो यजुर्भ्यः सामभ्यः श्रद्धायै प्रज्ञायै मेधायै धारणायै श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषये अग्नये काण्डऋषये विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः संहिताभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्य ऋग्गणेभ्योऽनुमत्यै स्विष्टकृते च पृथक्स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदस्य काण्डर्ष्यादिवर्ज्यमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायाऽत्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानीभ्यो देवताभ्यः क्षुद्रसूक्तेभ्यो महासूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य सन्ततमधीयीतेत्याह भगवान्बौधायनः । इति वेदपारायणोपक्रमविधिः ॥ ॥ अथ वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः ॥ तीर्थे देवालये गेहे प्रशस्ते सुपरिष्कृते । कलशं सुदृढं तत्र सुनि(१)र्णिक्तं विभूषितम् । पुष्पपल्लवमालाभिश्चन्दनैः कुङ्कुमादिभिः । मृत्तिकाभिश्च संमिश्रवेदिमध्ये न्यसेत्ततः । पञ्चाशद्भिः कुशैः कार्यो ब्रह्मा पश्चान्मुखस्थितः । स्नापितः स्थापितः कुम्भे चतुर्बाहुश्चतुर्मुखः । वत्सजान्वाकृतिं दण्डमुत्तराग्रैः कुशैः कृतम् । ब्रह्मोपधाने दत्त्वा तं ततः स्वस्त्ययनं पठेत् । प्रतिष्ठां कारयेत्पश्चात्पूजाद्रव्यमथोच्यते । यज्ञोपवीतनैवेद्यवस्त्रचन्दनकुङ्कुमैः । स्रग्धूपदीपताम्बूलैरक्षतैश्च पितामहम् । ब्रह्मजज्ञानमिति वा गायत्र्या वा प्रपूजयेत् । उपाध्यायश्च सम्पूज्यो यथापाठं पठेत्ततः । इति वेदपारायणे कलशप्रतिष्ठापनादिप्रकारः ॥

(१) निर्णिक्तं प्रक्षालितम् ।

## अनध्यनत्पारायणविधिः ।

श्रीः ॥ अथातोऽनध्यनत्पारायणविधिं व्याख्यास्याम आसमासेर्नाश्नीयात् यथाशक्ति वापः पयः फलान्योदनं वा हविष्यमल्पं भुक्त्वा तदा शेषमधीयीत । ग्रामात्प्राचीमुदीचीं वा दिशमुपगम्याग्निमुपसमाधाय परिस्तीर्येध्मं प्रदायाज्येनैताभ्यो देवताभ्यो जुहोति अग्नये सोमायेन्द्राय प्रजापतये बृहस्पतये विश्वेभ्यो देवेभ्यो ब्रह्मणे ऋषिभ्य ऋग्भ्यो यजुर्भ्यः श्रद्धायै मेधायै प्रज्ञायै धारणायै सदसस्पतये अनुमतये श्रियै ह्रियै सावित्र्यै सवित्रे प्रजापतये काण्डऋषये सोमाय काण्डऋषये विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः संहिताभ्यो देवताभ्य उपनिषद्भ्यो याज्ञिकीभ्यो देवताभ्य उपनिषद्भ्यो वारुणीभ्यो देवताभ्य उपनिषद्भ्यो हव्यवाहाय विश्वेभ्य ऋग्गणेभ्य अनुमत्यै स्विष्टकृते च पृथक् स्वाहाकारेण हुत्वा व्याहृतिभिश्च पुनः परिषिञ्चति । समाप्ते चैता यजुषा तर्पयति । एवमृग्वेदिनां काण्डर्ष्यादिवर्जमास्विष्टकृतस्तेषां स्थाने शतर्चिभ्यो माध्यमेभ्यो गृत्समदाय विश्वामित्राय वामदेवायात्रये भरद्वाजाय जामदग्न्याय गौतमाय वसिष्ठाय प्रगाथेभ्यः पावमानिभ्यः क्षुद्रसूक्तेभ्यो महानाम्नीभ्य इति । ततो वेदादिमारभ्य सन्ततमधीयीत नास्यान्तरानध्यायो नास्यान्तरा जननमरणे अशुची नान्तरा व्याहरेन्नान्तरा विरमेद्यावन्तमधीयीत । यद्यन्तरा विरमेत् त्रीन्प्राणायामानायम्य प्रणवं वा प्रणिधाय यावत्कालमधीयीत । ततः सर्वे निशो निशान्तरं सङ्गामारण्यसलिलं प्रलोप्य परिदध्यात् । आद्यावन्ते च ब्राह्मणभोजनं दक्षिणादानं च दद्यात् । एतेन विधिना वेदमधीयीत सततः पूतो वेदो भवति मनःशुद्धश्च भवति द्वाभ्यां परायणाभ्यां ऋग्भिश्च भोजन ह्यधीते अनृतेभ्यः प्रमुच्यते त्रिभिर्बहुभ्यः पातकोपपातकेभ्यः शूद्रायां रेतःसिक्त्वा गङ्गासु निमज्जंश्च भवति । चतुर्भ्यः शूद्रान्नभोजनात्सत्सेवनात्तत्स्त्रीसेवनाच्च पञ्चभिरयाज्ययाजनात्पूतो भवति । अग्राह्यग्रहणाद्ग्राह्याग्रहणादभ्यासोपासनाच्च षड्भिर्ब्राह्मणस्य लोहितकरणात्स्त्रीलोहितकरणात्पशुहननात्सुवर्णस्तेयात्पतिसम्प्रयोगाच्च सप्तभिः प्राजापत्यानां हीनाचरणात् । यज्ञोपवेधनाच्च अष्टभिश्चान्द्रायणस्यान्तरानाचरणाद्गुरुतल्पगमनाद्रजस्वलागमनाच्च नवभिः सुरापानाच्च दशभिरश्रोत्रिययाजनात् असोमपानात् अ-

न्यायतश्च एकादशभिर्ब्राह्मणहननाद्गर्भहननादूर्ध्वादशभिः पूर्वजन्मेहजन्मकृतैः सर्वैः पापैः प्रमुच्यते स्वर्गलोकं गच्छति पितॄन्स्वर्गलोकं गमयति अग्निष्टोमादीन्क्रतून्यजति तैः क्रतुभिरिष्टं भवति । वेदाध्यायी सदैव स्याद्यथा हि सत्यवाक्शुचिः । यं यं कामयते कामं तं तं वेदेन साधयेत् । असाध्यं नास्ति यत्किञ्चिद्ब्राह्मणो हि फलं महत् ब्राह्मणो हि फलं महादिति । समाप्तौ यजुषा तर्पयतीति । वेदपारायणे समाप्ते एता देवताः पूर्वोक्ता अग्निसोमाद्यजुषा तर्पयति यजुर्वेदपारायणे तस्य वेदस्य प्राधान्यमुच्यते । अथवा भूरादिव्याहृतिचतुष्टयात्मकं यजुःशब्देन गृह्यते तेनैतदुक्तं भवति । भूर्देवांस्तर्पयामीत्यनेन प्रकारेण तर्पयित्वा अग्निसोमादींस्तर्पयेदिति । नास्यान्तरा जननमरणे अशुची इति । नाशुचिहेतुभूते इत्यर्थः । नान्तरा व्याहरेदिति । उपक्रान्तवेदपारायणमध्ये न व्याहरेन्नाध्यापयेत् तथा लौकिकवचनमपि न ब्रूयात् । विहितं नित्यनैमित्तिकं कर्मानुपयुक्त्वा वर्कि न कुर्यादित्यर्थः । निशानिशान्तरं संग्रामारण्यसलिलं लोप्य परिदध्यादिति लोप्य छित्त्वा परिहार्यं वर्जयित्वेत्यर्थ इति यावत् । परिदध्यात् समापयेत् । निशान्तरं निशीथः संध्या वा । सलिलं वृष्टिरुदकसमीपभूमिका वा । निशादिकालान्देशांश्च वर्जयित्वा समापयेदित्यर्थः । ततः पूतो वेदो भवतीति । वेदो भवति वेदात्मको भवति उत्कृष्टज्ञानवान्भवेदित्यर्थः । द्वाभ्यां पारायणाभ्यां ऋग्भिश्चेति । ऋग्भिः पावमानीभिः पारायणद्वयं पावमान्यश्च मिलित्वोक्तफलाय कल्प्येते इत्यर्थः । एवमुत्तरत्र पारायणत्रयं गङ्गास्नानं च मिलित्वा साधनम् । निमज्जंश्च भवति पूतो भवतीत्यर्थः । प्राजापत्यानाचरणं प्रक्रान्तप्राजापत्यानामननुष्ठानम् एवं चाग्र्यायणस्यानाचरणम् । यज्ञोपवेधनं यज्ञविनाशः । इत्यनध्ययनपारायणविधिः ॥

## याज्ञवल्क्यशिक्षा ।

श्रीः ॥ अथातस्त्रैस्वर्यलक्षणं व्याख्यास्यामः । उदात्तश्चानुदात्तश्च स्वरितश्च तथैव च । लक्षणं वर्णयिष्यामि दैवतं स्थानमेव च ॥ १ ॥ शुक्लमुच्चं विजानीयान्नीचं लोहितमुच्यते । श्यामं तु स्वरितं विन्द्यादग्निमुच्चस्य दैवतम् ॥ २ ॥ नीचे सोमं विजानीयात्स्वरिते सविता भवेत् । उदात्तं ब्राह्मणं विन्द्यान्नीचं क्षत्रिय-

